# उच्चतरमाध्यमिककक्षा - संस्कृतसाहित्यम् (३४८)

## मन्त्रणामण्डलम्

**डॉ. चन्द्रभूषणशर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः, इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**डॉ. भास्करानन्द-पाण्डेयः**
उपप्राचार्यचरः
सर्वोदय-बाल-विद्यालयः, नवदेहली

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम्- राणीबाँध, मण्डलम्- बाँकुडा- ७२२१३५(प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्, नोएडा - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, २०-२६)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २-७)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः ८-१९)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः २७)**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः
संस्कृताध्ययनविभागः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतसाहित्यस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतसाहित्यस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः अनुभवश्च समेषाम्। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यतु इतीच्छा सर्वप्रबला। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। काव्यानां नैके प्रकाराः सन्ति। काव्यप्रपञ्चः च अति महान्। बहूनि च काव्यानि सन्ति। तेषु विविधानां काव्यांशानां चयनं कृत्वा अत्र पाठ्यत्वेन योजना कृता। एवञ्च ईदृक् रसस्यन्दीनि काव्यानि ये रचयतन्ति ते प्रतिभाशालिनः कवयः के इति तत्परिचयः भविष्यति। येन केनापि यत् किमपि लिखितं चेत् काव्यं न भवति। तस्य नियमाः सन्ति। ते च नियमाः काव्यशास्त्रे अन्तर्भवन्ति। नियमनिर्णायकाः अलंकारिकाः के इति तत्परिचयः अत्र स्यात्। तत्कृता नियमाश्च के इति सविस्तरं विषयः अत्र कावदर्पणः इति नाम्ना प्रकटितोऽस्ति। पारम्परिकगुरुकुलेषु यया पद्धत्या पाठः प्रदीयते तस्य अवलम्बः यथासम्भवमत्र प्रतिपादने कृतो विद्यते।

उच्चतरमाध्यमिककक्षायां प्रदत्तः संस्कृतसाहित्यम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः अस्य अध्ययनेन ज्ञानपीनः आनन्दाप्लुतः च भवेत्। अस्य पठनेन अध्येता अन्येषु काव्येषु प्रवेशाय योग्यो विधास्यते। एतत्सामग्री काव्यानां काव्यशास्त्रस्य च सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### कविपरिचयः

१. कविपरिचयः- १

२. कविपरिचयः- २

३. कविपरिचयः- ३

### काव्याध्ययनम् - १

### रघुवंशम् (प्रथमसर्गे १-४८ श्लोकाः)

४. रघुवंशम् - रघुवंशीयनृपाणां गुणवर्णनम्

५. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- १

६. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- २

७. रघुवंशम् - वशिष्ठाश्रमे गमनम्

### स्तोत्रसाहित्यम्

८. मोहमुद्गरः रामगुणकीर्तनं च

### गद्यकाव्यम्

९. शिवराजविजयः - बटुसंवादः

१०. शिवराजविजयः - योगीराजसंवादः

११. शिवराजविजयः - यवनदुराचारः

## पुस्तकम्- २

### काव्याध्ययनम् - २

### उत्तररामचरितम् (प्रथमोऽङ्कः)

१२. उत्तररामचरितम् - प्रस्तावना

१३. उत्तररामचरितम् - अष्टावक्रसंवादः

१४. उत्तररामचरितम् - चित्रदर्शनम् - १

१५. उत्तररामचरितम् - चित्रदर्शनम् - २

### शुकनासोपदेशः

१६. शुकनासोपदेशः - यौवनस्वभावः

१७. शुकनासोपदेशः - लक्ष्मीचापल्यम्

१८. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-१

१९. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-२

## पुस्तकम्- ३

### काव्यदर्पणः

२०. अलंकारिकपरिचयः -१

२१. अलंकारिकपरिचयः -२

२२. वृत्तिः

२३. छन्दसां मात्रागणयतिभेदाः

२४. छन्दांसि

२५. अलंकारः -१

२६. अलंकारः -२

२७. रसः

# संस्कृतसाहित्यम्

# उच्चतरमाध्यमिककक्षा

## प्रथमं पर्व

# १

# कविपरिचयः - १

## प्रस्तावना

संस्कृसाहित्यनभसि आर्षकवित्वेन व्यासवाल्मिक्योः महती प्रसिद्धिः दृश्यते। काव्यं कथं भवेत् इति निर्धारणाय मानदण्डत्वेन वाल्मीकिप्रणीतं रामायणम् एव गृह्यते कविभिः। अत एव वाल्मीकिः आदिकविः, रामायणं च आदिकाव्यम्। रामायणं न केवलं काव्यग्रन्थः अपि तु धर्मग्रन्थः अपि अस्ति। रामायणं हि मानवजीवनस्य सर्वस्वम् अस्ति। रामायणं हि श्रेयोमार्गप्रदर्शकं ज्योतिः विद्यते।

अस्ति महाभारतं हि रामायणम् इव अस्मद्राष्ट्रेतिहासः। नास्ति अस्य ग्रन्थस्य उद्देश्यम् एकमात्रं कौरवपाण्डवयोः युद्धवर्णनम्, अपि तु भारतीयधर्मस्य कात्स्न्र्येन सविस्तरं चित्रणम् अपि तदीयं लक्ष्यं विद्यते। महाभारतस्य अस्य प्रणेता हि व्यासदेवः।

संस्कृतसाहित्ये भासो हि सम्प्रतिविज्ञातनाटककृत्सु प्राचीनतमो भवति। संस्कृतसाहित्ये भासस्य बहवः ग्रन्थाः विद्यन्ते। कालिदासादयः महाकवयः अपि भासम् एव श्रेष्ठत्वेन मन्यन्ते। प्रायः त्रयोदश नाटकग्रन्थाः भासस्य नाम्नि विद्यन्ते। पाठे अस्मिन् वाल्मीकेः व्यासदेवस्य भासस्य च देशकालकृतिविषयिणी चर्चा प्रस्तूयते।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान्

- महाकवीनां विषये संक्षिप्तं परिचयं प्राप्स्यति।
- वाल्मीकेः व्यासदेवस्य भासस्य च देशकालकृतिविषये ज्ञास्यति।
- रामायणस्य महाभारतस्य कियत् माहात्म्यं वर्तते इति ज्ञातुं शक्नुयात्।
- रामायणस्य महाभारतस्य च विषयवस्तु ज्ञातुं शक्नुयात्।
- भासस्य कृतिं ज्ञातुं शक्तः भवेत्।

## १.१) वाल्मीकिः - रामायणम्

संस्कृतसाहित्ये रामायणपदेन वाल्मीकिविरचितं रामायणम् एव प्रसिद्ध्यति। भारतीयैः रामायणम् आदिकाव्यं वाल्मीकिश्च तत्प्रणेतृतया आदिकविः अभिधीयते। रामायणात् प्राचीनः

संस्कृतनिबद्धः काव्यलक्षणोपपन्नः कोऽपि ग्रन्थः न दृश्यते। रामायणे न केवलं युद्धम् एव वर्णितम् अपि तु रूपकोपमाद्यलङ्कारयुतायां भाषायां प्रकृतेः अपि वर्णनं कृतम्। अतः रामायणं काव्यम् इति स्वीक्रियते न वीरगाथामात्रं न वा शुष्केतिहासमात्रम्। संसारे किम् अपि काव्यं लोकप्रियतायां रामायणस्य समतां कर्त्तुं न क्षमते। एतस्य महाकाव्यस्य प्रणेता वाल्मीकिः। एतादृशस्य आदिकवेः देशकालकृतिविषयिणी चिन्ता अत्यन्तं कष्टसाध्या अस्ति। तथापि अन्यान् ग्रन्थान् वीक्ष्य देशकालादिकम् अनुमीयते।

## १.१.१) कालः-

वाल्मीकेः स्थितिकालविषये सम्प्रति अपि इदम् इत्थन्तया वक्तुं नैव पार्यते तथापि एतद् अनुमीयते यत् स महर्षेः व्यासात् अपि प्राचीनः आसीत्। अत्र प्रमाणम् - रामायणे महाभारतवर्णितस्य कस्यापि पात्रस्य नाम न उपलभ्यते, महाभारते तु रामकथा वर्णिता लभ्यते। महाभारतस्य सप्तमपर्वणि लङ्काकाण्डगतं पद्यद्वयं प्राप्यते।

बौद्धधर्मस्य उदयात् प्राक् एव वाल्मीकिः आसीत्। रामायणीया रामकथा कियता परिवर्तनेन दशरथजातकनाम्ना जातकग्रन्थस्य अङ्गभावं प्राप्ता। तत्र पालिभाषया अनूदितं पद्यम् अपि प्राप्यते।

मृगयायां दशरथः श्रवणकुमारं हतवान् इति रामायणकथा सामजातके वर्ण्यते। बौद्धसाहित्यस्य विशेषज्ञः सिल्वाँलेविमहोदयः स्पष्टम् अभिप्रैति यत् सद्धर्मस्मृत्युपस्थाननाम्नः बौद्धग्रन्थस्य मूलं रामायणम् अवश्यं भवति। सद्धर्मस्मृत्युपस्थाने वर्त्तमानं जम्बूद्वीपवर्णनं रामायणस्थितदिग्वर्णनम् अनुहरति।

एवञ्च याकोविमहोदयः भाषाविज्ञानद्वारा बौद्धकालपूर्वभवत्वं रामायणस्य प्राह।

एभिः प्रमाणैः रामायणस्य बुद्धपूर्वकालिकता सिद्ध्यति। अत एव ज्ञायते यत् बौद्धकालात् प्राक् अपि वाल्मीकिः आसीत्।

रामायणे कोसलराजधानी अयोध्या इति आख्यायते। बौद्धजनः यवनः पतञ्जलिः च कोसलराजधानी साकेत इति कथयति। अतः सिद्ध्यति यत् अयोध्यायाः अभ्युदये वर्तमाने साकेत इति नामकरणात् पूर्वम् एव रामायणं रचितवान्।

जैनकविः विमलसूरिः प्राकृतभाषानिबद्धे स्वीये "पउमचरिआ" इति नामके ग्रन्थे रामचरितं रचितवान्। "पउमचरिआ" ६२ ई. समये रचितवान्। अतः ज्ञायते यत् ततः प्राचीनं रामायणं भवति स्म।

पाटलिपुत्रस्य प्रतिष्ठापनम् अजातशत्रुणा ५०० ई. पू. समये कृतम्। अयम् एव राजा शत्रोः आक्रमणात् रक्षार्थं गङ्गाशोणयोः संगमस्थले दुर्गम् एकं निर्मितवान्। रामायणे गङ्गाशोणयोः संगमात् श्रीरामगमनं वर्णितम् अस्ति, किन्तु दुर्गस्य उल्लेखः नास्ति। तेन स्पष्टं प्रतीयते यत् रामायणं ५००ई. पू. समयतः पूर्वकालिकम्।

रामायणे विशिला मिथिला चेति द्वे राज्ये स्तः। बुद्धस्य समये इमे द्वे नगर्यौ वैशालीराज्यान्तर्गतौ एव वर्णिते। अनेन अपि ज्ञातुं शक्यते यत् रामायणं बुद्धात् प्राचीनम् आसीत्।

रामायणे भारतस्य नानानरपतिशासितानेकलघुराज्यविभक्तत्वं वर्ण्यते। इयं च भारतस्य दशा बुद्धपूर्वकाल एव आसीत्। अनेन अपि ज्ञातुं शक्यते यत् रामायणं बुद्धात् प्राचीनम् आसीत्।

एभिः सर्वैः प्रमाणैः प्रतीयते यत् रामायणं ख्रीष्टपूर्वपञ्चमशतकात् पूर्वमेव कदाचित् प्रणीतं न तु ततः अर्वाक्। अत एव वाल्मीकेरपि कालः ख्रीष्टपूर्वपञ्चमशतकात् पूर्वम् आसीत् इति।

## १.१.२) कृतिः -

वाल्मीकिः रामायणं रचितवान्। वाल्मीकेः कवित्वज्ञानाय रामायणम् एव पर्याप्तम् अस्ति। वाल्मीकिना स्वकाव्यकलायाः प्रतिपादनाय यत्पात्रम् आधारीकृतं तस्य रामस्य चरितम् एव तादृशं यत्तद् आधारीकृत्य कोऽपि कविः साफल्यम् आसादयेत्। रामायणे चतुर्विंशतिः सहस्राणि श्लोकाः सन्ति। अतः चतुर्विंशतिसाहस्रीसंहितापदेन रामायणम् अभिधीयते। यावन्ति अक्षराणि गायत्रीमन्त्रे तावत्सहस्रपरिमाणं रामायणम् इति दृढम्। इदम् अपि प्रत्यक्षसिद्धं यत् प्रतिसहस्रतमश्लोकादौ गायत्रीमन्त्रस्य एकैकम् अक्षरं प्राप्यते। रामायणे ५०० सर्गाः सन्ति। अत्र सप्त खण्डाः सन्ति। बहवः विद्वांसः उत्तरकाण्डं बालकाण्डस्य कियन्तम् अंशं च प्रक्षिप्तं कथयन्ति। बालकाण्डस्य प्रथमे तृतीये च सर्गे या विषयसूची वर्तते तत्रोत्तरकाण्डवर्णिता बालकाण्डगततदंशवर्णिताश्च विषयाः न आयान्ति इति च तेषां तादृशकथने हेतुः भवति। याकोविमहोदयस्तु अयोध्याकाण्डम् आरभ्य युद्धकाण्डान्तं काण्डपञ्चकम् एव बाल्मीकिकृतं मन्यते। लङ्काकाण्डस्य अन्ते ग्रन्थः समाप्त इव प्रतिभाति। रामायणे सप्त खण्डाः विद्यन्ते। तत्र च बालाख्ये काण्डे प्रथमे खण्डे रामस्य यौवनमुखं वर्णितम् अस्ति। तत्रापि विश्वामित्रेण मुनिवरेण सह तस्य आश्रमपदं प्रति गमनम्, तत्र यागविघातकानां राक्षसानां हननं जनकजापापाणिपीडनं च इति। अयोध्याकाण्डाभिधे द्वितीये काण्डे रामस्य यौवराज्यपदाभिषेकसमारोहोपक्रमः, तत्र कैकेयीकृतः प्रत्यूहः, रामस्य निर्वासनम्, रामविरहे दशरथस्य प्राणत्यागः इति एते विषयाः विद्यन्ते। अरण्यकाण्डनाम्नि तृतीये काण्डे रामस्य दण्डकारण्यगमनम्, दण्डकारण्ये वातापिनामकराक्षसहननम्,रावणकृतं मैथिलीहरणम् इत्यादयः विषयाः विराजन्ते। किष्किन्धाकाण्डनामके चतुर्थे काण्डे रामस्य सुग्रीवेण सौहार्दं वालिनः हननं च वानरादिभिः अनुगम्यमानस्य पवनसुतस्य सीतायाः अनुसन्धानं च इति एते विषयाः चर्चिताः सन्ति। सुन्दरकाण्डाभिधाने पञ्चमे काण्डे लङ्काद्वीपस्य मनोज्ञत्वं रावणप्रासादस्य बलवच्चेतःप्रसादकत्वं हनुमतः सीतायाः सान्त्वप्रदायकत्वम् इति एते विषयाः वर्णिताः सन्ति। युद्धकाण्डनाम्नि षष्ठे काण्डे रामस्य रावणमारणम्, लङ्काजयश्च इति एते विषयाः विद्यन्ते। उत्तरकाण्डाख्ये सप्तमे काण्डे पौरजानपदेषु लब्धप्रसरः सीतागोचरः, प्रजाभिः रामस्य निन्दाकथनम्, रामराजादिष्टः सीतावनवासः, सीताशोकः, वाल्मीकेः आश्रमपदे कुशलवयोः जननं ग्रन्थपरिसमाप्तिश्च इति विस्तरेण वर्ण्यन्ते। एवञ्च वाल्मीकिः रामायणनामके ग्रन्थे रामचरित्रोपस्थापनेन आदर्शमानवचरित्रस्य वर्णनम् अकरोत्। स एव रामायणग्रन्थः सनातनधर्मस्य प्राणभूतो भवति।

### रामायणस्य कविताशैली -

सर्वप्रथमं रामायणं काव्यं वर्तते तदनन्तरम् एव धर्मग्रन्थः इतिहासग्रन्थो वा अन्यत् किञ्चित् भवति। रामायणं तावत् आद्यं संस्कृतकाव्यम्, तत्प्रणेता च वाल्मीकिः भवति। अत एव सरलं संस्कृतम्

उपलभ्यते। एवञ्च रामायणेन संस्कृतकाव्यस्य बाल्यरूपं निरूप्यते। प्रायः आदिकविः वाल्मीकिः अनुष्टुप् - छन्दसा पद्यानि रचितवान्। तथाहि आभाणकम्- "वाल्मीकेरुपज्ञा नूनमनुष्टुप्-छन्दः" इति। अथारभ्येतिपर्यन्तं सर्वत्र रामायणी भाषा विशुद्धा परिष्कृता च क्वचित् क्वचिच्च अलङ्कारमण्डितापि च विद्यते। रामायणे उपमारूपकाद्यलङ्काराणां वर्णनं विद्यते। कविः न कदापि वस्तुतत्त्वं जहाति। अत एव कविः सर्वत्र कवित्वं दर्शयितुम् इच्छति।

हेमन्तवर्णने काव्यच्छटा दृश्यताम्।

"सेवमाने दृढं सूर्ये दिशमन्तकसेविताम्।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते।।
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम्।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः।।
रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।।"इति

रावणेन बहुशः प्रार्थ्यमाना सीता यदाह तदतिरमणीयं काव्यम् इति निर्दिश्यते-

"नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा।
सिंहस्य खादतो मांसं मुखादादातुमिच्छसि।।
यो रामस्य प्रियां भार्यां बलात्त्वं हर्तुमिच्छसि।
त्वं क्षुरं जिह्वया लेक्षि सूच्या स्पृशसि लोचने।
यो रामस्य प्रियां भार्यां पापबुद्ध्या निरीक्षसे।।"इति

आदिकविः वाल्मीकिः अशोकवाटिकास्थायाः सीतायाः स्वरूपम् उपमादिभिः प्रकाशयति। यथा-

अभूतेनापवादेन कीर्त्तिं निपतितामिव।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव।
सन्नामिव महाकीर्त्तिं श्रद्धामिव विमानिताम्।
पूजामिव परीक्षीणामाशां प्रतिहतामिव।। इति

कवितायाः उद्देश्यं लोकहितं स्यात् इति वाल्मीकिः न कदापि विस्मृतवान्। अत एव चरित्रसृष्टौ वर्णने वा सर्वत्र कविः उच्चम् आदर्शं विचारं च प्रदर्शयति स्म।

"कल्याणि बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि।।" इति।

ईदृशाः उपदेशाः काव्यस्य माहात्म्यं वर्धयन्ति। एभिः एव साहित्यगुणैः वाल्मीकिः भारतीयकाव्यधारायाः हिमवान् मन्यते। तथाहि-

"कूजन्तं राम रामेति मधुरं मधुराक्षरम्।

आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्।।"इति।

### रामायणे रसः-

काव्यानाम् आदर्शभूतं रामायणम्। कवीनाम् आदर्शभूतश्च वाल्मीकिः इति कथयन्ति विद्वांसः। यदि वाल्मीकिः न अभविष्यत् तदा कवयः कीदृशा भवन्ति इति निर्णयो दुष्करः भवेत्। कवयः क्रान्तदर्शिनो भवन्ति, ते यन्मनोरमं तत्त्वं पश्यन्ति, तदेव शब्दद्वारा लोकानुपदेष्टुं रञ्जयितुं च चित्रयन्ति। स्वानुभूतवस्तुजातस्य शब्दचित्रोपस्थापनम् एव काव्यम्। रामाणयात् पूर्वम् उपनिषदादौ यद्यपि पद्यानि आसन् परन्तु तेषु लौकिकं छन्दो नासीत्, वाल्मीकिः हि सर्वप्रथमं लौकिकं छन्दोऽवतारितवान्। यावत् पर्यन्तं कवेः समक्षे वर्णनीयं वस्तु किमपि नागतं तावदयं मौनः आसीत्। यदा एव क्रौञ्चवधं करुणरसं दृष्टवान्, तदा एव अकस्मात् एव अस्य मुखात् काव्यप्रवाहः निर्गतः आसीत्। तदस्य काव्ये करुणरस एव प्रधानत्वं भजते। रस एव काव्यस्यात्मा। स च वाल्मीकेः काव्ये करुण एव संभवति। रामायणे हि करुणो रसः स्वयम् आदिकविना वाल्मीकिना प्रोक्तः। तथाहि - "श्लोकत्वमागतः" इति। भवभूतिः अपि एको रसः करुणः एव इति वदन् काव्ये करुणरसस्य एव प्राधान्यं स्वीकरोति। वाल्मीकिः अपि स्वकाव्ये तथैव स्वीकृतवान् स्यात् इति न आश्चर्यजनकम् अस्ति।

रामचरितस्य आदर्शता - वाल्मीकिना स्वकाव्यकलायाः प्रदर्शनाय यत्पात्रम् आधारीकृतं तस्य रामस्य चरितम् एव तादृशं यत् तत् आधारीकृत्य कोऽपि कविः साफल्यम् आपद्येत। तथाहि श्रूयते-

"राम तुम्हारा चरित स्वयं ही काव्य है

कोइ कवि बन जाय सहज संभाव्य है।"इति।

रामचन्द्र आदर्शभ्राता, आदर्शपतिः, आदर्शपुत्रः, आदर्शशासकः, आदर्शमनुष्यश्च आसीत् इति सर्वजनविदितम् अस्ति। रामः वनं गत्वा अपि भरतस्य उपरि सन्देहं न कृतवान्, लक्ष्मणोपरि विपदुपनिपाते स्वप्राणान् तृणाय मेने इत्यादिना आदर्शभ्रातृता अवगम्यते। सीतां परित्यज्य अपि तदनुरागाग्नौ तिलशः स्वम् अजुहोत् इति रामस्य आदर्शपतित्वम्। पितुः आज्ञापरिपालनाय राज्यं त्यक्तवान् इति आदर्शपुत्रत्वम् अवगम्यते। रामराज्यपदम् अधुना अपि आदर्शराज्यपर्यायताम् आपन्नमिति रामस्य आदर्शशासकता अवगम्यते। व्यवहारेण रामः आदर्शमनुष्यः आसीत्। तादृशं चरित्रं स्वीये काव्ये सृष्टवान् आदिकविः वाल्मीकिः।

संसारे किम् अपि काव्यं लोकप्रियतायां रामायणस्य समतां कर्तुं न शक्नोति, अत एव अस्य प्रचारोऽपि पूर्णतया जातः। महाभारते तृतीये पर्वणि रामकथा रामायणाधारेण वर्णिता। अग्निविष्णुगरुडभागवतब्रह्माण्डपुराणेषु च रामायणानुसारेण रामस्य चरितं वर्णितम्। भासकालिदासादयः महाकवयः अपि रामायणम् आश्रित्य काव्यादिकं रचितवन्तः। बौद्धकवयः अपि स्वकाव्यानि रामायणम् आश्रित्य कृतवन्तः आसन्।

### रामायणाश्रित्य काव्यादिकम्

१. रघुवंशमहाकाव्यम्		कालिदासः।

| | | |
|---|---|---|
| २. | जानकीहरणम् | कुमारदासः। |
| ३. | भट्टिकाव्यम् | महाकविभट्टिः। |
| ४. | अभिषेकनाटकम् | भासः। |
| ५. | उत्तररामचरितम् | भवभूतिः। |
| ६. | बालरामायणम् | राजशेखरः। |
| ७. | रामायणचम्पूः | भोजराजः। |
| ८. | रामचरितमानसम् | तुलसीदासः। |
| ९. | अनर्घराघवम् | मुरारिः। |
| १०. | प्रतिमानाटकम् | भासः। |

## पाठगतप्रश्नाः-१

अत्र केचित् पाठगताः प्रश्नाः प्रदीयन्ते -

१. आदिकविः कः अस्ति।

२. आदिकाव्यं किम् अस्ति।

३. वाल्मीकिमुनेः कालः कः।

४. कः रामायणं रचितवान्।

५. रामायणे कति काण्डाः सन्ति।

६. रामायणे कति श्लोकाः सन्ति।

७. रामायणे मुख्यरसः कः।

८. रामायणाश्रितस्य एकस्य नाटकस्य नाम लिखत।

९. रामायणाश्रितस्य एकस्य चम्पूकाव्यस्य नाम लिखत।

१०. रामायणे नायकः कः।

११. रामायणे कति सर्गाः सन्ति।

## १.२) द्वैपायनः व्यासः- महाभारतम्

महाभारतं हि द्वितीयं भारतवर्षस्य राष्ट्रियमहाकाव्यम्। महाभारतस्य अस्य प्रणेता कृष्णद्वैपायनः व्यासः। संस्कृतसाहित्यजगति वाल्मीकेः परं व्यासदेवः अग्रगण्यः भवति। व्यासदेवः ऋषिः आसीत्। अत एव आर्षकविः इति अभिधीयते। पुरातनः अयं कविः स्वकीयग्रन्थे देशकालादिविषये न किमपि लिखति

स्म। अत एव एतादृशानां कवीनां देशकालादिविषये अनुसन्धानं यद्यपि क्लेशसाध्यं कर्म तथापि नैव अशक्यम्। अन्यत् पुस्तकं वीक्ष्य एतादृशानां प्राचीनकवीनां देशकालादिकम् अस्माभिः अनुमीयते।

## १.२.१) कालः

सम्प्रति उपलभ्यमानं महाभारतं मूलमहाभारतात् परतो बहुषु शतकेषु व्यतीतेषु एव निर्मितं स्यात्। अतः मूलमहाभारतमन्तु जयाभिधानस्य वर्तमानमहाभारतात् पूर्वकालिकत्वं निश्चितम्। अत्र वर्तमानमहाभारतस्य रचनाकालो विचारणीयः अस्ति।

ख्रीष्टैकादशशतके जातः क्षेमेन्द्रः भारतमञ्जरीनामकं ग्रन्थं लिखितवान्। स क्षेमेन्द्रः वर्तमानमहाभारतम् उदाहरति। अत एव वर्तमानमहाभारतस्य एकादशशतकपूर्वकालिकत्वं सर्वथा सिद्धम्।

अष्टमशतकोत्तरार्धे जाता आद्यशङ्कराचार्या महाभारतं स्त्रीभिः धर्मज्ञानाय अध्येयत्वेन उपदिशन्ति, तेन महाभारतस्य ततः पूर्वकालिकत्वं सिद्धम्।

अष्टमशतकोत्पन्नः कुमारिलभट्टः महाभारतस्य बहूनि पर्वाणि स्मरति।

सप्तमशतकोत्पन्नाः बाणसुबन्धुप्रभृतयः कवयो महाभारतस्य अष्टादश अपि पर्वाणि हरिवंशं च स्मरन्ति।

कम्बोडियानामके भारतस्य प्राचीनोपनिवेशे षष्ठशतकसमीपे उत्कीर्णात् शिलालेखात् ज्ञायते यत् तत्रत्याय कस्मैचित् मन्दिराय रामायणमहाभारतग्रन्थौ भारतेन प्रहृतौ। तत्कथाप्रबन्धोऽपि भारतेन कृतः।

यववालिप्रभृतिषु द्वीपेषु षष्ठशतके महाभारतम् अवर्तत, ततोऽपि पूर्वं तिब्बतभाषायां महाभारतस्य अनुवादो जातः।

चतुर्थपञ्चमशतकलिखितेषु दानपत्रकेषु स्मृतिरूपेण महाभारतवचनानि निर्दिष्टानि आसन्।

४६२ ख्रीष्टोत्कीर्णे एकत्र शीलालेखे पाराशर्यव्यासस्य लक्षश्लोकात्मकमहाभारतप्रणेतृत्वम् उल्लिख्यते।

ड्योन क्राइसोस्तोम (Dion Chrysostom) महोदयस्य साक्ष्येण प्रतीयते यत् ५० ख्रीष्टाब्दे लक्षपद्यात्मकं महाभारतं दक्षिणपथे लब्धप्रचारम् आसीत्।

एभिः सर्वैः प्रमाणैः एतत् सिद्धं यत् ख्रीष्टशतकप्रारम्भे महाभारतम् अवश्यम् आसीत्। अपि च -

पाणिनिः महाभारतं जानाति स्म इति डल्हमैन-वर्यस्य साक्ष्येण प्रतीयते।

ख्रीष्टपूर्वपञ्चमशतकप्रणीते आश्वालयनगृह्यसूत्रे महाभारतस्य उल्लेखः विद्यते।

४०० ई. पू. समये निर्मिते बौधायनधर्मसूत्रे महाभारतस्य उल्लेखः अस्ति।

महाभारतीयशान्तिपर्वणि विष्णोर्दशावतारगणनाकाले बुद्धस्य नाम न आयाति।

मेगास्थनीजप्रणीते भारतवर्णने याः कथाः वर्ण्यन्ते। ताः कथाः महाभारतात् स्वीकृताः सन्ति।

ब्रह्मा सर्वदेवज्येष्ठतया महाभारते प्रतिपादितः। पालिभाषासाहित्येन ज्ञायते यत् ब्रह्मणो ज्येष्ठत्वं ख्रीष्टपूर्वपञ्चमशतकात् प्रागेव प्ररूढप्रचारम् आसीत्।

ज्यौतिषप्रमाणैः अपि कतिपये विद्वांसः कल्पयन्ति यत् वर्त्तमानं महाभारतम् ५०० ई. पू. समयात् प्रागेव निर्मितं न ततः परम्। अतः सर्वसमीक्षया महाभारतम् ५०० ई. पू. समयतः परतो न निर्मितं किन्तु कदाचित् पूर्वम् एव निर्मितम् इति प्रतीयते। न तावत् निखिलं महाभारतम् एककालकृतिः। अतः व्यासस्य अपि कालः ५०० ई. पू. समयतः पूर्वकालिकः आसीत्।

## १.२.२) कृतिः

व्यासदेवस्य पुराणम्, महाभारतञ्च इति कृतिद्वयं श्रूयते। पुराणानां धार्मिकदृष्ट्या महत्त्वम् अधिकं विद्यते। वेदविहितधर्माणां सरलतया सुबोधभाषया च वर्णनाय एव पुराणानि विरचितानि व्यासदेवैः। यदा वेदोक्ता अर्थाः लोकानां बुद्धौ न आरोढुं प्रवृत्ताः तदा वेदोक्तार्थस्य ज्ञानं सुलभं कर्तुं पुराणानि आगतानि। समाजस्य तात्कालिकस्वरूपबोधनाय अपि पुराणानां महान् उपयोगः विद्यते। पुराणेषु प्राचीनभारतस्य इतिहासः निहितः अस्ति। इतिहासाः केवलं राजवृत्तान्तं बोधयन्ति। परन्तु पुराणानि राजवृत्तान्तेन सह ऋषीणाम् अपि वृत्तान्तं बोधयन्ति। पुराणानि भौगोलिकसामग्रीम् अपि प्रस्तुवन्ति। पुराणविषये काचित् कथा श्रूयते - "व्यासो हि वेदान् चतुर्धा विभज्य तानात्मनः चतुरः शिष्यान् उपदिष्टवान्। ततश्च अमूः कथाः आख्यायिकाः उपाख्यानानि, गीतानि, लोकवादांश्च संगृह्य पुराणं नाम ग्रन्थविशेषं ग्रथितवान्, इतिहासेन साकम् अमुं ग्रन्थं रोमहर्षणं नाम पञ्चमं स्वशिष्यं पाठयामास। तदनन्तरं च तेन महाभारतं खलु निबद्धम्" इति। व्यासदेवस्य अपरा सुप्रसिद्धा कृतिः महाभारतम्। रामायणस्य तुलनायां यद्यपि महाभारतस्य प्रचारः अल्पः, तथापि महत्त्वदृष्ट्या महाभारतं विश्वस्य कुतोऽपि ग्रन्थात् न हीयते। महाभारतं तदानीन्तनभारतीयं समाजनीतिराजनीतिप्रभृतिज्ञातव्यं बोधयति, महाभारतं तदानीन्तनीं भारतीयां सभ्यतां प्रकाशयति। प्रमाणग्रन्थतया महाभारतस्य पञ्चमवेदसंज्ञा जाता। इदं प्रायः सर्वे विद्वांसः मन्यन्ते यत् महाभारतं प्राग् जयनाम्ना ततो भारतनाम्ना ततः परतश्च महाभारतनाम्ना प्रसिद्धम्। तथा हि उक्तम्-

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥ इति

मौलिकं जयनाम्ना व्यवहृतञ्च महाभारतम् अल्पपरिमाणं स्वरूपतः ऐतिहासिककथाप्रधानम् आसीत्, न उपदेशप्रधानम्। जय इति नाम एव तस्य ग्रन्थस्य पाण्डवविजयमात्रबोधनाय निर्मितम् आसीत्। अमुम् एव जयनामानं ग्रन्थं व्यासः निजशिष्यं वैशम्पायनं पाठितवान् इति सा प्रथमावस्था महाभारतस्य। तस्य नाम जय इति आसीत्। वैशम्पायनश्च गुरोः व्यासात् अधीते जये स्वविरचितसंवादादिकं योजयित्वा नागयज्ञावसरे जनमेजयं श्रावितवान्। तदा चतुर्विंशतिसहस्रश्लोकपरिमितम् आसीत्। भारतम् इति संज्ञा आसीत्। सा इयं द्वितीयावस्था आसीत्। अथ अमुम् एव चतुर्विंशतिसाहस्रीपरिमाणात्मकं भारतग्रन्थं शौनकाय सौतिः श्रावितवान्। तत्र लक्षपरिमाणात्मकश्लोकः आसीत्। सा इयं तृतीया अवस्था एव महाभारतसंज्ञा प्राप्ता। सौतिना एव महाभारतसंज्ञा कृता आसीत्। इयमेव महाभारतस्य अन्तिमा अवस्था।



## १.२.३) विषयः

महाभारतस्य शतसाहस्री इति अपरम् अभिधानं विद्यते। प्रकृतं महाभारतं पर्वसु अध्यायेषु च विभक्तम् आसीत् इति अनुमीयते। स एव विभागक्रमः वैशम्पायनेन अनुसृतः। तदीयं महाभारतम् उपशतपर्वसु विभाजितम् आसीत्। सौतिना सा संख्या सङ्कोच्य अष्टादशतां नीता। अथ अष्टादशपर्वव्यतिरिक्तं हरिवंशं नाम पर्व अस्ति। महाभारते प्रायः लक्षात्मकः श्लोकः विद्यते। तत्र मुख्येषु केषुचित् पर्वसु निम्नविषयाः वर्ण्यन्ते-

आदिपर्वणि तावद्- धार्तराष्ट्राणां पाण्डवानां च बाल्यकालवर्णना, द्रौपदीविवाहः, यादववीरशौरिणां पाण्डवानां संस्तवः।

सभापर्वणि- इन्द्रप्रस्थे पाण्डवानामृद्धिः, द्यूते च पाण्डवानां युधिष्ठिरेण द्रौपदीसहितस्य सर्वस्वस्य हारणम्, एकवर्षाज्ञातवासाय द्वादशवर्षवनवासाय च पाण्डवानां विवासनम्।

वनपर्वणि- काम्यकारण्ये पाण्डवानां द्वादशवर्षवनवासः।

विराट्पर्वणि- मत्स्यपतेः विराजः भृत्यत्वेन गुप्तात्मनां पाण्डवानाम् अज्ञातवासस्य त्रयोदशवर्षस्य अतिवाहनम् इति

उद्योतपर्वणि- धार्तराष्ट्रः पाण्डवानां न्याय्यं दायभागं प्रदातुं न इच्छति स्म। ततः रणोद्योतवर्णनम् अस्ति। इतः परं भाविषु पञ्चपर्वसु वासुदेव-पाण्डव-वर्जं सर्वक्षयकारणं भीषणं रणं विस्तरेण वर्णितम्।

एकादशे पर्वणि- मृतदाहसंस्कारं कृत्वा द्वादशे त्रयोदशे च युधिष्ठिरं प्रति भीष्मस्य राजधर्मस्य उपदेशः। चतुर्दशे युधिष्ठिरस्य राज्याभिषेकः अश्वमेधः नाम यागश्च, पञ्चदशे गान्धारीधृतराष्ट्रयोः तपोवनगमनम्, षोडशे यादवानाम् अन्योन्यविनाशनः कलहः कृष्णस्य च सहसा व्याधकृतो वधः, सप्तदशे अर्जुनपौत्रं परीक्षितं प्रजापालनकर्मणि नियुज्य निर्विण्णपाण्डवानां मेरुं प्रति प्रस्थानम्, अष्टादशे च पाण्डवानां स्वर्गारोहणं वर्ण्यते।

### महाभारतीया कविताशैली -

व्यासस्य कृतिः इयं सर्वैः इतिहास इत्युच्यते यतोऽत्र वीराणां पुण्या गाथा वर्णिता। अयं ग्रन्थः धार्मिकग्रन्थः येन लोकः स्वकल्याणं गवेषयति। महाभारते अत्र एव गीतारत्नं विद्यते। यत् दुग्धम् इव पीयते। गीताग्रन्थस्य आदरः महाभारतस्य एव विशिष्टतां प्रमाणयति। अत्र शान्तरसः मुख्यरसः भवति। महाभारते सरलया संस्कृतगिरा पद्यानि सन्ति। यथा -

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।

तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।इति

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।

तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।। इति।

कतिपयाश्च कथाः प्राचीनगद्यसंयुक्ताः सन्ति। पद्यबहिर्भूतानि "कृष्ण उवाच" "भीष्म उवाच" इत्यादीनि वाक्यानि विद्यन्ते। व्यासस्य मते तु भारतीयसंस्कृतेः प्राणभूतः धर्मः भवति। अत एव प्राह -

न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः। इति

मनुष्यः सर्वदा कर्मशीलः भवेत्। कर्मविमुखाः मानवाः न कदापि मानवपदवीं न अर्हन्ति। तथा हि प्रोक्तम्- "प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः"इति। आधुनिकाः समाजशास्त्रिणः कथयन्ति - मनुष्याः एव श्रेष्ठजीवाः। तेषाम् एव कल्याणाय सर्वे नियमव्यवहाराः प्रवर्त्यन्ते। इदं वस्तु व्यासेन प्रोक्तम् -

"गुह्यं ब्रह्म तदिदं ब्रवीमि
न हि मनुष्यात् श्रेष्ठतरं हि किञ्चित्"। इति

**महाभारतस्य उपजीव्यम् -**

महाभारते बहुलं नीतिवाक्यानि प्राप्यन्ते। यानि वाक्यानि अस्मिन् युगे अत्यन्तं प्रयोजनपूर्णानि भवन्ति। जनाः बहुधा दिग्भ्रान्ताः भवन्ति। मानवनां सन्मार्गेण गमनाय महाभारतम् अत्यन्तम् आवश्यकम्। महाभारतस्य अपि जनप्रियता अत्यन्तं वर्तते। बहवः महाकवयः महाभारतम् आश्रित्य बहून् ग्रन्थान् रचितवन्तः। महाभारताश्रितानां ग्रन्थानां नामानि अधः प्रदीयन्ते।

| | |
|---|---|
| १. शिशुपालवधम् | माघस्य (सभापर्वम्)। |
| २. नैषधीयचरितम् | श्रीहर्षस्य (वनपर्वम्)। |
| ३. किरातार्जुनीयम् | भारवेः(वनपर्वम्)। |
| ४. कर्णभारम् | महाकविभासस्य। |
| ५. अभिज्ञानशाकुन्तलम् | महाकविकालिदासस्य। |
| ६. वेणीसंहारम् | भट्टनारायणस्य। |
| ७. नलचम्पूः | त्रिविक्रमभट्टस्य (वनपर्वम्)। |
| ८. भारतचम्पूः | अनन्तभट्टस्य। |

## पाठगतप्रश्नाः-२

अत्र केचित् पाठगताः प्रश्नाः प्रदीयन्ते -

१२. व्यासदेवस्य कालः कः।
१३. महाभारतं केन विरचितम्।
१४. महाभारतस्य अपरम् अभिधानं किम्।
१५. महाभारते कति पर्वाणि सन्ति।



१६. महाभारते कति श्लोकाः सन्ति।

१७. द्वितीयावस्थापन्नस्य महाभारतस्य नाम किम्।

१८. प्रथमावस्थापन्नस्य महाभारतस्य नाम किम्।

१९. महाभारते मुख्यरसः कः।

२०. व्यासस्य महाभारतव्यतिरिक्ता भिन्ना कृतिः का।

२१. महाभारतम् आश्रित्य किं नाटकं विद्यते।

२२. महाभारतम् आश्रित्य किं महाकाव्यं विद्यते।

२३. महाभारतम् आश्रित्य किं चम्पूकाव्यं विद्यते।

## १.३) भासः

संस्कृतसाहित्यजगति नाट्यकारः भासः एकम् उज्ज्वलपूर्णं नक्षत्रम्। नाट्यकारः भासो हि सम्प्रति विज्ञातनाट्यकारेषु प्राचीनतमो भवति। कालिदासादयः महाकवयः भासम् एव श्रेष्ठत्वेन मन्यन्ते। कालिदासादिकृतेषु ग्रन्थेषु भासस्य नामोल्लेखः बहुधा दृश्यते। अयम् अत्यन्तं प्राचीनतमः आसीत्। एवञ्च स्वकृतिषु अपि कुत्रचित् स्वविषये न किमपि लिखितवान्। अत एव भासस्य कालादिनिरूपणे अन्यानि पुस्तकानि सहायकानि भवन्ति। सम्प्रति भासस्य देशकालादिकम् अनुमीयते।

### १.३.१) कालः -

भासस्य काले निर्णीये प्राचां कवीनां लेखकानाञ्च लेखा अवलम्ब्यते।

कालिदासेन "प्रथितयशसां भाससौमिल्लकविपुत्रादीनाम्" इत्यादरवचनेन भासस्य प्रचुरा प्रसिद्धिः प्रोक्ता। एतेन भासस्य कालिदासपूर्ववर्तिता सिद्धा।

अभिनवगुप्तः स्वकृते अभिनवभारतीग्रन्थे भासं स्मरन् पद्यमिदं तन्नाटकात् उद्धृतवान्। महाकविना भासेनापि स्वप्रबन्धे उक्तम्-

"त्रैतायुगं तदिह हन्त न मैथिली सा
रामस्य रागपदवी मृदु चास्य चेतः।
लब्धा जनस्तु यदि रावणमस्य कायं
प्रीत्कृत्य तन्न तिलशो न वितृप्तिगामी।।"इति

बाणभट्टः स्वीये हर्षचरिते भासस्य विषये "सूत्रधारकृतारम्भैः"इत्याद्युक्तवान्।

दण्डिना अपि भासः "सुविभक्तमुखाद्यङ्गैः" इत्यादिना अवन्तिसुन्दरीकथायां स्मृतः।

प्रतिमानाटके बृहस्पतेरर्थशास्त्रं स्मृतं न चाणक्यस्य। एतेन चाणक्यात् प्राचीनता भासस्य आपतिता।

राजशेखरः स्वकविविमर्शे लिखितवान् -

“भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलास्कन्धः सुबन्धुश्च यः।” इति। राजशेखरात् पूर्ववर्ती भवति महाकविः भासः।

भरतप्रवर्तितनाटकीयनियमानां समादरो भासेन स्वकृतौ न कदापि कृतः वर्तते। यथा स्थापनायां न कविनामनिर्देशः अवतरणस्य स्थापननाम्ना निर्देशः, न प्रस्तावनानाम्ना। नान्दीपाठात् परतः सूत्रधारप्रवेशः। विनापि भरतवाक्यं ग्रन्थसमाप्तिः, मृत्युनिद्रायुद्धानां रङ्गमञ्चे अवतारणा च। एतेन तस्य भरतप्राचीनता आयाता।

भासः स्वकृतौ पाणिनिव्याकरणानुसारेण न कदापि लिखति। कुत्रचित् पाणिनिमतविरुद्धम् अपि कार्यं भवति एव। एतेन अवगम्यते यत् भासकाले तु पाणिनिव्याकरणं नासीत्। एतेन प्रमाणं भवति यत् पाणिनेः प्राचीनः महाकविः भासः।

रसपरिपाकमहिम्ना भाषाप्रवाहसाम्येन भासस्य व्यासवाल्मीकिसमयवर्त्तित्वम् आतिष्ठन्ते केचित्।

एभिः सर्वैः कारणैः भासस्य प्राचीनता सिद्धा भवति। सा च प्राचीनता कालिदासात् अपि प्राचीनम् इमं साधयन्ती १०० ई. पूर्वमितं कालं भासस्य बोधयति।

## १.३.२) कृतिः -

महाकविः भासः प्रायः त्रयोदश नाटकानि रचितवान्।

१. प्रतियौगन्धरायणम्।
२. अविमारकम्।
३. स्वप्नवासवदत्तम्।
४. प्रतिमानाटकम्।
५. अभिषेकनाटकम्।
६. मध्यमव्यायोगः।
७. पञ्चरात्रम्।
८. दूतवाक्यम्।
९. दूतघटोत्कचम्।
१०. कर्णभारम्।
११. ऊरुभङ्गम्।
१२. बालचरितम्।
१३. दरिद्रचारुदत्तम्।

केषाञ्चित् मते यज्ञफलम् इति नामकं रूपकम् एकं लिखितवान् आसीत् इति। अधः प्रत्येकं नाटकं स्वीकृत्य कश्चित् सामान्यपरिचयः प्रदीयते।

१. **प्रतिज्ञायौगन्धरायणम्** - प्रतिज्ञायौगन्धरायणं हि भासस्य प्रथमा कृतिः स्वप्नवासवदत्तस्य पूर्वपीठिका च। अत्र हि वत्सराजस्य उदयनस्य वासवदत्ताहरणवृत्तान्तं वर्णितम् अस्ति। इदं हि चतुर्षु अङ्केषु विभक्तम्। नायकः अस्य यौगन्धरायणः वृत्तफलस्वाम्युदयनः। शत्रुवशीभूतस्य उदयनस्य मोक्षाय यौगन्धरायणः प्रतिजानीते करोति च। स्वप्रतिज्ञां पूरयति इति ग्रन्थः अयम् अन्वर्थनामा।



२. **स्वप्नवासवदत्तम्** - षष्ठेषु अङ्केषु विभक्तम् इदम् रूपकं भासस्य सर्वोत्कृष्टा कृतिः। आरुणिः वत्सभूमिम् अपहृतवान्। वत्सभूमेः उद्धरणाय मन्त्री यौगन्धरायणः प्रतिज्ञां कृतवान्। वासवदत्ता दग्धा इति मिथ्या प्रचारेण सर्वान् वञ्चयित्वा उदयनो मगधराजपुत्र्या पद्मावत्या सह परिणयम् आचरति। ततश्च मगधेशसाहाय्येन रुमण्वान् आरुणिं निपात्य उदयनस्य राज्यं पुनः प्रत्यावर्तयति। काले वासवदत्ता च पुनरात्मानं प्रकटीकरोति। दग्धा इति मतां वासवदत्ताम् उदयनः स्वप्ने पश्यति इत्यस्य ग्रन्थस्य स्वप्नवासवदत्तम् इति नाम अन्वर्थम्। कथाम् इमां समाश्रित्य श्रीहर्षः रत्नावलीं नाटिकां विरचितवान्।

३. **अविमारकम्**- अविमारके रुपके षट् अङ्काः सन्ति। अत्र हि काशीयुवराजस्य सौवीरराजधर्मपुत्रस्य अविमारकस्य कुन्तीभोजराजकुमार्या कुरङ्ग्या सह प्रेमलीलोपवर्णिता अस्ति। अत्र हि न तथा रचनाचमत्कारः प्रतिभाति। सम्भवति यत् भासो हि स्वीयाम् एव व्यथाम् अत्र प्रकटीकरोति। कृतेः अस्याः भासप्रणीतत्वापत्तिः अपि न तथा युक्तिहीना।

४. **चारुदत्तम्** - चारुदत्तं हि नाटकं चतुर्षु अङ्केषु विस्तारितम् अस्ति। अत्र हि उज्जयिन्याः चारुदत्तस्य वसन्तसेनाख्यया वेश्यया सह प्रेमविनिमयः वर्णितः अस्ति। कृतिः इयं स्वजातौ प्रथमा। यतो हि राजेतरः कश्चित् विप्रः नायकत्वेन कल्पितः अस्ति। अपूर्णम् इदं नाटकं भासस्य कृतौ चरमा वर्तते। अत्र हि चारुदत्तेन सह वसन्तसेनायाः अभिसारनिमित्तव्यवस्थापर्यन्तं कथा अस्ति। तदनुवर्तिना शूद्रकेन मृच्छकटिकं प्रणीय कथा एषा प्रणीता।

५. **प्रतिमानाटकम्** - अस्मिन् नाटके सप्त अङ्काः सन्ति। अत्र नाटके रामवनगमनपर्यन्ता कथा संक्षेपेण उपवर्णिता अस्ति।

६. **अभिषेकनाटकम्** - नाटके अस्मिन् षट् अङ्काः सन्ति। षडङ्कात्मकं हि नाटकम् इदं प्रतिमानाटकस्य उत्तरार्द्धम्। अत्र हि रामायणे किष्किन्धा - सुन्दरयुद्धकाण्डाख्यगता कथा संक्षिप्य उपवर्णिता अस्ति। इदम् एव बालिवधसंज्ञया अपि व्यपदिश्यते।

७. **बालचरितम्** - बालचरितं हि भागवताश्रितं नाटकम् अस्ति। इदम् एव कंसवधसंज्ञया अपि व्यपदिश्यते। अत्र हि कृष्णस्य जन्मत आरभ्य कंसवधपर्यन्ता कथा उपवर्णिता अस्ति।

८. **ऊरुभङ्गम्** - रूपकम् इदम् एकाङ्कात्मकम् अस्ति। अत्र हि दुर्योधनस्य ऊरुभङ्गपर्यन्ता कथा उपवर्णिता अस्ति। सम्भवतः इदम् एव हि संस्कृतसाहित्ये प्रथमं दुःखान्तनाटकम्।

९. **दूतवाक्यम्** - अत्र नाटके एकः अङ्कः विद्यते। नाटकम् इदं श्रीकृष्णस्य पाण्डवदौत्यकथासम्बद्धम् अस्ति।

१०. **पञ्चमरात्रम्** - अत्र हि त्रयः अङ्काः सन्ति। अत्र हि यज्ञावसाने द्रोणः दक्षिणरूपेण पाण्डवेभ्यः अर्द्धराज्यं प्रार्थितवान्। दुर्योधनः अपि यजमानः पञ्चरात्राभ्यन्तरे पाण्डवागमने तथाकरणाय प्रतिजानीते। द्रोणस्य प्रयासेन पाण्डवास्तत्र उपतिष्ठन्ति। ततश्च प्रतिश्रुत्यनुसारेण हि अर्धराज्यं दुर्योधनः तेभ्यः प्रयच्छति। एषा कथा महाभारतकथां विरुणद्धि।

११. **दूतघटोत्कचम्** - अस्मिन् रूपके एकः अङ्कः विद्यते। रूपके अस्मिन् अभिमन्योः वधात् परं श्रीकृष्णः सन्धिप्रस्तावाय घटोत्कचं दूतत्वेन नियुक्तवान्। कौरव्यस्य सकाशं गत्वा शान्तिप्रस्तावं प्रदत्तवान्। किन्तु

१२. कौरव्येण घटोत्कचः अपमानितः अभवत्। क्रुद्धः सन् प्रतिशोधार्थं युद्धं कर्तुम् इष्टवान्।

१३. **कर्णभारम्** - अस्मिन् नाटके एकः अङ्कः विद्यते। कर्णस्य ब्राह्मणरूपधारिणे शक्राय कवचकुण्डलदानेन सह निबद्धा इयं कथा।

१४. **मध्यमव्यायोगः** - व्यायोगे अस्मिन् भीमेन घटोत्कचात् ब्राह्मणपुत्ररक्षणं भीमस्य हिडिम्बया सह पुनर्मिलनं च वर्णितम् अस्ति।

१५. एतदतिरिक्तम् अपि भासस्य कृतित्वेन सप्त अन्यानि नाटकानि स्मर्यन्ते। येषु वीणावासवदत्ता यज्ञफलञ्चापि। सम्प्रति एतानि पुस्तकानि नैव उपलभ्यन्ते।

१६. रामायणेषु प्रतिमानाटकम् अभिषेकश्च। महाभारतमूलेषु मध्यमव्यायोग-दूतघटोत्कच-कर्णभार-ऊरुभङ्ग-दूतवाक्यादीनि। भागवताश्रितं बालचरितम्। कल्पितेतिवृत्तं दरिद्रचारुदत्तम् अविमारकं च।

## पाठगतप्रश्नाः-३

अत्र केचित् पाठगताः प्रश्नाः प्रदीयन्ते -

२४. भासस्य कालः कः।

२५. भासविरचितस्य एकस्य नाटकस्य नाम लिखत।

२६. भासस्य प्रायः कति नाटकानि सन्ति।

२७. भासस्य प्रथमा कृतिः का।

२८. स्वप्नवासवदत्ते कति अङ्काः सन्ति।

२९. प्रतिमानाटकं किम् आश्रित्य कृतवान्।

३०. अभिषेकनाटके कति अङ्काः सन्ति।

३१. भासः महाभारतं समाश्रित्य किं नाटकं लिखितवान्।

३२. कर्णभारे कति अङ्काः सन्ति।

३३. चारुदत्तं किम् आश्रित्य लिखितवान्।

३४. पञ्चमरात्रनाटके कति अङ्काः सन्ति।

३५. भासः बालचरितं नाटकं किम् आश्रित्य लिखितवान्।



## पाठसारः

पाठे अस्मिन् आदिकवेः वाल्मीकेः व्यासदेवस्य भासस्य च विषये किञ्चित् समासेन आलोचितम्। वाल्मीकिः तु आदिकविः। यतो हि काव्यस्य दृष्टान्तत्वेन रामायणम् उपस्थापितवान्। इदं च रामायणं भारतसंस्कृतेः प्राणभूतम्। प्रायः ख्रीष्टपूर्वपञ्चमशतकात् पूर्वम् एव रामायणं रचितवान्। रामचरित्रम् आश्रित्य रामायणं रचितम्। अत्र सप्त काण्डाः, ५०० सर्गाः, चतुर्विंशतिसहस्रं श्लोकाः सन्ति। अपरञ्च महाभारतं हि अस्मद्राष्ट्रेतिहासः। ग्रन्थस्य अस्य प्रणेता व्यासदेवः। महाभारतग्रन्थः मानवजीवनस्य समस्यानां समाधानाय नयनपथम् अधिरोहति। तस्मात् अस्माकं भारतीयानां कृते ग्रन्थराज एव धर्मशास्त्रस्य अपि कार्यं साधयति। महाभारते हि अष्टादश सर्गाः, एकलक्षं श्लोकाः सन्ति। ग्रन्थे अस्मिन् भारतीयधर्मस्य सुविस्तृततया ज्ञानाय कौरवपाण्डवयोः युद्धवर्णनं कृतम्। ग्रन्थस्य अस्य निर्माणकालः ५०० ई. पू. समयात् प्राग् एव। प्राचीननाटककारेषु अत्यन्तं प्रसिद्धः महाकविः भासः। संस्कृतजगति प्रायः त्रयोदश रूपकानि विद्यन्ते। महाकवेः भासस्य स्थितिकालः १०० ई. पूर्वमितः कालः। महाकविः इदं रामायणम् आश्रित्य प्रतिमानाटकम्, महाभारतम् आश्रित्य मध्यमव्यायोगनाटकम्, भागवतम् आश्रित्य बालचरितम्, कल्पितेतिवृत्तम् आश्रित्य चारुदत्तम् इत्यादीनि रूपकानि विरचितवान्।

## पाठान्तप्रश्नाः

१. वाल्मीकेः देशकालकृतिविषये लघुटिप्पणीं रचयत।
२. वाल्मीकेः कृतिविषये लघुटिप्पणीं लिखत।
३. रामायणम् आश्रित्य लघुटिप्पणीं रचयत।
४. रामायणस्य कविताशैलीविषये लघुटिप्पणीं लिखत।
५. रामायणस्य कालविषये लघुप्रबन्धं लिखत।
६. व्यासस्य देशकालकृतिविषये लघुटिप्पणीं रचयत।
७. महाभारतम् आश्रित्य लघुटिप्पणीं रचयत।
८. महाभारतस्य कविताशैलीविषये लघुटिप्पणीं लिखत।
९. महाभारतस्य कालविषये लघुप्रबन्धं लिखत।
१०. भासस्य देशकालकृतिविषये लघुटिप्पणीं रचयत।
११. भासस्य कृतिविषये लघुटिप्पणीं लिखत।
१२. भासस्य विषये लघुप्रबन्धं लिखत।

## पाठगतप्रश्नानाम् उत्तराणि

अत्र पाठगतप्रश्नानाम् उत्तराणि प्रदीयन्ते-

**उत्तराणि - १**

१. वाल्मीकिः।
२. रामायणम्।
३. ख्रीष्टपूर्वपञ्चमशतकात् पूर्वम्।
४. वाल्मीकिः।
५. सप्त काण्डाः।
६. चतुर्विंशतिः श्लोकाः।
७. करुणः रसः।
८. प्रतिमानाटकम्।
९. रामायणचम्पूः।
१०. रामचन्द्रः।
११. ५०० सर्गाः।

**उत्तराणि - २**

१२. ५०० ई. पू. समयात् प्राग्।
१३. व्यासदेवेन।
१४. शतसाहस्री।
१५. अष्टादश पर्वाणि।
१६. एकलक्षं श्लोकाः।
१७. भारतम् इति नाम।
१८. जय इति नाम।
१९. शान्तरसः।
२०. पुराणानि।
२१. अभिज्ञानशाकुन्तलम्।
२२. नैषधीयचरितम्।
२३. नलचम्पूः।

**उत्तराणि - ३**

२४. १०० ई. पूर्वमितः कालः।
२५. स्वप्नवासवदत्तम्।
२६. प्रायः त्रयोदश।
२७. प्रतिज्ञायौगन्धरायणम्।
२८. षट् अङ्काः।
२९. रामायणम्।
३०. षट् अङ्काः।
३१. मध्यमव्यायोगम्।
३२. एकः अङ्कः।
३३. कल्पितेतिवृत्तम्।
३४. त्रयः अङ्काः।
३५. बालचरितम्।

॥ इति प्रथमः पाठः ॥

# २

# कविपरिचयः - २

## प्रस्तावना-

संस्कृतसाहित्ये ये महान्तः कवयः सन्ति तेषां परिचयः अत्यन्तावश्यकः। किञ्च तेषां देशकालविषये अपि अस्माभिः ज्ञेयम्। कविकृतीनाम् अपि ज्ञानम् आवश्यकम्। यतो हि काव्यं तु पठ्यते छात्रैः परन्तु काव्यकर्तॄणां विषये तेषां ज्ञानं नैव भवति। प्राचीनाः कवयः अपि तेषां परिचयम् स्वग्रन्थे नैव लिखन्ति। अतः अल्पायासेन तेषां परिचयः न भवति। अतः द्वादशकक्षायाः कृते अयं पाठः व्यवस्थापितः। सरलया भाषया विषयः वर्णितः येन छात्राणां सुबोधः स्यात्।

## उद्देश्यानि

पाठस्यास्याध्ययनेन भवान् -

- कवीनां देशकालादिविषयान् ज्ञास्यति।
- कवीनां ग्रन्थान् ज्ञास्यति।
- साहित्यकलाम् ज्ञास्यति।
- प्राचीनान् अर्वाचीनान् च कवीन् ज्ञास्यति।
- काव्यशैलीं ज्ञास्यति।
- कवीनां महत्त्वं ज्ञास्यति।

## २.१) कालिदासः

संस्कृतसाहित्यस्य अन्यतमः अत्यन्तं प्रतिभावान् कविः कालिदासः। संस्कृतजगति तथा कोऽपि नास्ति येन प्रथितयससः अस्य कालिदासस्य नाम न श्रुतम्। कालिदासः इत्यनेन न केवलं व्यक्तिः द्योत्यते अपि तु प्राचीनभारतीयसंस्कृतेः सुवर्णयुगम् द्योत्यते। यस्य च संस्कृतयुगस्य मूर्तप्रतीकस्वरूपः महाकविः कालिदासः। परन्तु दुःखस्य विषयः यत् प्राचीनसाहित्यस्य विषये यावती स्पष्टता अस्ति तावती स्पष्टता कालिदासस्य देशकालकृतिविषये नास्ति। किञ्च, स्पष्टं प्रमाणम् अपि न लभ्यते। भारतवर्षस्य कस्यां नगर्यां कालिदासस्य जन्म अभवत् तद्विषये तु विवादस्य अन्तः एव नास्ति।

## २.१.१) कालिदासस्य समयः

भारतीयकवीनां समयनिर्धारणम् अति कष्टसाध्यं कार्यम्। यतस्तैः स्वविषये प्रायः किमपि न लिखितम्। अस्यां स्थितौ अन्यकृतैरुल्लेखैः अनुमानेन च प्राचां कवीनां समयो व्यवस्थापनीयो भवति। अस्माद् एव हेतोः कालिदासस्य समयसम्बन्धे अपि मतभेदाः वर्तन्ते।

**प्रथममतम्-**

सर् विलियम् जोन्स महोदयः कालिदास्य समयः ई.पू. प्रथमशताब्दौ इति अङ्गीकरोति। यतो हि कालिदासः विक्रमसंवत्प्रर्वतकस्य विक्रमादित्यस्य राज्ञः सभापण्डितः आसीत् इति श्रूयते। अतः कालिदासस्य कालः प्रथमशताब्दी इति।

**द्वितीयमतम्-**

ड. वेबर लौसन्, योकोबि, मानियर् विलियम्, महानुभवानां मतानुसारं तुं कालिदासस्य कालः ईशवीयद्वितीयशतकयोः मध्ये एव भवति।

**तृतीयमतम्-**

डा. भाऊदाजी महाशयस्तु कवेः कालः षष्ठशतकम् इति स्वीकरोति। कारणं हि उज्जयिनीनरेशः हर्षविक्रमगुप्तः मातृगुप्तनामकं जनं काश्मीरं शासितुं प्रेषितवान्। अयं मातृगुप्तः एव कालिदासः इति मत्वा स कालिदासस्य कालः षष्ठशतकमिति मन्यते।

**चतुर्थमतम्-**

वत्सभट्टिमहोदयस्य एकः शिलालेखः प्राप्यते। यत्र ५२९ मालवसंवत्सरस्य उल्लेखो दृश्यते। स च ई. ४७६ तः संवदति। तस्य शिलालेखस्य भाषा कालिदासस्य भाषया साकम् अन्वेति। एतदाधारीकृत्य एव मैक्डोनलमहोदयः कालिदासस्य कालः पञ्चमशतकम् इति उक्तवान्।

**पञ्चममतम्-**

डा. हार्नले-प्रभृतयस्तु विद्वांसः कालिदासस्य काव्येषु गोप्ता-गोप्ते-कुमार-गुप्त-स्कन्ध-प्रभृतिशब्दैः कालिदासस्य कालः पञ्चमषष्ठयोः मध्ये इति स्वीकुर्वन्ति। यतो हि एतादृशैः शब्दैः गुप्तवंशीयनृपाणां स्मरणं भवति।

**षष्ठमतम्-**

ए. सी. चटर्जी तु कालिदासं मालवनरेशशोधधर्मस्य कालिकं मत्वा तस्य समयः षष्ठशतकम् इति चिन्तयति।

**सप्तममतम्-**

रामचन्द्रविनायकपटवर्धनस्तु आषाढस्य प्रथमदिवसे, प्रत्यासन्ने नभसि इत्यादि पद्याधारेण कालिदासस्य कालः१८००वर्षपूर्वकम् कथयति। किञ्च ज्यौतिषानुसारिणीं गणनां कृत्वा अपि १८००वर्षपूर्वकम् इत्येव निर्णीतम्।

**अष्टममतम्-**

आर्-कृष्णमाचारियर्-महाशयः दिङ्नागानां पथि परिहरन् इति श्लोकस्य आधारेण दिङ्नागसमकालिनं स्वीकरोति। अतः दिङ्नागस्य कालः आसीत् षष्ठशतकम्। तस्मात् कालिदासस्यापि कालः षष्ठशतकमेव।

**नवममतम्-**

म.म. रामावतारशर्मा कालिदासं द्वितीयचन्द्रगुप्तकालीनम् स्वीकृत्य तस्य कालम् ईशवीयं षष्ठशतकं कथयति। केचित् विचारकास्तु कालिदासः ईशवीयपूर्वप्रथमद्वितीयशतके आसीत् इति समर्थयन्ते।

## २.१.२) कालिदासस्य देशः

कालिदासस्य जीवनवृत्तिविषये अनेकाः लोकविश्रुतयः अनेके वादाः च सन्ति। केचित् एनं विक्रमादित्यस्य सभायां कविः इति मन्यन्ते। केचित् गुप्तकालीननरेशानाम् आश्रयं प्राप्तवानिति कथयन्ति। धारानगरे भोजराजस्य सभायां कविरत्नपदभूषितः अभूत् इति कथाकोविदाः कथयन्ति। जनश्रुत्यनुसारं बाल्यकाले सः अतीव मूर्खः आसीत्। विद्याधर्या सह तस्य विवाहः अभवत्। मूर्खः पतिः इति ज्ञात्वा विद्याधरी तं कालीदेव्याः आलयं नीतवती। यावत् सा भवते विद्यां न उपदिशति तावत् भवता ततः बहिः न आगन्तव्यम् इति आदिशत्। ततः पत्न्याः कथनानुसारेण तथैव आचरितः कालिदासः कालीदेव्याः वरप्रसादेन विद्वान् अभवत् इति। इयं कथा कालिदासस्य प्रतिभया कविताचातुर्येण च जाता। तथा तु न विदुषां मतिः। इतोऽपि कालिदासस्य कविताचातुर्यं निर्दिश्यमानाः अनेकाः कथाः सन्ति।।

**प्रथमम्-**

उत्तररामचरितस्य कर्ता भवभूतिः स्वयं नाटकं विलिख्य कालिदासस्य अभिप्रायं प्रष्टुं गतः आसीत्। समग्रं नाटकं परिशील्य पठित्वा च कालिदासः नाटकस्य प्रथमाङ्के विद्यमाने –

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत्॥

श्लोकेऽस्मिन् 'रात्रिरेवम्' इत्यत्र रात्रिरेव इत्येव सूक्तमिति परिष्कारम् अकरोत्। भवभूतिना लिखिते श्लोके एवं रसमयार्थः यथा द्योत्येत तथा परिष्कारं कृतवान्। अत्र कालिदासस्य काव्यप्रतिभां

सहृदयाः श्लाघितवन्तः। परन्तु भवभूतिकालिदासौ समकालीनौ आस्ताम् इति ऐतिहासिकाः नाङ्गीकुर्वन्ति।

### द्वितीयम्-

अपरा काचित् कथा एवं श्रूयते। कदाचित् सरस्वती देवी कालिदासभवभूत्योः कवितागुणतारतम्यं परीक्षितुं तुलायां द्वयोः स्थाल्योः उभौ अपि स्थापितवती इति। तदा भवभूतेः स्थाल्याः भारः न्यूनः अभवदिति सरस्वती स्वस्य कर्णे धृतं कल्हारमुकुलमकरन्दं तत्र योजितवती इति। तस्मात् द्वे स्थाल्यौ अपि समाने जाते इति श्रूयते। कालिदासस्य कविताचातुर्यं परिश्लाघ्यमानानि अनेकानि उपाख्यानानि 'भोजप्रबन्ध'इत्यस्यां कृतौ परिदृश्यते। परन्तु तानि सर्वाणि प्रमाणभूतानि इति वक्तुं न शक्यते।

### तृतीयम्-

विक्रमसंवत्सरस्थापकस्य विक्रमादित्यस्य आस्थाने नवरत्नेषु अयमपि अन्यतमः इति परम्परागतः अपरः विश्वासः। तद्यथा-

धन्वन्तरि-क्षपणकामरसिंह-शङ्कुवैतालभट्ट-घटकर्परकालिदासाः।
ख्याती वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥

श्लोकेऽस्मिन् नवरत्नानां कवीनां नामानि निर्दिष्टानि। परन्तु एते सर्वेऽपि समकालीनाः न। कालिदासः विक्रमस्य आस्थाने आसीत् इत्यंशः अङ्गीकृतः चेदपि अस्य श्लोकस्य आधारेण तत्कालं प्रमाणीकर्तुं न साध्यम्। इत्थं प्रचलिताभिः किंवदन्तीभिः ऐतिहासिकव्यक्तीनाम् उल्लेखितकथाभिः वा कालिदासस्य चरित्रं वेत्तुं न शक्यते। याः रम्याः कथाः सन्ति, तासु एव कालिदासस्य जनप्रियता ज्ञातुं शक्यते। अथ महाकविरयं कदा कस्मिन् देशे जन्मग्रहणं कृतवान् इत्येतस्मिन् विषये समेषां गवेषकाणाम् एकः एव निष्कर्षः अस्ति। अद्यावधि समुपलभ्यते यत् पुरातनाः कवयः स्वनिर्वचनं नैव कुर्वन्ति स्म इति। अस्य जीवनविषये बह्व्यः दन्तकथाः, ऐतिहासिककथाः च सन्ति। मेघदूते अन्यासु कृतिषु सः पुनःपुनः उज्जयिन्याः सौन्दर्यं वर्णितवान् अतः सः तत्रैव बहुकालम् उषितवान् स्यात्। काश्मीरे प्रवर्धमानं केसरपुष्पं सः केवलं वर्णितवान् इत्यतः काश्मीरीयः स्यादिति केषाञ्चित् अभिप्रायः। तेन मेघदूते निर्दिष्टः रामगिरिः विदर्भे अस्ति। तत्रत्यानि असनवसनादिविषयान् सः वर्णयति इत्यतः विदर्भीयः स्यादिति, न समीचीनं निर्णयं लभ्यते। मालवं विस्तरेण वर्णितवान् इत्यतः सः मालवीयः अस्तीति पुनः केषाञ्चित् अभिप्रायः। रघुवंशमहाकाव्ये तेन वर्णितं रघोः दिग्विजयं सूक्ष्मतया परिशीलयामश्चेत् भारते तस्य अपरिचितः प्रदेशः नास्तीति स्पष्टं ज्ञायते। यथा असमप्रदेशम् अवर्णयत् तथैव मनोहरशैल्या केरलमपि अवर्णयत्। हिमालयमिव समुद्रतीरमपि सुन्दरम् अवर्णयत्। अतः सः राष्ट्रकविः, उज्जयिनी तस्य स्थिरस्थानम्, समग्रभारतं तस्य चरस्थानम्, अतः समग्रभारतमेव तस्य प्रदेशः इत्यपि वक्तुं शक्यते। एतदीयमातापित्रोः नामनी अद्यापि नोपलभ्येते न वा, अयमेव सम्यक्तया निर्णयो जातः यदयं कुत्रत्यः इति। अस्य काव्यनाटकेषु आसमुद्रं भूस्थानानि वर्णितानि सन्ति। अस्य देशः काश्मीर इति, बङ्गाल इति, गालव इति च विभिन्नाः वा वादाः मण्डिताः बुधैः। यद्यपि कालिदासत्रयीति समालोचकपरम्परया

अवबुध्यते तथापि संस्कृतसाहित्यपरिचितानां मनःसु सः अन्यतमः कालिदासः। कालिदासस्य काव्यत्रयं नाटकत्रयं च जगन्मोहयति। आवर्जयति च हठात् पाश्चात्त्यविदूषामपि मनांसि।

## २.१.३) कालिदासस्य कृतयः

कालिदासस्य कृतयः कति सन्ति इत्यस्मिन् विषये अपि मतविरोधः अस्ति। तथापि बहूनां विदुषां मतानुसारेण कालिदासस्य सप्त कृतयः सन्ति। तद्यथा द्वे महाकाव्ये रघुवंशकुमारसंभवे। खण्डकाव्यद्वयं ऋतुसंहारं मेघदूतञ्च। नाटकत्रयं वर्तते। तद्यथा अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयम् चेति। एतान् ग्रन्थान् अतिरिच्य अपि पुष्पवाणविलासः, शृङ्गाररसाष्टकम्, नलोदयः प्रभृतिग्रन्थाः कालिदासस्य इति केचिद् आहुः। परन्तु विदुषां मतानुसारम् एतेषां ग्रन्थानां लेखकः तु कालिदासः नास्ति।

### ऋतुसंहारम्-

ऋतुसंहारं कालिदासस्य खण्डकाव्येषु एकम् अन्यतमम्। ऋतुसंहारे षट् सर्गाः सन्ति। ग्रन्थेऽस्मिन् द्विपञ्चाशदुत्तरैकशतं(१५२) श्लोकाः सन्ति। ग्रीष्मतः वसन्तऋतुपर्यन्तानाम् ऋतूनां ग्रन्थे वर्णना प्राप्यते। कालस्य विवर्तनात् प्रकृतौ कथं परिवर्तनं भवति तस्य चित्रम् अत्र प्राप्यते। अत्र विशेषतः प्रकृत्याः परिवर्तनेन मनुष्यानां भोगोपकरणं वर्णितम्। अस्य च काव्यस्य चित्रधर्मिता-गीतिधर्मितारूपाणि वैशिष्ट्यानि दृश्यन्ते। परन्तु ऋतुसंहारः कालिदासस्य एव ग्रन्थः इति विषयेऽस्मिन् मतभेदः दृश्यते। ऋतुसंहारे विभिन्ने ऋतौ युवकयुवत्योः सम्भोगवर्णनं कृतं कविना। सरलरचनावशात् बहवः कालिदासस्य रचना एषा इति नैव कथयन्ति। केचित् कथयन्ति यद् कालिदासस्य युवकसमये रचना इयम्।

### मेघदूतम्-

कालिदासस्य रचनासमूहानां मध्ये जनप्रियकाव्यम् भवति। मन्दाक्रान्ताच्छन्दसा एव लिखितः ग्रन्थोऽयम्। धीरललितः नायकः यक्षः। नायिका यक्षिणी विशालाक्षी। ग्रन्थेऽस्मिन् मेघद्वयं वर्तते। पुर्वमेघः उत्तरमेघः चेति। कर्तव्यतः च्यूतिकारणात् यक्षः कुबेरस्य आदेशात् पत्नीं त्यक्वा रामगिरौ निवसति। वर्षाकाले प्रियां विहाय स्थितस्य यक्षस्य अवस्था अत्र वर्णिता। किञ्च, मनुष्याः कथं कामपीडिताः भूत्वा आचरणं कुर्वन्ति तस्य वर्णना दृश्यते। अत्रैव प्रथमवारं जडपदार्थं स्वीकृत्य कोऽपि कविः दूतरूपेण तं प्रदर्शितवान्। अत्र प्रियाविहीनजनानाम् अवस्था वर्ण्यते कविना। अत्र श्लोकपठनेन एव प्रकृतेः चित्रं स्पष्टं प्रतिभाति।

### रघुवंशमहाकाव्यम्-

रघुवंशम् १९ सर्गात्मकं महाकाव्यम्। अत्र रघोः वंशस्य कथा निबद्धा। रघुः अत्यन्तं पराक्रमी दानशूरः च आसीत्। तस्य वंशीयानां गुणवर्णनम् अस्मिन् काव्ये अस्तीति कविरयं रघुवंशम् इति नामधेयमकरोत्। प्रधानतया दिलीपः रघुः अजः दशरथः रामः लवः अतिथिः इत्यादीनां राजश्रेष्ठानां वर्णनमस्ति। दिलीपः सत्यसन्धः, रघुः पराक्रमी दानशीलश्च, अजः कोमलहृदयी प्रेममयश्च, श्रीरामः सर्वोत्तमः इत्थम् एते चत्वारः अपि धर्मार्थकाममोक्षाणां प्रतीकाः सन्ति। काव्येऽस्मिन् रघुदिग्विजयः,



अजविलापः, सीतापरित्यागः इत्यादयः भागाः चित्ताकर्षकाः सन्ति। दशसु सर्गेषु रामायणस्य सारसर्वस्वं न्यरूपयत् महाकविः। अजविलापसर्गं यावत् अवर्णयत्। प्रत्येकं सर्गेऽपि आकर्षकः कश्चन अंशः विद्यते। कथाभागः वर्णनं च परस्परं सम्मिल्य काव्यस्यास्य अन्यादृशं सौन्दर्यम् अवर्धयत्। रसानां परिपक्वता तन्मयत्वं जनयति। नवरत्नविराजितः मुक्ताहारः इव काव्यं सर्वविधसौन्दर्ययुक्तं सत् सहृदयानां प्रीतिपात्रताम् आवहति। कालिदासेन अन्यानि काव्यानि नाटकानि ग्रथितानि चेदपि संस्कृतग्रन्थकाराः तं रघुकविः इति प्राशंसन्। तस्मात् अस्य काव्यस्य उत्कृष्टता अवगम्यते। दशमसर्गादारभ्य पञ्चदशसर्गपर्यन्तं रामस्य कथा वर्णिता। तदुत्तरं रामवंशीयानां तत्तन्नृपाणां चरितानि उपन्यस्तानि। अन्तिमः सर्गो गर्भान्धस्य अग्निवर्णस्य अभिषेकेण समाप्यते। कालिदासः अग्निवर्णपरवर्तिनां राज्ञामपि वर्णनं चिकीर्षति स्म। परमसौ कालेन कवलीकृतः। अन्ये पुनः कथयन्ति कालिदासेन परतोऽपि रघुवंशस्य सर्गाः लिखिताः परन्तु ते न प्राप्यन्ते इत्याहुः। बहवः तु कालिदास-अग्निवर्णसमकालिकतया ग्रन्थस्य तत्पर्यन्तां समर्थयन्ते। रघुवंशे येषां राज्ञां वर्णनानि सन्ति, तेषां रामायणवर्णितनृपैः सह भेदः आपतति, परन्तु वायुपुराणवर्णितरामवंशावल्या सह रघुवंशवर्णितरामवंशावली भूयसा सामञ्जस्यं धारयति। दशमसर्गादारभ्य पञ्चदशसर्गपर्यन्तं रामस्य कथा वर्णिता। तदुत्तरं रामवंशीयानां नृपाणां चरितानि उपन्यस्तानि। रामायणतः रामकथाम् आश्रित्य महाकविः कालिदासः रघुवंशमहाकाव्यं विरचितवान्। संस्कृतसाहित्यजगति रघुवंशमहाकाव्यम् अतीव जनप्रियम् च।

### कुमारसम्भवमहाकाव्यम्-

कुमारसम्भवं किञ्चन महाकाव्यम्। शिवपार्वत्योः प्रेम्णः वर्णनपुरस्सरं देवसेनापतेः स्कन्धस्य कुमारस्य जननवर्णनयुक्तम् अपूर्वम् इदं महाकाव्यम्। इदमपि महाकाव्यं १७सर्गात्मकम्। परं पूर्वं २२ सर्गाः स्युः इति केषाञ्चित् विदुषाम् अभिप्रायः। सृष्टिकर्तुः ब्रह्मदेवस्य वरप्रसादेन तारकासुरः प्रबलो भूत्वा सकलान् अमरान् पीडयामास। तस्मात् ब्रह्मणः सूचनानुसारं शिवपार्वत्योः विवाहम् अकारयन् देवाः। तयोः पुत्रेण कुमारेण तारकासुरः निहतः। अयं कथाभागः अत्र कविना सुमधुरसरसशैल्या वर्णितः।

रामायणगतम् अधो लिखितं पद्यं पठित्वैव कालिदासेन स्वकाव्यस्य नाम कृतं स्यादिति विद्वांसः तर्कयन्ति।

एष ते राम गङ्गायाः विस्तारोऽभिहितो मया।
कुमारसम्भवश्चैव धन्यः पुण्यस्तथैव च ॥ (बालकाण्डे७/३२)

काव्यारम्भे कविः नगाधिराजः हिमालयः पृथिव्याः मानदण्ड इव स्थितः इति मनोहररूपेण अवर्णयत्। काव्येऽस्मिन् रतिविलासः, वसन्तवर्णनं, पार्वत्याः तपसः वर्णनञ्च अपूर्वमस्ति। महाकाव्येऽस्मिन् कवेः प्रतिभा परां काष्ठां प्राप्नोत्। काव्यस्यास्य भाषा, काव्यचारुत्वम्, उन्नतसंस्कृतेः परिसरं, सुन्दरोपमाननिदर्शनादयः काव्यस्य सौन्दर्यम् अवर्धयन्।

कुमारसम्भवकाव्ये तपसि तत्परा हिमनगसुता पार्वती ब्रह्मचारिवेषधारिणः शिवस्य सम्भाषणं श्रुत्वा ततः गन्तुम् इष्टवती। तदा अनल्पकल्पनामूर्तिः कविः कालिदासः सर्वथाऽभिनवां मर्मस्पर्शिनीं च उपमां प्रस्तौति-

शिलाधिराजतनया न ययौ न तस्थौ।

मार्गाचलव्यतिकराऽऽकुलितेव सिन्धुः।।इति।।

अत्र मार्गाचलव्यतिकरेण आकुलिता नदी इव शिलाधितनया अस्ति। एतस्याः शारीरिकी मानसिकी च समीचीना स्थितिः पद्यांशेन अनेन सम्यक् परिलक्ष्यते।

### अभिज्ञानशाकुन्तलम्-

अभिज्ञानशाकुन्तलं नाटकं तु कालिदासस्य नाम संस्कृतजगति सर्वोपरि स्थापितवत्। संस्कृतसाहित्ये शाकुन्तलमिव नाटकं नास्ति एव। प्रायः भारतवर्षे सर्वासु भाषासु अस्य नाटकस्य अनुवादः जातः। सर्वत्रैव अस्य नाटकस्य प्रदर्शनं भवति। अपि लोकश्रुतिः अस्ति नाटकेषु रम्यं शाकुन्तलम्। शाकुन्तनाटके सप्त अङ्काः सन्ति। अपि च शाकुन्तलस्य चतुर्थोऽङ्कस्य एकान्तेन मनोज्ञेन पठनं क्रियते चेद् ज्ञायते सामाजिकगुरुत्वं कियत् वर्तते।

### विक्रमोर्वशीयम्-

उर्वशीपुरुरवसोः प्रेमकथा अस्मिन् नाटके विद्यते। संस्कृतसाहित्ये एषा कथा अतिप्राचीना जनप्रिया च आसीत्। ऋग्वेदस्य संवादसूक्तात् एषा घटना प्राप्यते। तां घटनाम् आधारीकृत्य एव नाटकमिदं विरचितम् कविना। अभिशापवशात् उर्वशी स्वर्गतः मर्त्यं प्रति आगतवती। मर्त्ये आगमनात् परं राज्ञा पुरुरवसा साकं तस्याः मेलनम् अभवत्। ततः एव तयोः प्रणयः आरब्धः। परन्तु अभिशापान्ते उर्वशी पुनः स्वर्गं प्रति गतवती पुरुरवसं च त्यक्तवती। विरहवशात् पुरुरवाः उन्मत्तप्रायः अभवत्। इन्द्रः तयोः प्रेम दृष्ट्वा उर्वशीं पुनः पुरुरवसा साकं मेलनाय सम्मतिं दत्तवान्।

### मालविकाग्निमित्रम्-

पञ्चाङ्कविशिष्टनाटकम् इदं विदिशानरेशाग्निमित्रमालविकाग्निमित्रयोः प्रेमकथाम् अवलम्ब्य लिखितम्। नाटकमिदम् अतीव रोमाञ्चकरम्।

## २.१.४) कालिदासस्य भाषाशैली

रससिद्धस्य अस्य कवीश्वरस्य महिमा तदीयकाव्यैः एव ज्ञायते। तस्य काव्यस्य परिशीलनेन वेदशास्त्रपुराणेषु तस्य अगाधं पाण्डित्यम् आसीत् इति ज्ञायते। कल्पनाचातुर्यं, पदानां माधुर्यं, पात्रसंविधाननैपुण्यं, रसोल्लासः, ललितानि मनोहराणि वचनानि इत्यादिभिः सुगुणैः अस्य कवेः काव्यानि सर्वजनादरणीयानि। कालिदासः भारतीयसंस्कृतेः प्रतिनिधिः कविरिति सुधीभिः पुरस्कृतः। अस्य रचनाः चतुर्वर्गपुरुषार्थानां प्रदानसाधनस्वरूपाः इत्यपि स्वीकृतं सरसान्तःकरणैः सहृदयैः। अयं महाकविः वैदर्भीरीतेः सम्राट्, प्रसादगुणपरिपूर्णः, उपमाप्रयोगगुरुः प्रकृतिचित्रणचित्रकारः, व्यञ्जनाप्रयोगशाली, अभिनवकल्पनाकुशलः, अन्यतमः काव्यशिल्पी विराजते। कविनां रविः इव विराजते महाकविः कालिदासः। कालिदासस्य भाषा सरला अदोषपूर्णा। किञ्च आयासराहित्येन एव कविः सरलया भाषया तत्त्वम् उपदिशति। अस्मात् कारणात् एव कालिदासस्य काव्यम् अतीवलोकप्रियतां गच्छति। अपि च कालिदासस्य रचना न केवलं विदुषां बालकानाम् अपि रुचिकरणं प्रतिभाति।

तद्यथा रघुवंशे दृश्यते-

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणागुणान्बन्धित्वात् तस्य सप्रसवा इव।।इति।।**

कालिदासस्य काव्यमाधुरी तथा प्रसिद्धा यथा नार्हति प्रस्तावानाम्। आलोचकानां सम्मतौ कलापक्षापेक्षया हृदयपक्षस्य चमत्कार्युपन्यसनं यस्य काव्ये संभवति स कविः श्रेष्ठः। एतदनुकूलं हृदयपक्षस्य चमत्कारचित्रणं कालिदासस्य काव्येषु सर्वत्र दृश्यते। मानवजीवनस्य सर्वाङ्गसम्पूर्णं चित्रमुपस्थापयितुम् असौ रघुवंशं प्रणीतवान्। प्रेम्णः परं प्रकर्षं प्रकाशयितुं कुमारसम्भवं निर्ममे।

**अलङ्कारप्रयोगः-**

'उपमा कालिदासस्य' यद्यपि एषा उक्तिः संस्कृतजगति सर्वत्र प्रचलिता तथापि न केवलं उपमायाः प्रयोगे एव शूरः कालिदासः। सर्वेषाम् अलङ्काराणां प्रयोगः कालिदासेन कृतः। उपमालङ्कारस्य प्रयोगः भूयो भूयो दृश्यते। किञ्च, उपमालङ्कारस्य यथा प्रयोगः कृतः तथा प्रयोगः न केनापि कर्तुं शक्यः।

## पाठगतप्रश्नाः-१

१. कालिदासस्य कति काव्यानि वर्तन्ते।
२. कालिदासस्य कालः कः।
३. कालिदासस्य कति नाटकानि वर्तन्ते।
४. कालिदासः कस्य अलङ्कारस्य वर्णने शूराः आसन्।
५. रघुवंशे कति सर्गाः वर्तन्ते।
६. रघुवंशे केषां नृपाणां वर्णनम् अस्ति।
७. कुमारसम्भवे कति सर्गाः सन्ति।
८. कुमारसम्भवे कुमारः कः।
९. कुमारसम्भवे नायकः कः।
१०. कालिदासस्य देशः कुत्र वर्तते।

## २.२) अश्वघोषः

संस्कृतसाहित्यस्य अश्वघोषः सुप्रसिद्धः महाकविः। साकेतनगरम् अस्य जन्मस्थानम्। साकेतनगरम् अधुनातनम् अयोध्यानगरमेव। एष आर्यसुवर्णाक्ष्याः पुत्र आसीत्। अस्य काल ईशायाः प्रथमशताब्दीति स्वीक्रियते जिज्ञासुभिः। अयं सम्राजः कनिष्कस्य समकालिकः। अश्वघोषः

कनिष्कराजस्य गुरुः आसीत्। जन्मना ब्राह्मणः स वेदादिशास्त्रेषु निष्णातः प्रतिवादिभयङ्करः महापण्डित आसीत्। पश्चात् अश्वघोषः बुद्धस्य उपदेशैः आकृष्टः महायानशाखाम् आसक्तो बुद्धसङ्घाध्यक्षात् वसुमित्रात् बौद्धदीक्षां प्राप्य बौद्धमतमङ्गीकृतवान्। अयम् सङ्गीतेऽपि परिणतः आसीत्। अस्य गायनसमये अश्वाः अपि गानमुग्धाः तत्समये तृणादीनि न सेवन्ते स्म। अत एव "अश्वघोष" इति अस्य नाम प्रथितम्।

अश्वघोषः सुवर्णाक्षीपुत्रः पार्श्वस्य शिष्यश्च कथ्यते। स हि मगधराजाश्रितः आसीत्। उत्तरभारतशासकः कनिष्को मगधाधीशम् आक्रमणेन नामयित्वा राज्यस्य विनिमयेन वस्तुद्वयं दातुमादिष्टवान् १) बुद्धस्य पात्रम् २) अश्वघोषञ्च। राजा मगधानां पात्रं दातुमुद्यतोऽपि कविम् अश्वघोषं दातुं नैच्छत्। मन्त्रिणस्तं तथाऽवलोक्य चिन्ताग्रस्ताः अजायन्त। राजा मन्त्रिणां बोधनाय उपायमेकं कृतवान्। स हि स्वाश्वशालास्थितेभ्यः अश्वेभ्यः दिनमेकं यावत् ग्रासप्रदानं न्यषेधयत्। दिनान्तरे सर्वेषां हयानामग्रे ग्रासं प्रदाय अश्वघोषम् स्वसङ्गीतकरणाय प्रोक्तवान्। तदा अश्वघोषस्य सङ्गीतमेव श्रोतुम् इच्छन्ति अश्वाः न तु ग्रासम्। तदा कवेः अश्वघोषस्य मूल्यम् अजानन्। एतावता एव असौ तन्नाम्ना प्रथते स्म। वास्तविकं च तन्नाम अलुप्यत्। अश्वघोषः कथञ्चित् कनिष्केण सह काश्मीरान् गतः। तेन बह्वादृतश्च। कनिष्कसमकालिकतयाऽश्वघोषस्य समयः ईशवीयपूर्वप्रथमशतकम् इति निर्णितम्। अश्वघोषस्य काव्यं चीनभाषायाम् ३८४-४१७ ई. समये अनूदिम्। इत्सिङ्गो नाम चीनी यात्री अश्वघोषं महोपदेशकं नागार्जुनात् पूर्ववर्त्तिनं च आह। अयं साकेतवासीति प्रसिद्धम्।

## २.२.१) कालः

अश्वघोषः प्राक्कालिदासीयकविः इति श्रूयते। क्रिस्ताब्दप्रथमशतकस्य राज्ञः कणिष्कस्य समसामयिकः आसीत्। अतः कणिष्कस्य कालः एव अश्वघोषस्य कालः इति स्वीक्रियते। अतः अश्वघोषस्य कालः ई.पू. प्रथमशतकम् इति।

## २.२.२) देशः

अश्वघोषः महाराजस्य कणिष्कस्य सभाकविः आसीत् इति ज्ञायते। अतः तस्य देशः आसीत् मगधः। अश्वघोषस्य जन्मस्थानं तु साकेतम्।

## २.२.३) कृतयः

महाकविः अश्वघोषः दार्शनिकः पण्डितः धर्मप्रवक्तृरूपेण च प्रसिद्धः आसीत्। विभिन्नशास्त्रेषु तस्य पाण्डित्यम् आसीत्। महाकविना अश्वघोषेण बुद्धचरितम् सौन्दरनन्दम्, शारिपुत्रप्रकरणं, गण्डीस्तोत्रगाथा, वज्रसूची, सूत्रालङ्कारः च एते ग्रन्थाः लिखिताः।

### बुद्धचरितम्

बुद्धचरितम् अश्वघोषस्य काव्यम् अस्ति। अस्मिन् महाकाव्ये सप्तदश सर्गाः उपलभ्यन्ते। अयं ग्रन्थः बहुशः त्रिसहस्रश्लोकपरिमितः आसीदिति चीनादेशीयस्य प्रो.तककुसुमहाशयस्य ग्रन्थात् ज्ञायते। किन्तु अधुना लभ्यमाने अस्मिन् काव्ये केवलम् १३६८ श्लोकाः सन्ति। किन्तु सप्तमेऽष्टमे वा शतके

चीनभाषया भाषान्तरिते, तिब्बतीयभाषया भाषान्तरिते बुद्धचरिते च २८ सर्गाः भवन्ति। एतेन ज्ञायते यत्, संस्कृतभाषायां बुद्धचरितस्य भागमात्रं लब्धम् इति। राजा शुद्धोदनः कपिलावस्तुनाम्नि नगरे राज्यभारं कुर्वन्नासीत्। तस्य पुत्रः सिद्धार्थः। सिद्धार्थः युवराजः आसीत्। एतस्य समृद्धम् राज्यम्, प्रवृद्धः अधिकारः, सौन्दर्यवती प्रिया च भार्या यशोधरा। स्वर्गसमानं सुखमयम् जीवनं सिद्धार्थस्य आसीत्। तथापि सः वैराग्यमापन्नः कथम्। इति "बुद्धचरिते" वर्णितं कविना। तत्र महात्मनः बुद्धस्य सम्पूर्णजीवनं निबद्धमस्ति। तद्यथा अभिनिष्क्रमणं, तपोवनगमनं, यशोधराविलापः, मगधयात्रावर्णनं, सिद्धार्थस्य बुद्धत्वप्रापणम्, धर्मप्रचारः, शिक्षाप्रसारः इत्यादयः विषयाः सरलया भावपरिपूर्णया च भाषया वर्णिताः। काव्ये बौद्धमतस्य पारिभाषिकाः शब्दाः बाहुल्येन विद्यन्ते। अश्वघोषः बौद्धमतस्य महायानपरम्परायाः प्रवर्तक आसीदिति बुद्धचरितादवगम्यते।

हृदयगतभावनाया उद्बोधिका भवति कविता। कविता मानवहृदयम् उत्तेजयति समाकर्षति च। अतः प्राचीनकालादेव मानवः धर्मस्य स्वोद्देश्यस्य च प्रचाराय कवितायाः आश्रयं गृह्णाति। महाकविः अश्वघोषोऽपि बौद्धधर्मप्रचाराय काव्यं विरचितवान्। सौन्दरनन्दस्यान्ते कविना स्वयमेवोक्तम् यत् यथा तिक्तौषधस्य पानाय मधुना सम्मेल्यते तथैव अहं धर्मप्रचाराय काव्यस्य आश्रयं गृहीतवान् अस्मि। अत एव अश्चघोषस्य काव्यकृतिः बौद्धधर्मस्य दार्शनिकविचाराणां प्रचारिका विद्यते। तथापि अश्चघोषः प्रकाण्डविद्वानासीत् नात्र संशयः। बौद्धदर्शनेषु बौद्धसिद्धान्तस्य अयं कविः आचार्यः एवासीत्। अस्यैते प्रामाणिका ग्रन्थाः सन्ति बुद्धचरितम्, सौन्दरनन्दम्, शारिपुत्रप्रकरणञ्चेति। अन्ये ग्रन्थाः अन्तर्बाह्यप्रमाणाभ्यामनेन रचिताः न प्रतीयन्ते। काव्ये कतिचिदंशाः सरसाः काव्यकलादृष्ट्या चोत्तमाः विद्यन्ते। परिशेषास्तु नीरसा एव।

### सौन्दरनन्दम्-

अष्टादशसर्गात्मकं काव्यं सौन्दरनन्दम्। इक्ष्वाकुवंशस्य राज्ञः नन्दस्य धर्मपत्न्या सुन्दर्या साकं प्रणयः अत्र काव्ये वर्णितः। अत्र सुन्दर्याः विरहे यदा नन्दस्य मरणापन्नस्थितिः जाता तदा गौतमबुद्धः तं नन्दम् उपदिष्टवान्। स उपदेशः बहु तात्पर्यपूर्णः आसीत्। काव्योत्कर्षदृष्ट्या तु सौन्दरनन्दं बुद्धचरितम् अतिशेते। अत्र हि कविः निखिलम् एव कलाकौशलं काव्यवैभवञ्च प्रदर्शितवान्।

### शारिपुत्रप्रकरणम्-

शारिपुत्रप्रकरणम् अश्वघोषस्य प्राच्यनाट्यम् इति कथ्यते। परन्तु विषये अस्मिन् मतभेदाः वर्तन्ते। बहूनां मते शारिपुत्रप्रकरणम् अश्वघोषस्य कृतिः नास्ति। परन्तु रचनाशैल्या केषाञ्चित् मतं इदं नाटकम् अश्वघोषस्य एव। नाटके अस्मिन् नवाङ्काः सन्ति। नायकश्च धीरोदात्तस्वभावः अस्ति।

### सूत्रालङ्कारः -

बौद्धदर्शनशिक्षणपरस्य अस्य ग्रन्थस्य केवलं तिब्बतीभाषायाम् अनुवादः वर्तते। न तु मूलस्वरूपं किमपि लभ्यते। अत्र हि नैतिकविचारोन्नायिकाः कतिपयाः कथाः सङ्गृहीताः सन्ति।

### वज्रसूची-

ग्रन्थोऽयं बौद्धधर्मव्याख्यानपरः वर्तते। वर्णव्यवस्थापद्धतिं च दूषयति। केचित् तु इदं काव्यं धर्मकीर्तेः वदन्ति न तु अश्वघोषस्य। अतः महान् भेदः वर्तते।

### महायानश्रद्धोत्पादकशास्त्रम्-

शास्त्रमिदं शून्यवादविवेचकम् अस्ति। अस्यापि मौलिकं रूपं तु नैव उपलभ्यते। चीनभाषायां तस्य अनुवादः अस्ति।

## २.२.४) अश्वघोषस्य पाण्डित्यम्

अश्वघोषस्य साहित्यिकं पाण्डित्यं बौद्धदर्शनज्ञानं च अतीव गम्भीरम् आसीत्। स हि दार्शनिकम् अपि तथ्यं सरससरलशैल्यां समुपस्थापयति। अश्वघोषः आदौ ब्राह्मणः आसीत् अतः ब्राह्मणसाहित्यस्यापि गाढं ज्ञानं तस्यासीत्। अपि च तस्य नीतिशास्त्रस्य अर्थशास्त्रस्य व्याकरणशास्त्रस्य च विषये सम्यक् ज्ञानम् आसीत्। असौ योगाचारमतस्य स्थापकः आसीत्।

## पाठगतप्रश्नाः-२

११. अश्वघोषः कस्य राज्ञः निकटे आसीत्।
१२. अश्वघोषस्य कति काव्यानि वर्तन्ते।
१३. अश्वघोषविरचितम् एकं नाटकं किम्।
१४. अश्वघोषस्य कालः कः।
१५. बुद्धचरिते कति सर्गाः सन्ति।
१६. बुद्धचरिते नायकः कः।
१७. बुद्धस्य पिता कः आसीत्।
१८. सौन्दरनन्दं कस्य कृतिः।
१९. सौन्दरनन्दे कति सर्गाः विद्यन्ते।
२०. वज्रसूची कस्य कृतिः।
२१. शारिपुत्रप्रकरणं कस्य रचना।

## २.३) भारविः

### २.३.१) भूमिका-

भारविः शैवमतावलम्बी, प्रकाण्डपण्डितः, राजनीतिज्ञः, वीररसवर्णनकुशलः, अलङ्कृतशैल्याः प्रवर्तकः च आसीत्। भारविणा निजपरिवारस्य, निवासस्थानस्य, पितुः, पितामहस्य, गुरोर्वा विषये कोऽप्युल्लेखो न कृतः किरातार्जुनीये। दण्डिविरचितम् अवन्तिसुन्दरीकथानुसारेण कुशिकगोत्रीयः ब्राह्मणः आसीत् भारविः। ते आनन्दपुरे निवसन्ति स्म। ततः परं ते वरारप्रान्तम् अचलपुरम् एलिपुरम् आगत्य निवासम् अकुर्वन्। अस्मिन्नेव वंशे नारायणस्वामी जातः। तस्य पुत्रः एव दामोदरः आसीत्। अयमेव दामोदरः भारविः इति नाम्ना प्रख्यातः अभवत्। तत्र भारविविषयकः श्लोकः अयं प्राप्यते -

**स मेधावी कविर्विद्वान् भारविं प्रभवां गिराम्।**
**अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने॥इति।।**

इत्थं भारविः दण्डिनः प्रपितामहः आसीत्। तस्य स्थितिकालः ६०० ईशवीयसमीपे मन्यते। अस्य 'किरातार्जुनीयम्' नाम एकमेव महाकाव्यं प्राप्यते; यत् बृहत्त्रय्यां प्रथमस्थाने' परिगणितम्। संस्कृतविद्वत्समाजे 'भारवेरर्थगौरवम्', 'नारिकेलफलसम्मितं वचो भारवेः' 'स्पुटता न पदैरपाकृता' इति आभणकानि सुप्रसिद्धानि एव। महाकविभारविकृते किरातार्जुनीयमहाकाव्ये वर्णितभौगलिकवर्णनानुसारेण तस्य देशकालविषये ज्ञानं करणीयम्।

### २.३.२) देशकालश्च-

भारवेः देशकालविषये विविधानि मतानि अधस्तात् उपन्यस्यन्ते -

#### प्रथमम् -

दक्षिणभारते एहोलग्रामे ६३४ ख्रिष्टीयजैनकविना रविकीर्तिना लिखिते शिलालेखे "स विजयतां रविकीर्तिः कविताश्रितकालिदास-भारविकीर्तिः" इत्यनेन ज्ञायते यत् सप्तमशताब्द्याः पूर्वार्धं यावत् भारविः सुविख्यातः कविः आसीत्।

#### द्वितीयम् -

काव्यकलायाः उत्तरोत्तरप्रभावदृष्ट्या कालिदासः भारवेः पूर्ववर्ती महाकविमाघश्च उत्तरवर्ती कविरासीत्। माघस्य स्थितिकालः ७०० ख्रिष्टीयाब्दः मन्यते। अतः भारवेः स्थितिकालः षष्ठशताब्द्याः उत्तरार्द्धे भवितुम् अर्हति।

#### तृतीयम्-

काशिकायां भारवेः (किरात ३/१४) इत्युदाहरणं प्राप्यते। अतः भारवेः कालः वामनजयादित्याभ्यां परं (सप्तमशताब्दी पूर्व) षष्ठशताब्द्याः उत्तरार्द्धे भवेत्।

### चतुर्थम्-

अवन्तिसुन्दरीकथानुसारं दण्डिनः प्रपितामहः दामोदरः एव 'भारविः' यः विष्णुवर्धनस्य (६१५ ई.) सभापण्डितो आसीत्। अतः तस्य कालः षष्ठशताब्द्याः उत्तरार्धे भवितुम् अर्हति। निष्कर्षरूपेण एवं प्रतिभाति यत् भारवेः स्थितिकालः षष्ठशताब्द्याः उत्तरार्द्धे सप्तमशताब्द्याः पूर्वार्द्धे (५५०-६०० ई.) भवितुम् अर्हति।

## २.३.३) कृतयः

### किरातर्जुनीयम् कवेः भाषाशैली-

महाकविभारविना महाभारतकथाम् आश्रित्य अलंकृतकलापक्षप्रधानशैल्या विरचितं अष्टादशसर्गात्मकं वीररसप्रधानम् किरातार्जुनीयमहाकाव्यम्। अर्थगाम्भीर्ययुक्तं बृहत्त्रय्यां प्रथमपरिगणितं 'किरातार्जुनीयम्' नाम एकमेव महाकाव्यं समुपलभ्यते। अस्य ग्रन्थस्य शुभारम्भः 'श्री' शब्देन, सर्गान्तः 'लक्ष्मीशब्देन च भवति। अत्र अर्जुनस्य किरातवेशधारिणा शङ्करेण सह युद्धं वर्णितम्। अत एव ग्रन्थस्य नामकरणं कृतं 'किरातार्जुनीयम् इति। किराताश्च अर्जुनश्च किरातार्जुनौ (द्वन्द्वः) किरातार्जुनौ अधिकृत्य कृतं काव्यं किरातार्जुनीयम्। किरातार्जुन+छ ('ईय'आदेशः) अर्जुनाय दिव्यास्त्राणां प्राप्तिरेव महाकाव्यस्य फलम्। अतः ग्रन्थस्य अस्य नायकः अर्जुनः नायिका च द्रौपदी वर्तते। अर्थगौरवं, स्पष्टता, पुनरुक्तेरभावः अलंकृतशब्दयोजनाश्च अस्य महाकाव्यस्य वैशिष्ट्यम्। भारविना एकाक्षरद्वयक्षरश्लोकाः अपि रचिताः। तद्यथा "न नोनन्नुनो नाना नानानना ननु" (किरात. १५/१४)। ग्रन्थेऽस्मिन् ऋतुवर्णनं, हिमालयवर्णनं, सन्ध्यावर्णनं, चन्द्रवर्णनं, प्रभातमित्यादीनां रोचकं रमणीयञ्च चित्रणं विद्यते। एवमेव पञ्चदशे सर्गे चित्रकाव्यस्य वर्णनं दर्शनीयम्। प्रथमसर्गे द्रौपद्याः कथने या वचनचातुरी विद्यते, सा अन्यत्र दुर्लभा एव।

किरातार्जुनीयस्य कथानकस्य मूलाधारः महाभारतम् अस्ति। महाभारतस्य अष्टादशसर्गेषु वनपर्वणि किरातार्जुनीयस्य कथा अस्ति। अत्र किरातः तद्वेशधारी शिवः अस्ति। महाभारतात् संक्षिप्तकथानकं स्वीकृत्य भारविः स्वकल्पनाभिः काव्यप्रतिभया च कथानके मौलिकताम् उत्पादितवान्। महाभारतस्य शैली सरला अस्ति किन्तु किरातार्जुनीयस्य शैली क्लिष्टा अलङ्कृता च अस्ति। महाकाव्यलक्षणानुरोधेन भारविः बहुत्र ऋतु- पर्वत- नदी- वन- प्रातः-सन्ध्यादीनाम् अपि सुन्दरं वर्णनं कृतवान्। भारवेरर्थगौरवम् इति उक्त्यनुसारम् किरातर्जुनीयस्य अर्थगौरवम् अतीव प्रसिद्धम् अस्ति।

## पाठगतप्रश्नाः-३

२२. भारवेः देशः कः।

२३. भारवेः काव्यस्य नाम किम्।

२४. भारवेः कालः कः।

२५. किरातः कः आसीत्।

२६. किरातार्जुनीये कति सर्गाः सन्ति।

## पाठसारः-

पाठे अस्मिन् कालिदासाश्वघोषभारवीणां देशकालकृतिविषये वर्णना वर्तते। अपि च कालिदासादीनां गुरुत्वं वर्णितम्। कवीनां देशकालविषये मतभेदाः अपि प्रदर्शिताः। कवीनां पाण्डित्यभाषाशैलीविषये वर्णना पाठे वर्तते। अत्र अस्माभिः ज्ञातं यत् कालिदासस्य देशः उज्जयिनी वर्तते। कालिदासस्य कालः ई.पू.प्रथमद्वितीयशतकम् इति। कालिदास्य सप्त कृतयः सन्ति। अश्वघोषस्य देशः कनिष्कस्य राजधानी आसीत्। अश्वघोषस्य कालस्तु ई.पू.प्रथमशतकम्। अश्वघोषस्य विवादरहितं काव्यद्वयं वर्तते। बुद्धचरितं सौन्दरनन्दम् चेति। भारवेः कालः ईशवीयषष्ठसप्तमशतकम् इति। दक्षिणभारते भारविः आसीत् इत्येव ज्ञायते। भारवेः एकमेव महाकाव्यं वर्तते। तच्च किरातार्जुनीयम् इति।

## पाठान्तप्रश्नाः

१. कालिदासस्य कृतीः परिचाययत।।
२. कालिदासस्य भाषाशैलीं लिखत।
३. किरातार्जुनीयम् इति आधृत्य निबन्धं लिखत।
४. अश्वघोषस्य देशकालविषये लिखत।
५. अश्वघोषस्य कृतीः परिचाययत।
६. भारवेः देशकालविषये लघुनिबन्धं लिखत।
७. भारवेः पाण्डित्यम् प्रस्तूयताम्।
८. कालिदासस्य भाषाशैलीविषये निबन्धं लिखत।

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरस्तबकः- १**

१. कालिदासस्य द्वे काव्ये स्तः।
२. कालिदासस्य कालः ई.पू.प्रथमद्वितीयशतकम्।
३. कालिदासस्य त्रीणि नाटकानि वर्तन्ते।
४. कालिदासः उपमालङ्कारस्य प्रयोगे शूराः आसन्।
५. रघुवंशे १९ सर्गाः सन्ति।

६. रघुवंशे सूर्यवंशीयानां नृपाणां वर्णनम् अस्ति।

७. कुमारसम्भवे १७ सर्गाः सन्ति।

८. कुमारसम्भवे कुमारः कार्तिकः।

९. कुमारसम्भवे नायकः कार्तिकः।

१०. कालिदासस्य देश उज्जयिनी।

**उत्तरस्तबकः- २**

११. अश्वघोषः सम्राजः कनिष्कस्य सभायाम् आसीत्।

१२. अश्वघोषस्य द्वे काव्ये स्तः।

१३. अश्वघोषस्य एकं नाटकं शारिपुत्रप्रकरणम् इति।

१४. अश्वघोषस्य कालः इ. प्रथमशतकम्।

१५. बौद्धचरिते १७ सर्गाः सन्ति।

१६. बौद्धचरितस्य नायकः गौतमबुद्धः।

१७. बुद्धस्य पितुः नाम शुद्धोदनः।

१८. सौन्दरनन्दम् अश्वघोषस्य कृतिः।

१९. सौन्दरनन्दे १८ सर्गाः विद्यन्ते।

२०. वज्रसुची अश्वघोषस्य कृतिः।

२१. शारिपुत्रप्रकरणम् अश्वघोषस्य रचना।

**उत्तरस्तबकः- ३**

२२. भारवेः देशः काञ्चीपुरम्।

२३. भारवेः काव्यं किरातार्जुनीयम्।

२४. भारवेः कालः षष्ठशतकम् आसीत्।

२५. किरातः भगवान् शिवः।

२६. किरातार्जुनीये १८ सर्गाः सन्ति।

॥ इति द्वितीयः पाठः ॥

# ३

# कविपरिचयः-३

## प्रस्तावना

संस्कृतसाहित्ये नैके कवयः तेषां कृतयश्च विराजन्ते। तेषां याः कृतयः ताः पुस्तकरूपेण अस्माकं पुरत आयान्ति। किन्तु तत्तत्कवीनां विषये अस्माकं ज्ञानस्य अवकाशः न भवति। अतः तेषां कवीनां देशस्य कालस्य च ज्ञानमनिवार्यं यतः कवीनां काव्यानि प्रायेण देशेन कालेन च प्रभावितानि भवन्ति। अत्र प्रकरणे माघस्य श्रीहर्षस्य क्षेमेन्द्रस्य कल्हणस्य तथा च भट्टिस्वामिनः विषये आलोचनं विहितम् वर्तते। तेषां चरितम् काव्यस्य विशिष्टगुणाः रीतिः इत्यादयः विषयाः अत्र सम्यक् संगृहीताः। तान् वयं ध्यानेन परिच्छेदेऽस्मिन् पठामः।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- माघः श्रीहर्षः क्षेमेन्द्रः कल्हणः भट्टस्वामी इति एतेषां कवीनां देशकालकृतीः जानीयात्।
- तेषां काव्यरचनाशैलीं ज्ञास्यति।
- तेषां काव्यानां वैशिष्ट्यानि ज्ञास्यन्ति।
- शिशुपालवधकाव्यविषये ज्ञास्यति।
- माघे सन्ति त्रयो गुणा इति भणित्याः तात्पर्यम् अवगमिष्यसि।

## ३.१) माघः

### ३.१.१) सामान्यपरिचयः

माघस्य कृतौ शिशुपालवधमहाकाव्ये अन्तिमे कविः स्वयमेव स्वस्य परिचयं प्रादात्। तत एव ज्ञायते यत् दत्तक इति कश्चन माघस्य पितृदेव आसीत्। तस्य पितामहः सुप्रभदेवः वर्मलाताख्यस्य राज्ञः अमात्यपदम् अलङ्कृतवान्।

### ३.१.२) माघस्य देशः

पुरा मीनमल्लाख्यम् एकं नगरम् अवर्तत। तद् विद्यायाः पीठम् इति प्रथितम् आसीत्। एवञ्च अतः



एव राजधानी अपि आसीत्। माघस्य जन्म प्रथिते मीनमल्लाख्यनगरे अभवत्। मेरुतुङ्गाचार्यस्य मतेन श्रीमालनगर आसीत् माघस्य निवासस्थलम्। इदानीन्तने काले गुर्जरप्रदेशे भिन्माल इति ग्राम एव कवेः स्थलमिति अनेके मन्यन्ते। भोजप्रबन्धे गुर्जरनिवासी अयं कविः इति वर्णितं दृश्यते।

## ३.१.३) माघस्य कालः

वामनकृते काव्यालंकारे आनन्दवर्धनकृते ध्वन्यालोके तथा मुकुलभट्टकृते अभिधावृत्तिमातृका इत्यादिषु ग्रन्थेषु माघस्य पद्यानाम् उद्धृतानि दृश्यन्ते। अतः तेभ्यः कविभ्यः पूर्वकालिकोऽयं कविः इति अनुमीयते। महामतीनां महतः अनुशीलनात् ज्ञातं यत् सप्तशतकस्य अन्तिमात् अष्टमशतकपर्यन्तम् माघस्य काल इति।

## ३.१.४) माघस्य कृतयः

शिशुपालवधकाव्यं माघस्य एका एव कृतिः प्राप्यते। तत्र काव्ये द्वाविंशतिः सर्गाः सन्ति। तत्र १६२५ श्लोकाः सन्ति। अत्र युधिष्ठिरस्य राजसूये यागे श्रीकृष्णेन कृतः शिशुपालस्य वधः मुख्यतया वर्णितः। महाभारतोक्तां कथां माघो वर्णनमाहात्म्येन चमत्कारिणीं विहितवान्। अत्र काव्ये नायकः भगवान् श्रीकृष्णः प्रतिनायकश्च शिशुपालः।

## पाठगतप्रश्नाः-१

१. माघस्य पिता कः आसीत्।

२. माघस्य पितामहः कः आसीत्।

३. माघस्य पितामहः कस्य राज्ञः सभायाम् आसीत्।

४. माघस्य जन्म कस्मिन् नगरे बभूव।

५. माघः निवासस्थलं किं नगरमासीत्।

६. आनन्दवर्धनकृतस्य ग्रन्थस्य नाम किम्।

७. वामनकृतस्य ग्रन्थस्य नाम किम्।

८. माघः आनन्दवर्धनस्य पूर्वकालिक इति कथं ज्ञायते।

९. माघस्य कालः कः।

१०. माघस्य कति कृतयः, काः च ताः।

११. शिशुपालवधस्य मुख्यः विषयः कः।

१२. शिशुपालवधकाव्यस्य उपजीव्यः ग्रन्थः कः।

१३. शिशुपालवधस्य नायकः कः।

१४. शिशुपालवधस्य प्रतिनायकः कः।

## ३.२) शिशुपालवधकाव्यम्

अत्र महाभारतापेक्षया महाकाव्योपयोगिनः अनेके विषयाः वर्णिताः। तृतीयसर्गात् त्रयोदशसर्गं यावत् भगवतः श्रीकृष्णस्य ऐश्वर्य-प्रस्थ-वनविह-जलक्रीडा-रैवतकपर्वत-सन्ध्या-प्रातः-प्रकृत्यादिविषयाणां वर्णनानन्तरं महाराजस्य युधिष्ठिरस्य राजसूययज्ञे श्रीकृष्णस्य आगमनं वर्णितम्।

महाकविमाघेन प्रणीतं शिशुपालवधमहाकाव्यं विंशतिसर्गेषु पूर्णं जातम्। तस्य ऐतिहासिकं वृत्तमधोलिखितमस्ति-

पाण्डवाः प्रथमवनवासदिवसावधिं प्रपूर्य इन्द्रप्रस्थनगरीं समधिकृतवन्त आसन्। भगवतः श्रीकृष्णस्य कृपया अर्जुन-भीम- नकुल-सहदेवानाम्पराक्रमेण च धर्मराजेन युधिष्ठिरेण समग्रमपि जम्बूद्वीपं विजित्य विपुलं धनम् एकस्थीकृतम्। एवमतुलसाम्राज्यं विपुलं वैभवञ्च अवाप्य युधिष्ठिरो राजसूययज्ञं कर्तुम् ऐच्छत्। प्रायः समग्रस्य जम्बूद्वीपस्य (एशियायाः) भगवतः श्रीकृष्णस्य अनुयायिनो विरोधिनश्च राजानो यज्ञेऽस्मिन् आमन्त्रिता आसन्। यज्ञेऽस्मिन् भगवान् श्रीकृष्णः सर्वकर्मद्रष्टा आसीत्। सर्वेऽपि राजानो यज्ञकार्येषु योग्यतानुसारं भागं गृह्णन्ति स्म। अयं यज्ञ आसीत् ऐतिहासिकः। अतीवमहत्सज्जया यज्ञः सुसम्पन्नः। याज्ञिकाः ब्राह्मणाः दक्षिणादिना सत्कृताः।

ततः सदस्यपूजाया अवसरः समुपस्थितः। शास्त्रानुसारेण यज्ञसमाप्तौ गुणवतेऽर्घ्यप्रदानस्य नियमोऽस्ति। प्रतिष्ठेयं कस्मै प्रदेया इत्यस्मिन् विषये युधिष्ठिरो भीष्मम् पप्रच्छ। शास्त्रानुसारं षडङ्गवेदाध्ययनाध्यापनरतो ब्राह्मणस्नातकः, गुरुः बन्धुः, जामाता, राजा, ऋत्विग्, याज्ञिकश्चैते षट् सदस्याः पूजनार्हाः भवन्ति। यदि कश्चन सर्वगुणसम्पन्नः स्यात्तर्हि सोऽपि पूजनार्हो भवति। भीष्मोऽस्यै प्रतिष्ठायै भगवान् श्रीकृष्ण एव महत्तम इति उद्घोषितवान्। युधिष्ठिरश्च भगवन्तं श्रीकृष्णमेव पूजयामास।

शिशुपालो भगवतः श्रीकृष्णस्येदं सम्मानं द्रष्टुं नाशकत। स क्रोधाविष्टः रक्तीकृतनेत्रश्च सन् उच्चमुष्णञ्च श्वसितुमारेभे। धर्मराजं युधिष्ठिरं च निन्दित्वा भगवतः श्रीकृष्णस्योपरि नानाविधान् आक्षेपान् कर्तुं प्रवृत्तः। भगवान् श्रीकृष्णः मौनावलम्बितः सन् मनसैव शिशुपालस्य अपराधान् गणयति स्म। भीष्मः शिशुपालस्येदं धाष्टर्यं सोढुं नाशकत् तन्मुखाच्च भगवतः श्रीकृष्णस्य निन्दां श्रुत्वा सः क्षुब्धः सञ्जातः। तेनोक्तम् – "अद्य मया विहिता भगवतः श्रीकृष्णस्य पूजा न यस्मै रोचते सः धनुर्धारयेत्"। इत्युक्ते भीष्मे शिशुपालसमर्थकाः राजानो यज्ञमण्डपाद् बहिर्गन्तुमुद्यता बभूवुः। शिशुपालः पुनः कठोराणि वचांसि उवाच, तत्स्थानाच्च निःसृत्य भगवन्तं श्रीकृष्णं युद्धार्थम् आहूय चमूसज्जां कर्तुमारेभे। पाण्डवाः तत्पक्षिणश्च राजानः शान्ता आसन्। चमूसज्जां विधाय शिशुपालेन राजसभायां स्वकीयो दूतः प्रेषितः। स दूतः श्लिष्टशब्दैर्भगवन्तं श्रीकृष्णं निन्दयामास। भगवतः श्रीकृष्णस्य प्रेरणया सात्यकिः तस्य आक्षेपाणाम् उचितमुत्तरं प्रादात्, तथापि सोऽनेकानि निन्द्यानि वचांसि अकथयत्। अनेन भगवान् श्रीकृष्णः तत्समर्थकाः राजानश्च अत्यन्तं क्रुद्धाः सञ्जाताः। अन्ते च युद्धम् प्रारब्धम् एव। शिशुपालस्य सम्पूर्णाऽपि चमूः नष्टा। चम्वां विनष्टायां सः स्वयं श्रीकृष्णेन साकं योद्धुम् आरेभे। युद्ध्यमानः स श्रान्तो

भूत्वा कठोराणि वचांसि अवदत्। ततः शतसंख्याकेषु अपराधेषु पूर्णेषु, तद्वधेऽधिकं विलम्बम् अनुचितम् मत्वा भगवान् श्रीकृष्णः सुदर्शनचक्रेण शिशुपालस्य शिरः चिच्छेद। अस्मिन्नेव समये तस्य शरीराद् एकः तेजःसमूहो निःसृत्य भगवतः श्रीकृष्णस्य शरीरेऽन्तर्हितः। सर्वे चानया घटनया विस्मिताः बभूवुः।

## पाठगतप्रश्नाः-२

१५. महाराजः युधिष्ठिरः कं यज्ञं सम्पादयामास।

१६. शिशुपालवधकाव्यं कति सर्गात्मकम्।

१७. पाण्डवाः प्रथमवनवासदिवसावधिं प्रपूर्य कस्मिन् नगरे वासं कृतवन्तः।

१८. राजसूययज्ञे के आहूताः आसन्।

१९. यज्ञेऽस्मिन् कः सर्वकर्मद्रष्टा आसीत्।

२०. शास्त्रानुसारेण यज्ञसमाप्तौ कस्मै अर्घ्यप्रदानस्य नियमोऽस्ति।

२१. शास्त्रानुसारं के पूजनार्हा भवन्ति।

२२. भगवान् श्रीकृष्ण एव महत्तम इति केन उद्घोषितम्।

२३. शिशुपालः कस्य निन्दां कृतवान्।

२४. "अद्य मया विहिता भगवतः श्रीकृष्णस्य पूजा न यस्मै रोचते सः धनुर्धारयेत्" इति केन उक्तम्।

२५. शिशुपालेन प्रेषितो दूतः कथं श्रीकृष्णं निन्दयामास।

२६. सात्यकिः किं कृतवान्।

२७. कदा भगवान् श्रीकृष्णः शिशुपालस्य शिरश्छेदं कृतवान्।

२८. भगवान् श्रीकृष्णः केन अस्त्रेण शिशुपालस्य शिरश्छेदं कृतवान्।

२९. शिशुपालस्य शरीरादेकस्तेजःसमूहो निःसृत्य कुत्र अन्तर्निहितः।

३०. शिशुपालवधकाव्ये शिशुपालस्य शिरश्छेदानन्तरं कया घटनया विस्मिताः बभूवुः।

## ३.३) माघकाव्यस्य गुणाः

बहुशास्त्रवित्कविः माघः। तस्य काव्ये वेदः, पुराणम्, दर्शनम्, अलंकारः, संगीतं, समरशास्त्रं, छन्दः, ज्यौतिषम् इति सर्वेषां शास्त्राणां स्पर्शो विद्यते। श्रमसाध्यमपीदं काव्यं चमत्कारपूर्णमिति कवेः शक्तिमत्ता स्फुटा। व्याकरणस्य नानाविधाः प्रयोगा अत्र प्रायशः दरीदृश्यन्ते। काव्येऽस्मिन् स्पष्टता, मधुरता, ऊर्जस्वलता च सर्वत्र प्रकटीभवन्ति। अधःस्थितं पद्यं पठित्वा ज्ञातुं शक्यते यत् चमत्कृतिः कथं अस्य काव्ये प्रकाशिता।

क्रूरारिकारी कोरेक कारकः कारिकाकरः।

कोरकाकारकरकः करीरः कर्करोहर्करुक्।।

(कृष्ण अजेयानां रिपूणां विनाशकः, जगदधिपतिः, दुष्टानां पीडकः, पद्ममुकुल इव चरणौ यस्य तस्य देहबलेन हस्तिन अपि पराजिता भवन्ति। शत्रूणां पुरतः भयङ्करः इति श्लोकस्य अर्थः।)

केचित् कथयन्ति यत् काव्यगौरवेण निष्णातं भारविविरचितं किरातार्जुनीयम् अवगाहयितुम् एव शिशुपालवधकाव्यं रचयितुमअ उद्युक्तोऽभवत् कविः। काव्येऽस्मिन् पर्वतानाम् ऋतूनां वनविहारस्य जलक्रीडायाः सन्ध्यायाः प्रभातस्य च महोहराणि वर्णनानि सन्ति। अलंकारप्रयोगनिपुणोऽयं कविः अस्ताचलगमनोन्मुखस्य सूर्यस्य तथा उदयाचलावरूढस्य चन्द्रस्य वर्णनं हस्तिनः कर्णयोः आबद्धया घण्टया सह निरुपम्य घण्टामाघ इति प्रसिद्धिं गतः।

सोऽयं श्लोकस्तावत्-

उदयति विततोर्ध्वरश्मिरज्जवहिमरूचौ हिमधाम्नि याति चास्तम्।

वहति गिरिरयं विलम्बितघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥

(श्रीकृष्णस्य सारथिना दारुकेण उक्तं- रज्जुः इव किरणानि विकिरयन्त्याः सूर्यस्य उदयं तथा चन्द्रस्य अस्तगनसमये एककालं रैवकपर्वतः, कर्णयोः आबद्धघण्टस्य हस्तिन इव शोभते।)

उनविंशे सर्गे कविः शब्दालंकारस्य प्रयोगे महतीं कुशलतां प्रदर्शितवान्। तत्र चित्रबन्धस्य एकः सुन्दरः प्रयोगः दृश्यते। कुत्रापि एकेन वर्णेन कुत्रापि वा वर्णद्वयेन श्लोकं रचयामास। तस्य उदाहरणानि तावत्-

दाददो दद्दुद्दादी दादादो दूददीददोः।

दुद्दादं दददे दुद्दे ददाददददोऽददः॥१९.११४ ॥

राजराजी रुरोजाजेरजिरेऽजोऽजरोऽरजाः।

रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः॥१९.१०२ ॥

शब्दस्य अर्थस्य च सार्थकः समन्वय एव कवेः सृष्टौ प्रमाणमिति कविना उक्तम्।

## पाठगतप्रश्नाः-३

३१. बहुशास्त्रवित्कविः माघ इति कथं ज्ञायते।

३२. माघस्य काव्ये अन्येषां केषां शास्त्राणां स्पर्शो विद्यते।

३३. किरातार्जुनीयं केन विरचितम्।

३४. कं ग्रन्थमवगाहयितुं माघः शिशुपालवधकाव्यं रचयामास।

३५. शिशुपालवधकाव्ये केषां केषां वस्तूनां वर्णनं दृश्यते।

३६. माघः कथं घण्टामाघ इति प्रसिद्धिं गतः।

३७. माघकवेः सूर्यास्तपूर्वकचन्द्रोदयवर्णनपरकं श्लोकं लिखत।

३८. शिशुपालवधकाव्ये चित्रबन्धेन विहितः श्लोकः उदाह्रियताम्।

## ३.४) श्रीहर्षः

### ३.४.१) सामान्यपरिचयः

श्रीहर्षः नैषधीयचरितस्य तथा खण्डनखण्डखाद्यग्रन्थस्य च कर्तारूपेण प्रसिद्धो वर्तते। श्रीहर्षः द्वादशे शतके कान्यकुब्जनगरे आसीत्। पितरौ तस्य आस्ताम् यथाक्रमं श्रीहीरः मामल्लदेवी च। पिता श्रीहीरः वाराणस्यां राज्ञः जयन्तचन्द्रस्य सभायामासीत्। तत्रैव मिथिलायाः आगतात् नैयायिकात् उदयनाचार्यात् पराभवमनुभूय क्षुब्धो जातः। आसन्ने च मरणकाले स्वपुत्रं सुपुत्रं श्रीहर्षं तस्य तां मर्यादां पुनरुद्धारार्थं अनुरुरोध। श्रीहर्षः चिन्तामणिमन्त्रस्य जपं विधाय देव्याः त्रिपुरायाः अनुग्रहेण महतीं प्रतिभां सम्प्राप्य कान्यकुब्जराजस्य सभायां पुनराजगाम। तत्रैव तस्यानुग्रहेण नैषधीयचरितं रचयामास। तथैव खण्डनखण्डकाव्येन उदयनाचार्यं खण्डितवान्। सर्वतः प्रधानमस्य कवेर्विषये वक्तव्यमस्ति यत् देवभाषासाहित्यस्य अपकर्षणकाले अन्धकारयुगे प्रादुर्भूतोऽयं महाकविस्तादृशमालोकं दत्तवान् यत् सर्वा दिशा एव चाकचिक्यपूर्णा जाताः।

### ३.४.२) श्रीहर्षस्य देशः

कान्यकुब्जाधिपतेः सभायां सभापण्डित आसीत् इति कृत्वा श्रीहर्षः कान्यकुब्जाधिवासी आसीदिति ज्ञायते।

### ३.४.३) श्रीहर्षस्य कालः

कान्यकुब्जाधिपतेः जयन्तचन्द्रस्य सभायामासीत् इति कृत्वा जयन्तचन्द्रस्य कालानुसारं तस्य कवेः कालं निर्णेतुं शक्यते। राजा जयन्तचन्द्र ११६३ ईशवीयात् ११९४ ईशवाब्दं यावत् राज्यशासनं चकार। अतः तत्काल एव काल इति अनुमातुं शक्यते। तथा च ११६३तः ११७४ईशवीयाब्दाभ्यन्तरं कदाचित् नैषधीयचरितं रचयामास इति व्यूहलारस्य मतम्।

### ३.४.४) श्रीहर्षस्य कृतयः

श्रीहर्षस्य नव ग्रन्थाः प्राप्यन्ते। तन्मध्ये नैषधीयचरितं खण्डनखण्डकाव्यमेव प्रसिद्धम्। तत्र नैषधीयचरिते अन्तिमे सर्गे कविना श्रीहर्षेण स्वयमेव तस्य अन्यासां कृतीनां विषये उक्तम्। तस्य काव्यानि हि-

**स्थैर्यविचारप्रकरणम्** - नामतो दार्शनिकग्रन्थोऽयं प्रायः क्षणभङ्गवादखण्डनपरः।

**विजयप्रशस्तिः** - जयचन्द्रस्य पितुः विजयचन्द्रस्य प्रशंसापरकं काव्यम्।

**खण्डनखण्डखाद्यम्** - स्वनामख्यातोऽनिर्वचनीयतासर्वस्वभूतो वेदान्तग्रन्थः।

**गौडोर्वीशकुलप्रशस्तिः** - वङ्गीयस्य कस्यचिद्राज्ञः स्तुतिपरं काव्यम्।

**अर्णववर्णनम्** - स्वनामख्यातम्।

**छिन्दप्रशस्तिः** - अज्ञातपरिचयस्य कस्यापि राज्ञो वर्णनपरोऽयं ग्रन्थः स्यात्।

**शिवशक्तिसिद्धिः** - शिवशक्त्योरुपासनाग्रन्थोऽयं सम्भाव्यते।

**नवसाहसाङ्कचरितचम्पूः**(नाम्ना एव विषयः स्वरूपञ्च आख्यायेते।)

**नैषधीयचरितम्** - अत्र महाकाव्ये निषधशासकस्य नलस्य चरित्रं प्रस्तूयते। अस्मिन् ग्रन्थे द्वाविंशतिः सर्गाः २८३० श्लोकाश्च सन्ति। एतावतापि ग्रन्थेन नलचरितैकदेश एव वर्ण्यते। नलदमयन्त्योः परिणयावधिवृत्तान्तः सम्भोगचित्रं नलस्य च धर्मप्राणतायाः वर्णनमय्या पद्धत्या वर्णितोऽत्र ग्रन्थे। राजनि नले दमयन्तीरक्ते दमयन्तीचिन्तया दूयमाने स्वारामं पर्यटति सति तेन हंसो गृह्यते दयया मुच्यते च। स एव प्रत्युपकारभावनया नलस्य स्तुतिं दमयन्तीसमीपे करोति। दमयन्त्याः पूर्वरागः उदयते। दमयन्त्याः पिता विदर्भः स्वयंवरमारचयति। दमयन्तीकामुका देवा अपि तत्र आयान्ति, धृतनलस्वरूपाश्चत्वार इन्द्रयमवायुकुवेराः पञ्चमो नलश्चेति सर्वेषां समरूपतया दमयन्ती विचित्रां दशां प्रपद्यते। सभावर्णनाय समागता सरस्वत्यपि श्लेषवर्णनया दमयन्तीं व्यामोहयति। अवसाने दमयन्त्याः पातिव्रत्येन दृढानुरागेण च प्रीत्या देवाः स्वानि विशिष्टचिह्नानि प्रकटीकुर्वन्ति यैर्नलः परिचितः भवति। नलदमयन्त्योः सुखसङ्गमेन च ग्रन्थः समाप्यते।

## पाठगतप्रश्नाः-४

३९. श्रीहर्षस्य द्वौ ग्रन्थौ उल्लिखत।

४०. श्रीहर्षः कस्मिन् नगरे बभूव।

४१. श्रीहर्षस्य पितुः नाम किम्।

४२. श्रीहर्षस्य मातुः नाम किम्।

४३. श्रीहर्षस्य पिता कस्य राज्ञः सभायामासीत्।

४४. श्रीहर्षस्य पिता श्रीहीरः कस्मात्पण्डितात् पराबभूव।

४५. श्रीहर्षः कस्य मन्त्रस्य जपं कृतवान्।

४६. श्रीहर्षः कस्याः देव्याः उपासनां कृतवान्।

४७. श्रीहर्षः केन काव्येन उदयनाचार्यं खण्डितवान्।

४८. श्रीहर्षस्य कालः कः।

४९. श्रीहर्षः कदा नैषधीयचरितं रचयामास।

## ३.५) श्रीहर्षस्य काव्यस्य वैशिष्ट्यानि

नैषधीयचरितस्य सरसा वर्णनपद्धतिः शृङ्गारप्रकर्षपूर्णकथा च सहृदयहृदयानि अवर्जयेताम्। यथैव श्रीहर्षस्य खण्डनखण्डकाव्यमद्वितीयं तथैव नैषधीयमपि स्वक्षेत्रेऽनुपमम्। श्रीहर्षः यथैव दार्शनिककविः तथैव योगी अपि आसीदिति यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवमिति पद्याज्ज्ञायते।

श्रीहर्षः स्वीयस्य शास्त्रज्ञानस्य परिचयं प्रतिसर्गं ददाति, परन्तु सप्तदशसर्गे तु तेन स्वीयं नास्तिकास्तिकसकलदर्शनप्रवीणत्वं व्याकरणनिष्णातत्वं च प्रकटीकृतम्।

वेदान्तिना श्रीहर्षेण नैयायिका वैशेषिकाश्च कवितायामप्युपहसिताः-

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः।।

ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारुमतं मे।
औलुकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय।।

श्रीहर्षस्य कवितायां नारीरूपस्य वर्णनमतीव सजीवम्। चतुर्थसर्गे विप्रलम्भशृङ्गारस्य वर्णनमतीव रमणीयम्। तत्र एकः श्लोकः तावत् -

मयाङ्गं पृष्टः कुलनामनी भवानमू विमुच्यैव किमन्यदुक्तवान्।
पुपासुता शान्तिमुपैति वारिजा न जातु दुग्धान्मधुनोऽधिकादपि।।

बहवः शास्त्रसम्मताः तर्का अत्र काव्ये यत्र यत्र कविना सप्रयासं समावेशिताः सहृदयानां मनांसि रञ्जयन्ति। उत्प्रेक्षाणामपि चमत्कारोऽस्य नितान्तं हृद्यः -

यदस्य यात्रासु बलोद्धतं रजः स्पुतप्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं तधाति पङ्कीभवङ्कतां विधौ।।

यद्यपि नैषधकाव्यं सौमबद्धताया अभावात् कठिन्यादेकस्यैवनार्थस्य शब्दान्तरेणावर्तनाच्च माघकितार्जुनीयापेक्षया न्यूनमर्यादं मन्तव्यं भवति तथापि नैषधे स्तितं रसोल्वणत्वं सर्वमतिशय्य वर्त्तते। तस्मादाभाणकमिदम्-

उदिते नैषधे काव्ये क्व माघः क्व च भारविः।।

## ३.६) क्षेमेन्द्रः

### ३.६.१) सामान्यपरिचयः

क्षेमेन्द्रः एकादशशतकस्य ख्यातनामा कविः आसीत्। क्षेमेन्द्रः सिन्धोः पौत्रः प्रकाशेन्द्रस्य पुत्रश्च आसीत्। क्षेमेन्द्रस्य पिता प्रकाशेन्द्रः ब्राह्मणानां संरक्षक आसीत्। क्षेमेन्द्रः कश्मीरराजस्य अनन्तस्य सभापण्डित आसीत्। तस्य अनन्तस्य शासनकालः १०२७ ईशवीयाब्दतः १०६४ ईशवीयाब्दं यावत् आसीत्।

### ३.६.२) क्षेमेन्द्रस्य देशः

क्षेमेन्द्रः कश्मीरवासी आसीत्। तत्रत्यस्य राज्ञः अनन्तस्य सभापण्डित आसीत् क्षेमेन्द्रः। कश्मीरदेशो वरपुत्राणां देशः इति भणितिः प्रसिद्धा एव। तेन वरपुत्राणां देशे कश्मीरे जनिं लेभे क्षेमेन्द्रः।

### ३.६.३) क्षेमेन्द्रस्य कालः

पूर्वमेव उक्तमस्ति यत् क्षेमेन्द्रः कश्मीरराजस्य अनन्तस्य सभापण्डित आसीत्। तस्य अनन्तस्य शासनकालः १०२७ ईशवीयाब्दतः १०६४ ईशवीयाब्दं यावत् आसीत्। अतः क्षेमेन्द्रस्य समयः एकादशशतकमिति निश्चित्य वक्तुं शक्यते।

### ३.६.४) क्षेमेन्द्रस्य कृतयः

क्षेमेन्द्रस्य बह्व्यः कृतयः प्राप्यन्ते। ताश्च शशिवंशमहाकाव्यम् अमृतरङ्गकाव्यम् अवसरसारः मुक्तावली लावण्यवती देशोपदेशः पवनपञ्चाशिका पद्मकादम्बरी अवदानकल्पलता नीतिकल्पतरुः लोकप्रकाशकोशः सेव्यसेवकोपदेशः विनयवल्ली दर्पदलनम् कविकण्ठाभरणम् रामायणमञ्जरी भारतमञ्जरी बृहत्कथामञ्जरी समयमातृका दशावतारचरितम् इति।

### ३.६.५) क्षेमेन्द्रस्य काव्यस्य गुणाः

क्षेमेन्द्रस्य अवदानकल्पलता सार्धशतवर्षाभ्यन्तरे एव तिब्बतभाषानुवादावसरं लेभे इति क्षेमेन्द्रस्य धार्मिकोदारतायाः सुन्दरकाव्यशैल्याश्च प्रबलं प्रमाणम्।

दशावतारचरितन्नाम महाकाव्यं क्षेमेन्द्रस्यान्तिमा मधुरतमा च कृतिः। अस्मिन् स्वतन्त्रे महाप्रौढे च महाकाव्ये विष्णोर्दशावताराः रोचकशैल्या वर्णिताः। क्षेमेन्द्रस्य भाषा मधुरा, सरसा सुबोधा चासीत्। उदाहरणमेकं यथा -

दयितजनवियोगोद्वेगरोगातुराणां विभवविरहदैन्यम्लायमानाननानाम्।<br>
शमयति शितशल्यं हन्त नैराश्यनश्यद्भवपरिभवतान्तिः शान्तिरन्ते वनान्ते।।

## पाठगतप्रश्नाः-५

५०. क्षेमेन्द्रः कस्य राज्ञः सभापण्डित आसीत्।

५१. कस्मिन् देशे क्षेमेन्द्रः जनिं लेभे।

५२. क्षेमेन्द्रस्य कालः कः।

५३. क्षेमेन्द्रस्य काश्चन कृतीः लिखत।

५४. क्षेमेन्द्रस्य मधुरतमायाः कृतेः नाम किम्।

## ३.७) कल्हणः

### ३.७.१) सामान्यपरिचयः-

ऐतिहासिककविषु अन्यतमः कविः कल्हणः। संस्कृतभाषायाम् इतिहासलेखनाय यावन्तः विद्वांसः व्यवसितवन्तः तेषां मध्ये कल्हणः प्रमुख इति नितान्तसत्यं वस्तु। कल्हणः स्वयमेव स्वीयम् इतिवृत्तं निर्दिष्टवान्। कल्हणस्य पिता आसीत् चणपकः। चणपकः तात्कालीककाश्मीराधिपतेः हर्षस्य प्रधानामात्यः आसीत्। कल्हणस्य पितृव्यः कणकोऽपि राज्ञः हर्षस्य आश्रये आसीत्। हर्षे शत्रुभिः कपटेन हते सति चणपकः राजाश्रयहीनः सञ्जातः। परं कल्हणः अलकदत्तनाम्नः कस्यचित्सत्पुरुषस्य छत्रछायाम् आश्रितवान्। कल्हणः रामायणमहाभारतादिग्रन्थान् सम्यक् अधीतवान्। समं हि ज्यौतिषशास्त्रेऽपि तस्य पाण्डित्यम् आसीत्।

### ३.७.२) कल्हणस्य देशः-

कल्हणोऽयं काश्मीरदेशे आढ्यब्राह्मणवंशे अजायत। तस्य काश्मीरवासित्वे नास्ति कोऽपि सन्देहः।

### ३.७.३) कल्हणस्य कालः-

राज्ञः सुस्सलस्य पुत्रे जयसिंहे राजति कल्हणः राजतरङ्गिणीं निर्मितवान्। जयसिंहस्य शासनकालः आसीत् ११२७ तमेशवीयवर्षतः ११५९ तमेशवीयवर्षपर्यन्तम्। अतः कल्हणस्य कालः ईशवीयद्वादशशतकम् इति निश्चयेन वक्तुं शक्यते।

### ३.७.४) कल्हणस्य कृतिः-

ऐतिहासिककवेः अस्य राजतरङ्गिणी इति एकमेव ऐतिहासिककाव्यं प्राप्यते। सर्वमपि प्राक्तनम् इतिहासग्रन्थनिवहं निपुणं निरीक्ष्यैव राजतरङ्गिणीं प्रणीतवान्। कल्हणेन ११४८-तमेशवीयवर्षे प्रारब्धा

राजतरङ्गिणी ११५०-तमेशवीयवर्षे समापिता। अत्र काव्यतायाः यावानंशो वर्तते तावानंशः ऐतिहासिकतायाः अपि।

### ३.७.५) राजतरङ्गिणीग्रन्थः-

ग्रन्थोऽयं विशालकायः अष्टसु तरङ्गेषु विभक्तो विद्यते। अत्र कल्हणः प्राचीनकालादारभ्य तत्समयपर्यन्तस्य काश्मीरदेशस्य काश्मीरशासकानां च इतिहासं लेखितुं प्रयत्नं कृतवान्। अस्य ग्रन्थस्य इतिहासनिबद्धः विक्रमसंवत्सरप्रारम्भात् द्वादशशतकपूर्वभवस्य कस्यचन गोनन्दनामकस्य राज्ञः इतिहासात् प्रक्रमते। अस्मिन् ग्रन्थे प्रथमतरङ्गत्रये निर्दिष्टानां राज्ञामुल्लेखः कालनिर्देशरहितः एव कृतः। तत्र पौराणिककथां जनश्रुतिं च आधारीकृत्य इतिहासं निर्मितवान्। ततःपरं राज्ञाम् इतिहासवर्णने कालनिर्देशः प्राप्यते। सर्वतः प्रथमम् निर्दिश्यमाना तिथिः ८१३-८१४ ईशवीयवर्षम्। ततः अन्तःपर्यन्तं वर्णिताः घटनाः प्रामाणिकरूपेण वैज्ञानिकपद्धत्या निबद्धा विद्यते। अष्टमतरङ्गस्य घटनास्तु कविना भूयसांशेन साक्षात्कृत्य निबद्धा इति तासां सत्यता असन्दिग्धा।

### ३.७.६) कल्हणस्य काव्यस्य वैशिष्ट्यम्-

सामान्यतः प्रायः सर्वे एव ऐतिहासिकाः स्वदेशस्य प्रतिष्ठां वर्धयितुं स्वीयदेशे अवर्तमानानपि गुणान् वर्णयितुं न सङ्कुचन्ति। किन्तु कल्हणः तादृशः नासीत्। स हि नितान्तनिष्पक्षपातितया इतिहासं रचितवान्। स स्वयमेव लिखति-

"श्लाघ्यः स एव गुणवान् रागद्वेषविवर्जितः।

भूतार्थकथने यस्य स्थेयस्येव सरस्वती।।" इति।

राजतरङ्गिणीग्रन्थे तत्कालीनानां राज्ञां गुणदोषाः, राजसेवकानां च कृतघ्नतास्वामिभक्तिः सर्वं यथायथं वर्णितम्। अस्मिन् काव्ये निन्दा स्तुतिः उभयम् अपि निष्पक्षपाततया लिखितम्।

अस्मिन् ग्रन्थे इतिहासेन समं काव्यत्वमपि समानतया वर्तते। यथा-

"राज्याच्च्युतस्य बहूशः परिवाररामा

कोशादि तस्य रिपवो व्रजतोऽपजह्रुः।

उर्वीरूहोविगलितस्य नगेन्द्रशृङ्गा-

द्वल्लीफलादि रभसादिव गण्डशैलाः।।" इति।

## पाठगतप्रश्नाः-६

५५. कल्हणः कस्मिन् देशे अजायत।

५६. कल्हणस्य कृतेः नाम किम्।

५७. राजतरङ्गिणी इति कीदृशं काव्यम्।

५८. राजतरङ्गिण्यां कति तरङ्गाः सन्ति।

५९. कल्हणस्य पितुः पितृव्यस्य च नाम लिखत।

## ३.८) भट्टिस्वामी

### ३.८.१) सामान्यपरिचयः-

भट्टिकाव्यस्य प्रणेतुः भट्टिस्वामिनः पिता आसीत् श्रीधरस्वामी। भट्टिस्वामिनः जीवनचरितविषये प्रामाणिकं किमपि मतं नास्ति। तस्य जीवनविषये काश्चित् कथाः श्रूयन्ते। भट्टिस्वामिनः जन्मनः परमेव तस्य मातृवियोगः सञ्जातः। तस्य पिता श्रीधरस्वामी अपि नवजातकं स्वपुत्रं परित्यज्य सन्यासं स्वीकृतवान्। तत्र श्रीधरसेननामा कश्चित् राजा आसीत्। सः भट्टिस्वामिनः पोषणं कृतवान्।

कवेरस्य व्याकरणशास्त्रे आसीत् प्रगाढं पाण्डित्यम्। तस्य काव्यमेव तत्र प्रमाणम्। समं हि अलङ्कारादिष्वपि शास्त्रेषु तस्य पाण्डित्यम् आसीत्।

### ३.८.२) भट्टिस्वामिनः देशः-

कविरयं सौराष्ट्रजनपदस्य अन्तर्गते वलभीनगरे जनिं लब्धवान् इति रूढिः।

### ३.८.३) भट्टिस्वामिनः कालः-

अयं कविः राज्ञः श्रीधरसेनस्य आश्रये आसीदिति सः स्वयमेव स्वीयकाव्ये लिखति। श्रीधरसेननामकाश्चत्वारो राजानः प्रसिद्धाः। ते च ५००-६५० ईशवीयाब्दपर्यन्तम् अजायन्त। तेषु कतमस्य श्रीधरसेनस्य समये आसीदिति न निश्चितम्। श्रीधरसेनद्वितीयस्य एकः शिलालेखः प्राप्यते यत्र भट्टिनाम्ने विदुषे राज्ञा कृतस्य भूमिदानस्य वार्ता मिलति। यदि अयं भट्टिः भट्टिकाव्यस्य प्रणेता भट्टिः स्यात् तर्हि तस्य समयः ६१० ईशवीयाब्दः इति मन्तुं शक्यते। भिन्नभट्टेः कल्पनायामपि भट्टिः सप्तमशतकादूर्ध्वं नानेतुं योग्यः। अतः भट्टिस्वामी ईशवीयसप्तमशतके आसीदिति वक्तुं शक्यते।

### ३.८.४) भट्टिस्वामिनः कृतिः-

भट्टिकाव्यम् इति तस्य कृतिः। शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरम्। अस्य काव्यस्य निर्माणे उद्देश्यमासीत् मनेविनोदेन सह व्याकरणस्य ज्ञानम्। व्याकरणशास्त्रस्य प्रयोगः अस्मिन् काव्ये सम्यक्तया दृश्यते। स्वस्य काव्यविषये भट्टिस्वामी स्वयमेव लिखति-

"दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।

हस्तादर्श इवान्धानां भवेद्व्याकरणादृते" इति।

अर्थात् व्याकरणे व्युत्पन्नानां कृते काव्यमिदं प्रदीपतुल्यम्। किन्तु व्याकरणज्ञानरहितानां कृते अन्धस्य हस्ते दर्पणः इव। काव्यमिदं भट्टिस्वामिना प्रणीतम् इति हेतोः तन्नाम्नैव प्रसिद्धिः जाता। काव्यमिदं रावणवधनाम्नापि प्रथते।

इदं काव्यं वाल्मीकिमहर्षेः रामायणमाश्रित्य निर्मितम्। अत्र रामायणकथा एव वर्णिता। काव्येऽस्मिन् द्वादशसर्गाः सन्ति।

## ३.८.५) भट्टिस्वामिनः काव्यस्य वैशिष्ट्यम्-

काव्यस्यास्य प्रधानं वैशिष्ट्यं हि व्यवहारे व्याकरणस्य यानि रूपाणि प्राप्यन्ते तैः सह अप्रचलिताः व्याकरणस्य प्रायः सर्वे एव प्रयोगाः अत्र लभ्यन्ते। मल्लिनाथस्य मतानुसारं भट्टिकाव्यं हि "उदाहरणकाव्यम्"। अन्ये अपि टीकाकाराः वदन्ति यत् प्रयोगद्वारा व्याकरणस्य शिक्षादानाय कविना काव्यमिदं निर्मितम् इति। भट्टिकाव्यस्य मुख्यतया चत्वारः भेदाः। प्रकीर्णकाण्डः, अधिकारकाण्डः, प्रसन्नकाण्डः, तिङन्तकाण्डश्च। तेषु आदितः पञ्चमसर्गपर्यन्तं प्रकीर्णकाण्डः। तत्र व्याकरणस्य विविधाः नियमाः प्रयोगैः उदाहृताः। पञ्चमसर्गतः नवमसर्गपर्यन्तम् अधिकारकाण्डः। तत्र प्रत्ययानां व्यवहारः, आत्मनेपदपरस्मैपदविधानं, णत्वविधानं, षत्वविधानं च प्रयोगैः दर्शितम्। दशमसर्गतः त्रयोदशसर्गपर्यन्तं प्रसन्नकाण्डः। अस्मिन् अंशे अलङ्काराणां प्रयोगः दृश्यते। अष्टादशसर्गतः अन्तिमं यावत् तिङन्तकाण्डः। अत्र दशानां लकाराणां प्रयोगः प्राप्यते। न हि भट्टिकाव्यं केवलं व्याकरणलक्षणप्रयोगज्ञानाय निर्मितम् अपि तु अलङ्कारः, रसः, छन्दः, काव्यगुणाः, व्यञ्जना, चित्रम् इत्यादीनि अपि अत्र भूयशः प्राप्यन्ते। काव्यस्यास्य दशमे सर्गे शब्दार्थालङ्काराणां निवेशेन एकादशसर्गे माधुर्यगुणस्य समावेशेन च अस्य गौरवमेधते।

भट्टिकाव्ये यमकालङ्कारस्य एकम् उदाहरणं यथा-

"अवसितं हसितं प्रसितं मुदा विलसितं ह्रसितं स्मरभासितम्।
न समदाः प्रमदा हतस्मदाः पुरोहितं विहितं न समीहितम्।।" इति।

लुङ्लकारस्य प्रयोगः यथा-

"माज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम्।
उदतारीदुदन्वन्तः पुरं न परितोऽरुधत्।।" इति.

अस्य काव्यस्य शरद्वर्णनं नितान्तहृद्यम्-

"तरङ्गसङ्गाचचपलैः पलाशैर्ज्वालाश्रियं सातिशयं दधन्ति।
सधुमदीप्ताग्निरुचीनि रोजुस्ताम्रोत्पलान्याकुलषट्पदानि।।" इति।

एवमेव सूर्योदयवर्णनमपि-

"दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः।
प्रणष्टमूर्तिप्रविभागमुद्यन् समुज्जहारेव ततो विवस्वान्।।" इति।

भट्टिकाव्यस्य निम्नलिखितश्लोकस्तु एकावलीनामकस्य अलङ्कालस्य प्रसिद्धमुदाहरणम्-

"न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्त जहार यन्मनः।।" इति।

काव्येऽस्मिन् महाकाव्यस्य वैशिष्ट्यमपि वर्तते इति हेतोः भट्टिकाव्यं महाकाव्यमेव।

## पाठगतप्रश्नाः-७

६०. भट्टिस्वामिनः पितुः नाम किम्।
६१. भट्टिस्वामी कस्य राज्ञः आश्रये आसीत्।
६२. भट्टिस्वामी कस्मिन् देशे अजायत।
६३. भट्टिस्वामी कस्मिन् शतके जनिं लब्धवान्।
६४. भट्टिकाव्यं कीदृशं काव्यम्।
६५. भट्टिस्वामिनः कृतेः नाम किम्।
६६. दीपतुल्यः प्रबन्धोऽयम् इति कस्य विषये उक्तम्।
६७. भट्टिकाव्यं किमाश्रित्य निर्मितम्।
६८. एकावलीनामकस्य अलङ्कारस्य प्रसिद्धमुदाहरणं भट्टिकाव्यतः दीयताम्।

## पाठसारः

**माघः**

अस्मिन् पाठे वयं कवेः माघस्य जीवनचरितं, तस्य देशः, तस्य कालः.तस्य कृतयः, तस्य काव्यस्य वैशिष्ट्यानि, शिशुपालवधकाव्यस्य वैशिष्ट्यानि इत्यादयः विषयाः पठिताः। माघस्य पिता दत्तकः विद्वान् दानप्रसिद्धश्चासीत्। मीनमल्लाख्यनगरे जन्मग्रहणमकरोत्। गुर्जरनिवासी अयं कविः श्रीमालनगरे वासं कृतवान्। सप्तशकस्य अन्तिमात् अष्टमशतकपर्यन्तम् माघस्य समयः इति विदुषां मतम्। शिशुपालवध इति एकेनैव काव्येन माघकविः प्रथितयशा बभूव।

महाभारतम् उपजीव्य विरचिते अस्मिन् ग्रन्थे युधिष्ठिरस्य राजसूये यागे श्रीकृष्णेन कृतः शिशुपालस्य वधः मुख्यतया वर्णितः। महाभारतोक्तां निष्प्राणामिमां कथां माघो वर्णनमाहात्म्येन चमत्कारिणीं विहितवान्।

**श्रीहर्षः**

अस्मिन् पाठे श्रीहर्षस्य जीवनवृत्तान्तः देशः कालः कृतयश्च वर्णिताः। श्रीहर्षः कान्यकुब्जाधिवासी आसीत्। श्रीहीरः तस्य पिता माता च मामल्लदेवी आसीत्। उदयनाचार्यात् पराभवम् अनुभवितुः स्वपितुः श्रीहीरस्य सम्मानरक्षार्थं श्रीहर्षेण नैषधीयचरितं विरचितम्। देवभाषासाहित्यस्य अपकर्षणकाले अन्धकारयुगे प्रादुर्भूतोऽयं महाकविः भाषायां पुनरुद्धारं कृतवान्। राजा जयन्तचन्द्रस्य काल एव अस्य कवेः काल इति स्थिरीकृत्य अयं श्रीहर्षः द्वाविंशशतककाले आसीदिति अनुमातुं शक्यते। श्रीहर्षस्य नव ग्रन्थाः प्राप्यन्ते। तत्र नैषधीयचरितं तथा खण्डनखण्डकव्यमेव अधिकतया प्रथन्ते। तद्विहाय अन्ये ग्रन्थाः तावत् स्थैर्यविचारप्रकरणम्, विजयप्रशस्तिः, गौडोर्वीशकुलप्रशस्तिः, अर्णववर्णनम्, छिन्दप्रशस्तिः, शिवशक्तिसिद्धिः, नवसाहसाङ्कचरितचम्पूः इति।

तत्र नैषधीयचरिताख्ये ग्रन्थे द्वाविंशतिः सर्गाः २८३० श्लोकाश्च सन्ति। नलदमयन्त्योः परिणयावधिवृत्तान्तः सम्भोगचित्रं नलस्य च धर्मप्राणतायाः वर्णनमय्या पद्धत्या वर्णितोऽत्र ग्रन्थे। दमयन्तीचिन्तया राज्ञः नलस्य राजहंसपरित्यागवर्णनम् प्रसिद्धम्। नलस्य देवैः सह औपम्यम् इत्यादीनि वर्णनानि प्रसिद्धानि। नलदमयन्त्योः सुखसङ्गमेन च ग्रन्थः समाप्यते।

श्रीहर्षस्य काव्यवैशिष्ट्यानि अपि अत्र समुपवर्णितानि। वर्णनपद्धत्या अलंकारप्रयोगादिना निरूपमाः कृतयः कृताः।

**क्षेमेन्द्रः**

क्षेमेन्द्रः एकादशशताब्दौ जनिं लेभे। स कश्मीरदेशीयः। तस्य नैकाः कृतयः लोकप्रसिद्धाः काव्यगुणसम्पन्नाः च। सर्वासु कृतिषु दशकुमारचरितमिति काव्यम् तस्यैव काव्यान्तराणि अतिशेते।

**कल्हणः**

ऐतिहासिककविषु अन्यतमः कविः कल्हणः। ईशवीयद्वादशशतके काश्मीरदेशे सः जनिं लब्धवान्। तस्य पिता चणपकः आसीत् राज्ञः हर्षस्य प्रधानामात्यः। अलकदत्तनामा कश्चित्सत्पुरुषः कल्हणस्य पोषकः आसीत्। कल्हणस्य कृतेः नाम राजतरङ्गिणी। अत्र अष्टौ तरङ्गाः सन्ति। राजनि जयसिंहे राजति कल्हणः राजतरङ्गिणीं निर्मितवान्। अस्मिन् काव्ये गोनन्दनामकराज्ञः आरभ्य तत्कालपर्यन्तस्य काश्मीरदेशस्य राज्ञां च इतिहासः वर्णितः।

**भट्टिस्वामी**

भट्टिस्वामी सौराष्ट्रजनपदस्य अन्तर्गते वलभीनगरे सप्तमशतके अजायत। भट्टिस्वामिनः पिता आसीत् श्रीधरस्वामी। पितरि सन्न्यस्ते राजा श्रीधरसेनः तस्य पोषणं कृतवान्। तस्य कृतेः नाम भट्टिकाव्यम्। रावणवधमिति भट्टिकाव्यस्य अपरं नाम। शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरम्। काव्यमिदं

वाल्मीकिमहर्षेः रामायणमाश्रित्य निर्मितम्। काव्येऽस्मिन् द्वादशसर्गाः सन्ति। अत्र व्याकरणशास्त्रस्य सम्यक् प्रयोगः अत्र दृश्यते।

## पाठगतप्रश्नानामुत्तराणि

**उत्तरस्तबकः-१**

१. माघस्य पिता आसीत् दत्तकः।

२. माघस्य पितामहः आसीत् सुप्रभदेवः।

३. माघस्य पितामहः राज्ञः वर्मलातः सभायाम् आसीत्।

४. माघस्य जन्म मीनमल्लाख्ये नगरे बभूव।

५. माघः निवासस्थलं आसीत् श्रीमालनगरम्।

६. आनन्दवर्धनकृतस्य ग्रन्थस्य नाम हि ध्वन्यालोकः।

७. वामनकृतस्य ग्रन्थस्य नाम तावत् काव्यालंकारः।

८. आनन्दवर्धनकृते ध्वन्यालोके माघस्य पद्यानाम् उद्धृतत्वात् माघः आनन्दवर्धनस्य पूर्वकालिक इति ज्ञायते।

९. सप्तशकस्य अन्तिमात् अष्टमशतकपर्यन्तम् माघस्य कालः।

१०. माघस्य एका एव कृतिः प्राप्यते तच्च भवति शिशुपालवधकाव्यम्।

११. युधिष्ठिरस्य राजसूये यागे श्रीकृष्णेन कृतः शिशुपालस्य वध एव शशुपालवधकाव्यस्य मुख्यो विषयः।

१२. शिशुपालवधकाव्यस्य उपजीव्यः ग्रन्थः तावत् व्यासविरचितं महाभरतम्।

१३. शिशुपालवधस्य नायकः भगवान् श्रीकृष्णः।

१४. शिशुपालवधस्य प्रतिनायकः शिशुपालः।

**उत्तरस्तबकः-२**

१५. महाराजः युधिष्ठिरः राजसूययज्ञं सम्पादयामास।

१६. शिशुपालवधकाव्यं विंशतिसर्गात्मकम्।

१७. पाण्डवाः प्रथमवनवासदिवसावधिं प्रपूर्य इन्द्रप्रस्थनगरे वासं कृतवन्तः।

१८. राजसूययज्ञे जम्बूद्वीपस्य सर्वे राजानः आहूताः आसन्।

१९. यज्ञेऽस्मिन् भगवान् श्रीकृष्णः सर्वकर्मद्रष्टा आसीत्।

२०. शास्त्रानुसारेण यज्ञसमाप्तौ गुणवते अर्घ्यप्रदानस्य नियमोऽस्ति।

२१. शास्त्रानुसारं षडङ्गवेदाध्ययनाध्यापनरतो ब्राह्मणस्नातकः, गुरुः बन्धुः, जामाता, राजा, ऋत्विग्, याज्ञिकश्च एते षट् सदस्याः पूजनार्हा भवन्ति।

२२. भगवान् श्रीकृष्ण एव महत्तम इति भीष्मेण उद्घोषितम्।

२३. शिशुपालः कस्य श्रीकृष्णस्य निन्दां कृतवान्।

२४. " अद्य मया विहिता भगवतः श्रीकृष्णस्य पूजा न यस्मै रोचते सः धनुर्धारयेत्" इति भीष्मेण उक्तम्।

२५. शिशुपालेन प्रेषितो दूतः श्लिष्टशब्दैः भगवन्तं श्रीकृष्णं निन्दयामास।

२६. सात्यकिः शिशुपालस्य आक्षेपाणाम् उचितमुत्तरं प्रादात्।

२७. शतसंख्यकेषु अपराधेषु पूर्णेषु भगवान् श्रीकृष्णः शिशुपालस्य शिरश्छेदं कृतवान्।

२८. भगवान् श्रीकृष्णः सुदर्शनचक्रेण शिशुपालस्य शिरश्छेदं कृतवान्।

२९. शिशुपालस्य शरीरादेकस्तेजःसमूहो निःसृत्य भगवतः श्रीकृष्णस्य शरीरे अन्तर्हितः।

३०. शिशुपालवधकाव्ये शिशुपालस्य शिरश्छेदानन्तरं शिशुपालस्य शरीरोदकतेजःसमूहः निःसृत्य भगवतः श्रीकृष्णस्य शरीरे अन्तर्हितः अनया घटनया सर्वे विस्मिताः बभूवुः।

**उत्तरस्तबकः-३**

३१. माघस्य काव्ये वेदः, पुराणम्, दर्शनम्, अलंकारः, संगीतं, समरशास्त्रं, छन्दः, ज्यौतिषम् सर्वेषां शास्त्राणां स्पर्शो विद्यते अतः बहुशास्त्रवित्कविः माघ इति ज्ञायते।

३२. माघस्य काव्ये अन्येषां वेदः, पुराणम्, दर्शनम्, अलंकारः, संगीतं, समरशास्त्रं, छन्दः, ज्यौतिषम् इत्यादीनां शास्त्राणां स्पर्शो विद्यते।

३३. किरातार्जुनीयं भारविना विरचितम्।

३४. किरातार्जूनीयाख्यं ग्रन्थमवगाहयितुं माघः शिशुपालवधकाव्यं रचयामास।

३५. शिशुपालवधकाव्ये पर्वतानाम् ऋतूनां वनविहारस्य जलक्रीडायाः सन्ध्यायाः प्रभातस्य इत्यादीनां वस्तूनां वर्णनं दृश्यते।

३६. माघः अस्ताचलगमनोन्मुखस्य सूर्यस्य तथा उदयाचलोररूढस्य चन्द्रस्य वर्णनं हस्तिनः कर्णयोः आबद्धया घण्टया सह निरुपम्य घण्टामाघ इति प्रसिद्धिं गतः।

३७. माघकवेः सूर्यास्तपूर्वकचन्द्रोदयवर्णनपरकं श्लोको हि -

उदयति विततोर्ध्वरश्निरज्जवहिमरूचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बितघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।। इति।

३८. शिशुपालवधकाव्ये चित्रबन्धेन विहितः श्लोको हि -

दाददो दद्दुद्दादी दादादो दूददीददोः।
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥ १९.११४ ॥ इति

**उत्तरस्तबकः-४**

३९. श्रीहर्षस्य द्वे ग्रन्थे नैषधीयचरितम्, खण्डनखण्डखाद्यं च।

४०. श्रीहर्षः कान्यकुब्जनगरे बभूव।

## कविपरिचयः-३





४१. श्रीहर्षस्य पितुः नाम श्रीहीरः।

४२. श्रीहर्षस्य मातुः नाम मामल्लदेवी।

४३. श्रीहर्षस्य पिता जयन्तचन्द्रस्य राज्ञः सभायामासीत्।

४४. श्रीहर्षस्य पिता श्रीहीरः उदयनाचार्यात् पराबभूव।

४५. श्रीहर्षः चिन्तामणिमन्त्रस्य जपं कृतवान्।

४६. श्रीहर्षः कस्याः त्रिपुरादेव्या उपासनां कृतवान्।

४७. श्रीहर्षः खण्डनखण्डखाद्यग्रन्थेन उदयनाचार्यं खण्डितवान्।

४८. श्रीहर्षस्य कालो भवति द्वादश ईशवीयाब्दः।

४९. श्रीहर्षः ११६३तः ११७४ ईशवीयाब्दाभ्यन्तरे नैषधीयचरितं रचयामास।

### उत्तरस्तबकः-५

५०. क्षेमेन्द्रः राज्ञः अनन्तस्य सभापण्डित आसीत्।

५१. क्षेमेन्द्रः कश्मीरदेशे जनिं लेभे।

५२. क्षेमेन्द्रः एकादशतके आसीत्।

५३. क्षेमेन्द्रस्य कतिपयाः कृतयः शशिवंशमहाकाव्यम्, अमृतरङ्गकाव्यम्, अवसरसारः, मुक्तावली, लावण्यवती, देशोपदेशः, पवनपञ्चाशिका, दशावतारचरितम्  इत्यादयः।

५४. क्षेमेन्द्रस्य मधुरतमायाः कृतेः दशावतारचरितम्।

### उत्तरस्तबकः-६

५५. कल्हणः काश्मीरदेशे अजायत।

५६. कल्हणस्य कृतेः नाम राजतरङ्गिणी।

५७. राजतरङ्गणी इति एकम् ऐतिहासिककाव्यम्।

५८. राजतरङ्गिण्याम् अष्टौ तरङ्गाः सन्ति।

५९. कल्हणस्य पितुः नाम चणपकः इति पितृव्यस्य च नाम कणकः इति।

### उत्तरस्तबकः-७

६०. भट्टिस्वामिनः पितुः नाम श्रीधरस्वामी।

६१. भट्टिस्वामी राज्ञः श्रीधरसेनस्य आश्रये आसीत्।

६२. भट्टिस्वामी सौराष्ट्रजनपदस्य अन्तर्गते वलभीनगरे अजायत।

६३. भट्टिस्वामी सप्तमशतके जनिं लब्धवान्।

६४. भट्टिकाव्यम् एकं शास्त्रकाव्यम्।

६५. भट्टिस्वामिनः कृतेः नाम भट्टिकाव्यम्।

६६. "दीपतुल्यः प्रबन्धोऽयम्" इति भट्टिकाव्यस्य विषये उक्तम्।

६७. भट्टिकाव्यं रामायणमाश्रित्य निर्मितम्।

६८. एकावलीनामकस्य अलङ्कारस्य प्रसिद्धमुदाहरणं हि - "न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्। न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्त जहार यन्मनः।।" इति।

॥ इति तृतीयः पाठः ॥

# रघुवंशम्

## भूमिका

भवन्तः सर्वे एव महाकवेः कालिदासस्य नाम श्रुतवन्तः। सः न केवलं भारतवर्षस्य अपि तु समग्रस्य विश्वस्य प्रसिद्धेषु कविषु अन्यतमः अस्ति। तेन सप्त काव्यरत्नानि लिखितानि इति अनेके स्वीकुर्वन्ति। रघुवंशं कुमारसम्भवम् इति द्वे महाकाव्ये, मेघदूतम् ऋतुसंहारम् इति द्वे खण्डकाव्ये, अभिज्ञानशाकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रम् इति त्रीणि च नाटकानि। एतासु सर्वासु कृतिषु रघुवंशं प्रथमं स्थानम् आवहति। रघुवंशम् एकोनविंशतिसर्गात्मकम् एकं लालित्यपूर्णं महाकाव्यम् अस्ति। अत्र रघुवंशीयानां नृपाणां कथाः निबद्धाः सन्ति। भगवान् श्रीरामः एव महाकाव्यस्य नायकः वर्तते। दशमसर्गादारभ्य पञ्चदशसर्गपर्यन्तं तस्य एव कथा वर्णिता अस्ति। महाकाव्यं च राज्ञः अग्निवर्णस्य राज्याभिषेकेण समापयति कविः। रघुवंशे ये राजानः वर्णिताः सन्ति तैः सह रामायणे वर्णितानां नृपाणां महान् भेदः अस्ति। किन्तु वायुपुराणे वर्णितैः नृपैः सह तेषां भूयशः समानता दृश्यते।

वयं तावत् रघुवंशस्य प्रथमं सर्गं पठामः। तस्मिन् सर्गे कविः रघुवंशीयस्य महाराजदिलीपस्य चरित्रवर्णनं करोति। ततः च स सन्तानाभावात् भार्यया सुदक्षिणया सह वसिष्ठाश्रमं प्रति गच्छति। कामधेनोः अवज्ञा एव सन्तानलाभस्य प्रतिबन्धिका इति कुलगुरोः वसिष्ठात् जानाति। ततः तौ कामधेनसुतायाः सुरभेः सेवायां तत्परौ भवतः इति प्रथमसर्गस्य सारः। अस्मिन् ग्रन्थे च वयं सुदक्षिणादिलीपयोः वसिष्ठाश्रमगमनम् इति यावत् एव पठामः।

४

# रघुवंशम् - रघुवंशीयनृपाणां गुणवर्णनम्

## प्रस्तावना

अस्मिन् पाठे रघुवंशस्य आदितः दश श्लोकान् पठामः। अत्र काव्यस्य विषयवस्तुवर्णनं न आरभ्यते। अस्मिन् भागे प्रथमतः कविः महाकाव्यस्य मङ्गलाचरणं करोति। ततः ग्रन्थलेखने स्वस्य असामर्थ्यं प्रकटय्य विनयं प्रदर्शयति। असामर्थ्ये सति अपि रघुवंशलेखने स कथं प्रवृत्तः इति अपि स ज्ञापयति। ततः कालिदासः साधारणतया सर्वेषां रघुवंशीयानां नृपाणां वर्णनं करोति। अन्ते च रघुवंशकाव्यपठने कः अधिकारी इति कथयति।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान्-

- कालिदासस्य विनम्रतां जानीयात्।
- रघुवंशीयानां नृपाणां विषये ज्ञातुं पारयेत्।
- कालिदासस्य काव्यशैलीं ज्ञातुं शक्नुयात्।
- श्लोकानाम् अन्वयं प्रतिपदार्थादिकं च अवगच्छेत्।
- उपमादीन् कांश्चन अलङ्कारान् बोद्धुं शक्नुयात्।
- दीर्घानां पदानां विग्रहवाक्यं समासं च बोद्धुं समर्थः भवेत्।

## ४.१) मूलपाठः -

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।१।।**
**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।२।।**
**मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः।।३।।**
**अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः।**

**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः।।४।।**

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।**

**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्।।५।।**

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।**

**यथापराधदण्डानां यथाकालप्रबोधिनाम्।।६।।**

**त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।**

**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।७।।**

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।**

**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।८।।**

**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।**

**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः।।९।।**

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**

**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।।१०।।**

## ४.२) इदानीं मूलपाठम् अवगच्छाम -

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।१।।**

**अन्वयः** - वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्दे।

**अन्वयार्थः** - वागर्थाविव शब्दार्थाविव सम्पृक्तौ सम्पर्कयुक्तौ जगतः विश्वस्य पितरौ मातापितरौ पार्वतीपरमेश्वरौ उमामहेश्वरौ वागर्थप्रतिपत्तये शब्दार्थपरिज्ञानाय वन्दे अभिवादये।

**सरलार्थः** - वागर्थौ इव नित्यं संयुक्तौ समग्रस्य लोकस्य मातापितरौ पार्वतीपरमेश्वरौ शब्दार्थराशेः सम्यक् परिज्ञानाय प्रणमामि।

**तात्पर्यार्थः** - अयं रघुवंशस्य मङ्गलश्लोकः वर्तते। प्रत्येकं कार्याणां निर्विघ्नेन समाप्तये कार्यारम्भात् प्राक् मङ्गलम् आचर्यते। तेन मङ्गलाचरणेन विघ्नानां नाशः भवति। अस्मिन् विषये समाप्तिकामो मङ्गलमाचरेत् इत्यादिश्रुतिः अपि वर्तते। एवमेव कस्यचित् काव्यस्य निर्विघ्नं परिसमाप्त्यर्थं तस्य काव्यस्य आदौ मङ्गलाचरणं कुर्वन्ति कविजनाः। अतः महाकविः कालिदासः अपि स्वस्य रघुवंशमहाकाव्यस्य मङ्गलम् अनेन श्लोकेन विदधाति। अस्मिन् श्लोके कविः पार्वतीपरमेश्वरयोः स्तुत्या काव्यस्य मङ्गलं सम्पादयति।



अत्र वन्द्यमानौ देवौ समस्तस्य लोकस्य मातापितरौ। अतः समग्रं विश्वमेव तयोः पुत्रसमानं भवति। यथा मातुः पितुः च प्रसादः सदा सन्तानेषु वर्तते तथा एव उमामहेश्वरयोः प्रसादः अपि पुत्रलक्षणे कवौ अस्ति इति वक्तुं शक्यते। अत्र पार्वतीपरमेश्वरौ वागर्थौ इव सम्पृक्तौ इति उपमानम् अपि प्रदत्तम्। सम्पृक्तौ इत्यस्य अर्थः भवति सम्पर्कयुक्तौ। अर्थात् शब्दार्थयोः सम्पर्कः यथा नित्यः अस्ति तथा उमामहेश्वरयोः दाम्पत्यबन्धः अपि नित्यः अस्ति। अत्र नित्यः शब्दार्थसम्बन्धः इति मीमांसकानां मतं प्रमाणं वर्तते। तादृशयोः सम्पर्कयुक्तयोः उमामहेश्वरयोः वन्दनायाः फलं वर्तते शब्दार्थयोः सुस्पष्टं ज्ञानम् इति। शब्दार्थौ उत्कृष्टौ चेत् काव्यमपि उत्कृष्टं भवति। काव्यस्य उत्कृष्टता एव कवेः साफल्यम्। अतः कविः पार्वतीपरमेश्वरयोः स्तुत्या रघुवंशकाव्यस्य साफल्यमेव प्रार्थयति। अतः कवेः प्रार्थना समुचिता अस्ति।

**व्याकरणविमर्शः -**

- वागर्थाविव - वाक् च अर्थः च वागर्थौ इति इतरेतरयोगद्वन्द्वसमासः। वागर्थौ इव इति वागर्थाविव।
- सम्पृक्तौ - (सम्+पृच्+क्त) सम्-इति उपसर्गपूर्वकात् पृच्-धातोः क्तप्रत्यये सम्पृक्त इति प्रातिपदिकं निष्पद्यते। तस्य प्रथमाद्विवचने सम्पृक्तौ इति रूपम्।
- वागर्थप्रतिपत्तये - वागर्थयोः प्रतिपत्तिः वागर्थप्रतिपत्तिः इति षष्ठीतत्पुरुषसमासः, तस्यै वागर्थप्रतिपत्तये। एतत् चतुर्थ्येकवचनस्य रूपम्।
- पितरौ - माता च पिता च पितरौ इति एकशेषः।
- पार्वतीपरमेश्वरौ - परमः च असौ ईश्वरः च इति परमेश्वर इति कर्मधारयसमासः। पार्वती च परमेश्वरः च पार्वतीपरमेश्वरौ इति इतरेतरयोगद्वन्द्वसमासः।
- **अव्ययपरिचयः** - अत्र इव इति अव्ययपदम् अस्ति। एतत् च सादृश्यवाचकम् अव्ययं वर्तते।
- **प्रयोगपरिवर्तनम्** - (मया) वागर्थौ इव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्द्येते।

**अलङ्कारालोचना** - उपमा इति एकः अलङ्कारः वर्तते। उपमालङ्कारस्य प्रयोगे चत्वारः विषयाः आवश्यकाः- उपमेयः उपमानम् उपमावाचकशब्दः सदृशः धर्मः च। प्रस्तुते श्लोके उपमेयः भवति पार्वतीपरमेश्वरौ। उपमानं भवति वागर्थौ। अपि च उपमावाचकः शब्दः भवति इव इति। यथा वागर्थौ संयुक्तौ भवतः तथा पार्वतीपरमेश्वरौ अपि संयुक्तौ इति सादृश्यम्। अतः अत्र उपमालङ्कारः अस्ति।



## पाठगतप्रश्नाः -१

१. कविः किमर्थं पार्वतीपरमेश्वरौ वन्दते।

२. पार्वतीपरमेश्वरौ कौ इव सम्पृक्तौ।

३. पितरौ इत्यत्र विग्रहं समासनाम च लिखत।

४. प्रस्तुते श्लोके कः अलङ्कारः अस्ति।

५. एतेषु किं कालिदासेन न रचितम्-

१) कुमारसम्भवम् २) उत्तररामचरितम् ३) मालविकाग्निमित्रम् ४) ऋतुसंहारम्

६. अस्मिन् श्लोके कः अलङ्कारः अस्ति-

१) उत्प्रेक्षालङ्कारः २) रूपकालङ्कारः ३) उपमालङ्कारः ४) दृष्टान्तालङ्कारः

७. उपमालङ्कारे किं न आवश्यकम्

१) उपमेयम् २) उपमानम् ३) उपमेयविशेषणम् ३) सदृशधर्मः

८. रघुवंशे कति सर्गाः सन्ति-

१) १९ २) १८ ३) २० ४) १७

९. वागर्थौ इत्यत्र कः समासः

१) तत्पुरुषः २) अव्ययीभावः ३) बहुव्रीहिः ४) द्वन्द्वः

१०. रघुवंशस्य अन्तिमः राजा कः-

१) अग्निवर्णः २) अग्निवर्मा ३) अग्निशर्मा ४) अग्निवर्मणः

## ४.३) इदानीं मूलपाठम् अवगच्छाम -

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।२।।**

**अन्वयः** - सूर्यप्रभवः वंशः क्व। अल्पविषया मतिश्च क्व। मोहाद् दुस्तरं सागरम् उडुपेन तितीर्षुः अस्मि।

**अन्वयार्थः** - सूर्यप्रभवः भास्करोत्पन्नः वंशः कुलं क्व कुत्र अल्पविषया अल्पज्ञानवती मतिश्च बुद्धिश्च क्व कुत्र मोहाद् लोभाद् दुस्तरं तरीतुम् अशक्यं सागरं समुद्रं तितीर्षुः तरीतुम् इच्छुः अस्मि भवामि।

**सरलार्थः** - महत् सूर्यकुलं कुत्र। अल्पज्ञानवती मम बुद्धिः कुत्र। अर्थात् क्षुद्रमतियुक्तेन मया सूर्यकुलस्य वर्णनं नैव शक्यते। तथापि तत् कर्तुम् उद्यतः अहं लघुनौकया भीषणं समुद्रं तरीतुमिच्छामि।

**तात्पर्यार्थः** - अस्मिन् श्लोके कविः रघुवंशकाव्यरचनायां स्वस्य असामर्थ्यं कथयित्वा विनयं प्रकटयति। लघुनौकया सुविशालस्य भयङ्करस्य समुद्रस्य तरणम् असम्भवं भवति। कविः वदति यत् तेन रघुवंशकाव्यरचना अपि तथैव दुष्करा अस्ति। मनुदिलीपरघुरामादयः महान्तः आसन्। अतः तेषां चरितस्य वर्णनं सामान्यमानवाः कर्तुं न शक्नुवन्ति। तेषां चरितवर्णनं कर्तुं प्राज्ञाः एव समर्थाः सन्ति। किन्तु कालिदासः आत्मानं प्राज्ञं न मन्यते। अतः स रघुवंशकाव्यनिर्माणे असमर्थः इति तस्य आशयः। लोके ये शिष्टा भवन्ति ते प्रथमतः कर्मणि तेषाम् असामर्थ्यमेव प्रकटयन्ति। ततश्च तत्तत्कर्म

सम्पादयन्ति। महाकविः कालिदासः अपि रघुवंशमहाकाव्यस्य रचनायाः प्राक् तथा एव आचरितवान्। अतः सः अपि शिष्टः अस्ति इति प्रकाशयति अयं श्लोकः।

**व्याकरणविमर्शः -**

- सूर्यप्रभवः - प्रभवति अस्मात् इति प्रभवः उत्पत्तिस्थानम्। सूर्यः प्रभवः यस्य सः सूर्यप्रभवः इति बहुव्रीहिसमासः।
- अल्पविषया - अल्पः विषयः यस्याः सा अल्पविषया इति बहुव्रीहिसमासः। एषः शब्दः मतिशब्दस्य विशेषणम्। अतः स्त्रीलिङ्गे वर्तते।
- तितीर्षुः - तरीतुम् इच्छुः इत्यर्थे तृधातोः सन्प्रत्यये उप्रत्यये च तितीर्षुः इति रूपम्।
- दुस्तरम् - दुःखेन तरीतुं शक्यमिति दुष्करम्।

**सन्धिकार्यम् -**

- सूर्यप्रभवो वंशः - सूर्यप्रभवः+वंशः
- चाल्पविषया - च+अल्पविषया
- तितीर्षुर्दुस्तरम् - तितीर्षुः+दुस्तरम्
- मोहादुडुपेनास्मि - मोहाद्+उडुपेन+अस्मि
- **अव्ययपरिचयः** - क्व इति एकम् अव्ययपदम्। कुत्र इति तस्य अर्थः।
- **प्रयोगपरिवर्तनम्** - सूर्यप्रभवेन वंशेन क्व (भूयते) अल्पविषया मत्या च क्व (भूयते)। (मया) मोहात् दुस्तरं सागरं उडुपेन तितीर्षुणा (भूयते)।

**अलङ्कारालोचना** - अत्र सूर्यवंशः दुस्तरसमुद्र इव स्वमतिः लघुनौका इव इति वारद्वयम् उपमालङ्कारस्य प्रयोगः कृतः। अतः अत्र सूर्यवंशः स्वमतिः च उपमेयवाचकं पदद्वयं भवति। दुस्तरसमुद्रः लघुनौका च उपमानवाचके द्वे पदे भवतः। लघुनौकया यथा दुस्तरसमुद्रस्य तरणम् असम्भवं तथा कवेः मत्या रघुवंशीयानां चरितवर्णनम् असम्भवम् इति सादृश्यम्। अतः अत्र उपमालङ्कारः वर्तते।

## पाठगतप्रश्नाः -२

११. कविः स्वमतिं केन सह उपमाति। रघूणां चरितस्य उपमानं कविना किं प्रदत्तम्।

१२. मोहादुडुपेनास्मि इत्यत्र सन्धिविच्छेदं कुरुत।

१३. तितीर्षुः इत्यस्य कः अर्थः।

१४. प्रस्तुते श्लोके उपमालङ्कारं साधयत।

१५. प्रभवः नाम किम्-

१) विनाशस्थानम् २) प्राप्तिस्थानम् ३) उत्पत्तिस्थानम् ४) प्रथमस्थानम्



## ४.४) इदानीं मूलपाठम् अवगच्छाम -

**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।**

**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः।।३।।**

**अन्वयः** - मन्दः कवियशःप्रार्थी (अहम्) प्रांशुलभ्ये फले लोभात् उद्बाहुः वामनः इव उपहास्यतां गमिष्यामि।

**अन्वयार्थः** - मन्दः मूढः कवियशःप्रार्थी कविकीर्त्यभिलाषी प्रांशुलभ्ये उन्नतेन प्राप्ये फले फलविषये लोभात् मोहात् उद्बाहुः उन्नतभुजः वामनः इव खर्व इव उपहास्यतां गमिष्यामि उपहास्यो भविष्यामि।

**सरलार्थः** - अहं मन्दः अपि महाकवियशः प्राप्तुमिच्छामि। अतः उन्नतजनेन लभ्यं फलं प्राप्तुं प्रवर्तमानः वामनः यथा उपहास्यः भवति तथा अहमपि उपहास्यः भविष्यामि।

**तात्पर्यार्थः** - महाकविः कालिदासः पूर्वस्मिन् श्लोके स्वस्य असामर्थ्यं प्रकटितवान्। किन्तु तेन तस्य तृप्तिः न जाता। अतः अस्मिन् श्लोके पुनः स्वीयम् असामर्थ्यं प्रकाश्य विनयं प्रकटयति। उपरि स्थितं यत् किमपि वस्तु उन्नतः जनः एव प्राप्तुं शक्नोति। कश्चन वामनः तत् फलं प्राप्तुम् इच्छति चेत् तेन स्वस्य बाहुद्वयम् उन्नतं कृत्वा तत् प्राप्तव्यं भवति। किन्तु एवं कुर्वाणः स सर्वैः उपहसितः भवति। कालिदासः अपि महाकविकीर्तिं प्राप्तुं काङ्क्षते। किन्तु सा कीर्तिः सामान्यमानवैः प्राप्तुं न शक्यते। विशिष्टैः प्राज्ञैः एव सा प्राप्यते। तथापि कालिदासः तां प्राप्तुं प्रयतते। किञ्च तस्य महाकवित्वेच्छा सामर्थ्यात् न उत्पन्ना अपि तु लोभात् उत्पन्ना इत्यपि स कथयति। अतः लोभात् प्रवर्तमानः स सर्वैः उपहसित एव भविष्यति इति तस्य आशयः। लोके ये महात्मानः भवन्ति ते स्वस्य असामर्थ्यस्य कथने न लज्जन्ते। महात्मनाम् इदं लक्षणं कालिदासे अपि अन्वेति। वस्तुतः अनेन श्लोकेन कालिदासस्य विनय एव प्रकटितः भवति।

**व्याकरणविमर्शः -**

- कवियशःप्रार्थी - कवेः यशः कवियशः इति षष्ठीतत्पुरुषसमासः। कवियशः प्रार्थयते इति अर्थे णिनिप्रत्यये कवियशःप्रार्थी इति रूपम्।
- प्रांशुलभ्ये - प्रांशुना लभ्यं प्रांशुलभ्यमिति तृतीयातत्पुरुषसमासः,तस्मिन् प्रांशुलभ्ये। एतत् रूपं सप्तम्येकवचने भवति।
- उद्बाहुः - उन्नतः बाहुः यस्य स उद्बाहुः इति बहुव्रीहिसमासः।
- उपहास्यताम् - उपहसितुं योग्य इत्यर्थे उपपूर्वकात् हस्धातोः ण्यत्प्रत्यये उपहास्य इति रूपम्। उपहास्यस्य भाव इत्यर्थे उपहास्यशब्दात् तल्प्रत्यये उपहास्यता, ताम् उपहास्यताम्। एतत् रूपं द्वितीयैकवचने भवति।

**सन्धिकार्यम् -**

- गमिष्याम्युपहास्यताम्- गमिष्यामि+उपहास्यताम्
- लोभादुद्बाहुरिव- लोभात्+उद्बाहुः+इव
- **प्रयोगपरिवर्तनम्** - मन्देन कवियशःप्रार्थिना (मया) प्रांशुलभ्ये फले लोभात् उद्बाहुना वामनेन इव उपहास्यता गमिष्यते।

**अलङ्कारालोचना** - अत्र कवियशः उन्नतजनेन लभ्यं फलमिव किञ्च कविः तत् फलं प्राप्तुम् इच्छुः वामनः इव इति कविः स्वयम् उपमाति। उभयत्र उपमावाचकः शब्दः इव इति अपि वर्तते। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -३

१६. कविः आत्मानं केन साकम् उपमाति।

१७. उपरि स्थितं फलं केन लब्धुं शक्यते।

१८. इव इति अव्ययपदस्य कः अर्थः।

१९. प्रांशुलभ्ये इत्यत्र विग्रहवाक्यं समासनाम च लिखत।

२०. उपरि स्थितं वस्तु कः प्राप्तुं न शक्नोति-

१) पीनः　　२) वामनः　　३) उन्नतः　　४) कृशः

## ४.५) इदानीं मूलपाठम् अवगच्छाम -

**अथवा कृतवाग्द्वारे वंशेस्मिन् पूर्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः।।४।।**

**अन्वयः** - अथवा पूर्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य इव मे गतिः अस्ति।

**अन्वयार्थः** - अथवा अन्यस्मिन् पक्षे पूर्वसूरिभिः प्राचीनकविभिः कृतवाग्द्वारे कृतकाव्यप्रवेशद्वारे अस्मिन् अत्र वंशे कुले वज्रसमुत्कीर्णे वज्रविद्धे मणौ रत्ने सूत्रस्य इव तन्तोः इव मे मम गतिः सञ्चारः अस्ति वर्तते।

**सरलार्थः** - वाल्मीक्यादिभिः प्राचीनाः कवयः काव्यमाध्यमेन अस्मिन् वंशे प्रविष्टवन्तः। अतः यथा वज्रविद्धे रत्ने सूत्रस्य गतिः प्रतिबन्धकविहीना भवति तथैव रघुवंशे मम प्रवेशः निर्बाधः अस्ति इति कवेः आशयः।



**तात्पर्यार्थः** - एतावता महाकविः कालिदासः रघुवंशकाव्यस्य लेखने स्वस्य असामर्थ्यं प्रकटितवान्। किन्तु असामर्थ्ये सत्त्वे अपि स काव्यलेखने कथं प्रवृत्तः- तत् अस्मिन् श्लोके वर्णयति। कविः वदति यत् रघुवंशकाव्यरचना तस्य कृते सरला एव वर्तते। यतः स एव रघुवंशस्य प्रथमः वर्णयिता इति नास्ति। पूर्वं वाल्मीक्यादयः महान्तः कवयः अपि रामायणादीन् ग्रन्थान् विरचितवान्। तत्र च ते रघुवंशीयानां जीवनं सम्यक् वर्णितवन्तः। तस्मात् कवेः कार्यं सुकरम् एव वर्तते। एतदर्थसमर्थनाय कविः दृष्टान्तमपि दर्शयति। वज्रेण मणिवेधकसूचीविशेषेण वा मणौ छिद्राणि क्रियन्ते। कृतैः तैः छिद्रैः रत्ने सूत्रस्य गतिः यथा सरला भवति तथा रघुवंशकाव्यरचनायां कवेः गतिः अपि बाधहीना वर्तते इति कवेः मतम्। यतो हि वाल्मीक्यादयः विद्वांसः स्वकाव्यद्वारा तत्र प्रवेशद्वारं निर्मीतवन्तः। एवं रघुवंशकाव्यनिर्माणे कविः स्वकीयां प्रतिभां निराकरोति। अपि च, व्यासवाल्मीक्यादिषु प्राचीनेषु कविषु तस्य कियती श्रद्धा आसीत् इत्यपि ज्ञापयति।

**व्याकरणविमर्शः -**

- पूर्वसूरिभिः - पूर्वं च ते सूरयः पूर्वसूरयः, तैः इति कर्मधारयसमासः।
- कृतवाग्द्वारे - कृतं वाक् एव द्वारं यस्य सः कृतवाग्द्वारः, तस्मिन् इति बहुव्रीहिसमासः।
- वज्रसमुत्कीर्णे - वज्रेण समुत्कीर्णः वज्रसमुत्कीर्णः इति तृतीयातत्पुरुषसमासः। वज्रं नाम मणिभेदकः सूचीविशेषः।

**सन्धिकार्यम् -**

- वंशेऽस्मिन् - वंशे+अस्मिन्
- सूत्रस्येवास्ति - सूत्रस्य+इव+अस्ति
- **अव्ययपरिचयः** - अथवा इति विकल्पार्थकम् एकम् अव्ययम्।
- **प्रयोगपरिवर्तनम्** - अथवा पूर्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य इव मे गत्या भूयते।

**अलङ्कारालोचना** - अस्मिन् श्लोके पूर्वकविभिः कृतवाग्द्वारः वंशः वज्रसमुत्कीर्णेन मणिना उपमितः। किञ्च, कवेः गतिः सूत्रस्य गतिः इव इत्यपि वर्णितम्। इव इति उपमानवाचकशब्दः अपि अत्र वर्तते। अतः अत्र उपमालङ्कारः वर्तते।

## पाठगतप्रश्नाः -४

२१. वज्रबिद्धे रत्ने सूत्रस्य गतिः कथं भवति।

२२. वज्रं नाम किम्।

२३. सूत्रस्येवास्ति इति सन्धिविच्छेदं कुरुत।

२४. पूर्वसूरिणः के।

२५. अस्मिन् श्लोके कः उपमानवाचकः शब्दः

१) इव  २) वंशः ३) मणिः  ४) अन्यत् किमपि

## ४.६) इदानीं मूलपाठम् अवगच्छाम -

**सोहमाजन्मशुद्धानामाफलोदयकर्मणाम्।**

**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्।।५।।**

**अन्वयः** - सः अहम् आजन्मशुद्धानाम् आफलोदयकर्मणाम् आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनाम् (रघूणाम् अन्वयं वक्ष्ये)।

**अन्वयार्थः** - सः तादृशः अहं कालिदासः आजन्मशुद्धानां जन्मतः पवित्राणाम् आफलोदयकर्मणां फलप्राप्तिपर्यन्तं कर्म कुर्वाणानाम् आसमुद्रक्षितीशानां समुद्रपर्यन्तं पृथ्वीपालकानाम् आनाकरथवर्त्मनां स्वर्गपर्यन्तं रथमार्गः अस्ति येषां तेषां रघूणां रघुवंशोत्पन्नानां राज्ञाम् अन्वयं वंशं वक्ष्ये कथयिष्यामि।

**सरलार्थः** - जन्मतः पवित्राणां फललाभपर्यन्तं कर्म कुर्वाणानां सार्वभौमानां इन्द्रस्य सहचारिणां रघुवंशस्य नृपाणां वंशं महाकविः कालिदासः वर्णयति।

**तात्पर्यार्थः** - अस्मात् श्लोकात् चतुर्भिः श्लोकैः कविः रघुवंशीयानां नृपाणां चरितं वर्णयति। रघूणामन्वयं वक्ष्ये इति नवमश्लोकेन एतेषां श्लोकानाम् अन्वयः भवति। अत्र रघुवंशीयनृपाणां विशेषणचतुष्टयं प्रदत्तम्। तत्रादिमं विशेषणं भवति सोहमाजन्मशुद्धानाम् अर्थात् रघुवंशीयनृपाः जन्मतः एव शुद्धाः पवित्राः आसन्। द्वितीयम् आफलोदयकर्मणाम् अर्थात् ते फलप्राप्तिपर्यन्तं कर्म आचरन्ति स्म। कर्मसम्पादनकाले विघ्ने आगते अपि कर्म न त्यजन्ति स्म। अर्थात् ते निरन्तरं कर्म सम्पादयन्ति स्म इत्यर्थः। तृतीयं विशेषणं भवति आसमुद्रक्षितीशानाम् अर्थात् तेषां राज्यं समुद्रपर्यन्तम् आसीत्। तेषां राज्यस्य सीमा समुद्रः आसीत्। अतः पृथिव्याम् अन्यस्य कस्यापि राज्ञः राज्यं नासीत् इति ज्ञायते। समुद्रपर्यन्तं भूमीनां ते एव महीपतयः अभवन्। अन्तिमं विशेषणं प्रददाति आनाकरथवर्त्मनाम्। अस्यार्थः स्वर्गपर्यन्तं तेषां रथमार्ग आसीत्। अर्थात् स्वर्गं प्रत्यपि तेषां गमनागमनम् आसीत्। एवं ते इन्द्रस्य मित्राणि आसन् इति स्फुटं भवति। एतादृशानां महतां रघुवंशीयनृपाणां चरितं वर्णयितुं कालिदासः प्रवृत्त इति अस्य श्लोकस्य आशयः।

**व्याकरणविमर्शः -**

- आजन्मशुद्धानाम् - जन्मन आ इति आजन्म इति अव्ययीभावसमासः। आजन्म शुद्धाः आजन्मशुद्धाः इति सुप्सुपासमासः, तेषाम् आजन्मशुद्धानाम्। एतत् रूपं षष्ठीबहुवचने भवति।
- आफलोदयकर्मणाम् - फलोदयात् आ इति आफलोदयम् इति अव्ययीभावसमासः। आफलोदयं कर्म येषां ते आफलोदयकर्माणः इति बहुव्रीहिसमासः, तेषाम् आफलोदयकर्मणाम्। एतत् रूपं



षष्ठीबहुवचने भवति।

- आसमुद्रक्षितीशानाम् - समुद्रात् आ इति आसमुद्रम् इति अव्ययीभावसमासः। क्षितेः ईशाः क्षितीशाः इति तत्पुरुषसमासः। आसमुद्रं क्षितीशाः आसमुद्रक्षितीशाः इति सुप्सुपासमासः, तेषां आसमुद्रक्षितीशानाम्। एतत् रूपं षष्ठीबहुवचने भवति। क्षितिः नाम पृथिवी।
- आनाकरथवर्त्मनाम् - नाकात् आ आनाकम् इति अव्ययीभावसमासः। रथस्य वर्त्म रथवर्त्म इति षष्ठीतत्पुरुषसमासः। आनाकं रथवर्त्म येषां ते आनाकरथवर्त्मानः इति बहुव्रीहिसमासः, तेषाम् आनाकरथवर्त्मनाम्। एतत् रूपं षष्ठीबहुवचने भवति।

**सन्धिकार्यम्** -

- सोहमाजन्मशुद्धानामाफलोदयकर्मणाम्- - सः+अहम्+आजन्मशुद्धानाम्+आफलोदयकर्मणाम्
- आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् - आसमुद्रक्षितीशानाम्+आनाकरथवर्त्मनाम्
- **प्रयोगपरिवर्तनम्** - तेन मया आजन्मशुद्धानाम् आफलोदयकर्मणाम् आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनाम् (रघूणाम् अन्वयः वक्ष्यते)।

## पाठगतप्रश्नाः -५

२६. आनाकरथवर्त्मनाम् इत्यस्य अर्थं समासादिपुरःसरं परिष्कुरुत।

२७. रघुवंशीयनृपाणां राज्यस्य सीमा किम् आसीत्।

२८. सोहमाजन्मशुद्धानामाफलोदयकर्मणाम् इत्यत्र सन्धिविच्छेदं कुरुत।

२९. रघुवंशीयानां नृपाणां मार्गः कियत्पर्यन्तम् आसीत्-

१) स्वर्गपर्यन्तम् २) गगनपर्यन्तम् ३) पातालपर्यन्तम् ४) राज्यसीमपर्यन्तम्

३०. किं नाम क्षितिः-

१) जलम् २) पृथिवी ३) वायुः ४) आकाशः

## ४.७) इदानीं मूलपाठम् अवगच्छाम -

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।**

**यथापराधदण्डानां यथाकालप्रबोधिनाम्।।६।।**

**अन्वयः** - (सः अहम्) यथाविधिहुताग्नीनां यथाकामार्चितार्थिनां यथापराधदण्डानां यथाकालप्रबोधिनाम् (रघूणाम् अन्वयं वक्ष्ये)।

**अन्वयार्थः** - सः अहम् कालिदासः यथाविधिहुताग्नीनां विधिपूर्वकं होमं कुर्वतां यथाकामार्चितार्थिनां यथाभिलाषं याचकानां सत्कारं कुर्वतां यथापराधदण्डानां अपराधानुसारेण दण्डं प्रदातृणाम् यथाकालप्रबोधिनां यथासमयं प्रबोधनशीलानां रघूणाम् अन्वयं वक्ष्ये।

**सरलार्थः** - अहं कालिदासः विधिपूर्वकं होमानुष्ठानं कुर्वतां अभिलाषानुसारेण याचकेभ्यः दानं कुर्वाणानाम् अपराधानुसारेण दण्डदायिनां यथासमयं प्रबुद्धानां रघुवंशीयनृपाणां वंशं वर्णयिष्यामि।

**तात्पर्यार्थः** - अस्मिन् श्लोके कालिदासः रघुवंशीयनृपाणां गुणविशेषवर्णनं करोति। रघुवंशीया नृपाः सर्वाणि कार्याणि यथार्थं सम्पादयन्ति स्म। एतत्प्रदर्शनाय तेषां विशेषणचतुष्टयम् अत्र उल्लिखितं वर्तते। यथाविधिहुताग्नीनाम् अर्थात् वेदादिशास्त्रेषु अग्निहोमादीनां विधानं यथा कृतम् अस्ति तथैव ते पालयन्ति स्म। अग्निः द्विविधः भवति- श्रौताग्निः स्मार्ताग्निः च। श्रौताग्नेः त्रयः भेदाः सन्ति- दक्षिणाग्निः आहवनीयाग्निः गार्हपत्याग्निः च। स्मार्ताग्नेः अपि द्वौ भेदौ- शम्याग्निः आवसथ्याग्निः च। ते राजानः एतेषां सर्वेषाम् अग्नीनामेव हवनं यथाविधि कुर्वन्ति स्म। शास्त्रानुसारेण यज्ञाचरणं करोति स्म अतः फलितार्थः अपि सम्यगासीदिति ज्ञायते। यथाकामार्चितार्थिनाम् अर्थात् याचकाः यद् यद् इच्छन्ति स्म तत् सर्वम् एव ते याचकेभ्यः प्रददति स्म। अभिलाषानुसारेण याचकेभ्यः इष्टानि वस्तूनि प्रदाय तान् याचकान् सन्तुष्टान् करोति स्म। एतेन तेषां दानातिशयः वर्ण्यते। यथापराधदण्डानाम् इत्यस्य अर्थः भवति यत् अपराधः कृतः चेत् तदपराधानुसारेण अपराधकारिभ्यः ते दण्डान् यच्छन्ति स्म। तेषां शासनकाले अपराधं कृत्वा कोपि निर्दण्डः न तिष्ठति स्म। तेन अधिकदण्ड्यानां न्यूनदण्डः न्यूनदण्ड्यानाम् अधिकदण्डः इति वैषम्यभावः नासीत्। यथाकालप्रबोधिनाम् अर्थात् ते यस्मिन समये यत् कार्यं कर्तव्यं तस्मिन् तस्मिन् समुचिते काले तत् तत् कार्यं कर्तुं प्रबुद्धाः भवन्ति स्म। यथा युद्धं कर्तव्यं चेत् तत्क्षणे एव ते युद्धाय प्रस्तुतिं कुर्वन्ति स्म। कुत्रापि गमनीयं चेत् तत्क्षणे एव ते गमनाय प्रस्तुताः भवन्ति स्म। एवमेव तेषां कार्यस्य कालिकप्रज्ञा स्फुटा अवर्तत इत्यर्थः। तादृशानां रघुवंशीयानां राज्ञां वर्णनं कविः कर्तुं प्रयतते।

**व्याकरणविमर्शः -**

- यथाविधिहुताग्नीनाम् - हुता अग्नयो यैः ते हुताग्नयः इति बहुव्रीहिसमासः। यथाविधि हुताग्नयः यथाविधिहुताग्नयः इति सुप्सुपासमासः, तेषां यथाविधिहुताग्नीनाम्। एतत् रूपं षष्ठीबहुवचने भवति।
- यथाकामार्चितार्थिनाम् - कामम् अनतिक्रम्य यथाकामम् इति अव्ययीभावसमासः। अर्चिताः अर्थिनः यैस्ते अर्चितार्थिनः इति बहुव्रीहिः। यथाकामम् अर्चितार्थिनः यथाकामार्चितार्थिनः इति सुप्सुपासमासः, तेषां यथाकामार्चितार्थिनाम्। षष्ठीबहुवचने एतत् रूपं भवति।
- यथापराधदण्डानाम् - अपराधम् अनतिक्रम्य यथापराधम् इति अव्ययीभावसमासः। यथापराधं दण्डः येषां ते यथापराधदण्डाः इति बहुव्रीहिसमासः,तेषां यथापराधदण्डानाम्। षष्ठीबहुवचनान्तम् एतत् रूपम्।
- यथाकालप्रबोधिनाम् - कालम् अनतिक्रम्य यथाकालम् इति अव्ययीभावसमासः। यथाकालं प्रबोधिनः यथाकालप्रबोधिनः इति सुप्सुपासमासः, तेषां यथाकालप्रबोधिनाम्। षष्ठीबहुवचने भवति एतत् रूपम्।
- **प्रयोगपरिवर्तनम्** - (तेन मया) यथाविधिहुताग्नीनां यथाकामार्चितार्थिनां यथापराधदण्डानां यथाकालप्रबोधिनाम् (रघूणाम् अन्वयः वक्ष्यते)।

## पाठगतप्रश्नाः -६

३१. अग्नेः भेदान् उपभेदान् च लिखत।

३२. यथापराधदण्डानाम् इत्यस्य समासपुरःसरम् अर्थं लिखत।

३३. श्लोके उक्तानि चत्वारि विशेषणानि कं विशिंषन्ति।

३४. अग्नेः कति भेदाः

१) ५  २) ४  ३) ३  ४) २

३५. एतेषु कः न श्रौताग्निः-

१) दक्षिणाग्निः  २) आवसथ्याग्निः  ३) गार्हपत्याग्निः  ४) आहवनीयग्निः

३६. अस्मिन् श्लोके रघुवंशीयनृपाणां कति विशेषणानि प्रदत्तानि-

१) त्रीणि  २) चत्वारि  ३) पञ्च  ४) षट्

## ४.८) इदानीं मूलपाठम् अवगच्छाम -

**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।७।।**

**अन्वयः** - (सः अहम्) त्यागाय सम्भृतार्थानां सत्याय मितभाषिणां यशसे विजिगीषूणां प्रजायै गृहमेधिनां (रघूणामन्वयं वक्ष्ये)।

**अन्वयार्थः** - सः अहं कविः त्यागाय दानाय सम्भृतार्थानां धनस्य संग्राहकाणां सत्याय सत्यरक्षायै मितभाषिणाम् अल्पभाषणशीलानां यशसे कीर्तये विजिगीषूणां विजयम् इच्छतां प्रजायै सन्तानाय गृहमेधिनां गृहस्थाश्रमं प्रविशतां रघूणाम् अन्वयं वक्ष्ये।

**सरलार्थः** - रघुवंशोत्पन्नाः राजानः दानाय धनानि संगृह्णन्ति स्म, सत्याय स्वल्पं भाषन्ते स्म, कीर्तये दिग्विजयं कुर्वन्ति स्म किञ्च सन्तानलाभाय विवाहम् अकुर्वन्।

**तात्पर्यार्थः** - अस्मिन् श्लोके उच्यते यत् ते नृपाः दानाद्यर्थं धनार्जनं कृतवन्तः। सामान्यतः लोके जनाः स्वभोगाय धनार्जनं कुर्वन्ति। परन्तु ते कदापि स्वार्थसिद्धये धनसंग्रहं न कृतवन्तः। एवं ते सम्पदः सम्यक् उपयोगम् अकुर्वन्। तेन च तेषाम् अभ्युदयः एव जातः। अपि च ते सत्याय स्वल्पं भाषन्ते स्म। वस्तुतः वृथा बहुभाषणं न शोभते। सत्यकथनाय यावती भाषा अपेक्षिता तावती भाषा एव प्रशस्या अस्ति। ये बहु भाषन्ते तेषां वाचि मिथ्या तिष्ठति एव। अतः रघुवंशीया नृपाः स्वल्पं भाषितवन्तः। ते दिग्विजयं कृतवन्तः कीर्तिलाभाय। सामान्यराजानः धनादिभोगार्थम् एव राज्यजयं कुर्वन्ति। परन्तु ते केवलं कीर्तिं लब्धुम् एव राज्यानि जितवन्तः। अपि च ते सन्तानलाभाय गृहस्थाश्रमं प्रविष्टवन्तः।

अज्ञानिनः भार्यादिभोगाय विवाहं कुर्वन्ति। किन्तु रघुवंशीयराज्ञां सन्तानप्राप्तिः एव विवाहस्य कारणम् आसीत्। एतादृशानां नृपाणां चरितं कविः वर्णयितुं प्रवृत्तः इति श्लोकस्य अर्थः।

**व्याकरणविमर्शः -**

- सम्भृतार्थानाम् - सम्भृतः सञ्चितः अर्थः यैः ते सम्भृतार्थाः इति बहुव्रीहिसमासः, तेषां सम्भृतार्थानाम्। षष्ठीबहुवचने एतत् रूपम् अस्ति।
- मितभाषिणाम् - मितं स्वल्पं भाषणं शीलं येषां ते मितभाषिणः, तेषां मितभाषिणाम्। षष्ठीबहुवचने एतत् रूपम् अस्ति।
- विजिगीषूणाम् - विजेतुम् इच्छवः विजिगीषवः, तेषां विजिगीषूणाम्। अत्र जिधातोः सन्प्रत्ययः उप्रत्ययः च विहितः।
- गृहमेधिनाम् - गृहैः दारैः मेधन्ते संगमं कुर्वन्ति इति गृहमेधिनः, तेषां गृहमेधिनाम्। एतत् रूपं षष्ठीबहुवचनान्तम्।
- **प्रयोगपरिवर्तनम्** - (तेन मया) त्यागाय सम्भृतार्थानां सत्याय मितभाषिणां यशसे विजिगीषूणां प्रजायै गृहमेधिनां (रघूणाम् अन्वयः वक्ष्यते)।

## पाठगतप्रश्नाः -७

३७. रघुवंशीयाः नृपाः कथं मितभाषिणः।

३८. मितभाषिणः इत्यस्य किं विग्रहवाक्यम्।

३९. प्रजायै गृहमेधिनाम् इति कथनेन कविः किं प्रकटयितुम् इच्छति।

४०. विजिगीषूणाम् इत्यत्र कः प्रत्ययः-

१) सन्प्रत्ययः  २) यङ्प्रत्ययः  ३) सुप्रत्ययः  ४) यक्प्रत्ययः

४१. रघुवंशीयाः नृपाः कथं विवाहं कृतवन्तः -

१) कामभोगाय  २) संसारपालनाय  ३) सन्तानप्राप्तये  ४) पित्रादेशपालनाय

## ४.९) इदानीं मूलपाठम् अवगच्छाम -

**शैशवेभ्यस्तविद्यानां यौवनै विषयैषिणाम्।**

**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।८।।**

**अन्वयः** - (सः अहम्) शैशवे अभ्यस्तविद्यानां यौवने विषयैषिणां वार्धके मुनिवृत्तीनाम् अन्ते योगेन तनुत्यजाम् (रघूणाम् अन्वयं वक्ष्ये)।

**अन्वयार्थः -** सः अहं कालिदासः शैशवे बाल्ये अभ्यस्तविद्यानाम् अधीतशास्त्राणां यौवने तारूण्ये विषयैषिणां भोगस्य इच्छुकानां वार्धके वृद्धत्वे मुनिवृत्तीनां वानप्रस्थाश्रमिणां तथा च अन्ते शरीरत्यागसमये योगेन परमात्मनः ध्यानेन तनुत्यजाम् शरीरत्यागिनां रघूणाम् अन्वयं वक्ष्ये।

**सरलार्थः -** रघुवंशीया नृपाः बाल्यकाले विद्याभासं कृतवन्तः। यौवनकाले विषयसुखम् अनुभूतवन्तः। वार्धककाले मुनिजीवनमार्गं स्वीकृतवन्तः। जीवनस्य अन्ते योगमार्गेण देहत्यागं कृतवन्तः।

**तात्पर्यार्थः -** अस्मिन् श्लोके कविः रघुवंशीयानां नृपाणां पुरुषार्थमयं सम्पूर्णं जीवनं वर्णयति। ते नृपाः स्वजीवने चतुरः आश्रमान् एव साधु पालितवन्तः इति अनेन श्लोकेन ज्ञायते। शैशवे ते सम्यग् विद्याभासं कृतवन्तः। विद्यार्जनम् एव ब्रह्मचर्याश्रमस्य मूलम्। अतः ब्रह्मचर्याश्रमः तैः साधु परिपालितः इति अवगम्यते। ततः परं तेषां यौवनकालः आगतः। तस्मिन् समये गृहस्थाश्रमं प्रविश्य ते विषयसुखम् अपि अनुभूतवन्तः। धर्मः अर्थः कामः इति त्रयं त्रिवर्गः इति उच्यते। एताभ्यां द्वाभ्याम् आश्रमाभ्याम् एव ते नृपाः एतं त्रिवर्गं साधितवान्। तदनन्तरं वार्धके मुनयः यथा जीवनम् अतिवहन्ति तथा ते नृपाः अपि जीवनम् अतिवहन्ति स्म। एतेन वानप्रस्थाश्रमं सन्न्यासाश्रमं च ते सम्यक् पालितवन्तः इति ज्ञायते। जीवनान्ते ते योगमार्गेण देहत्यागं कुर्वन्ति स्म अर्थात् ते मोक्षं प्राप्तवन्तः इत्यर्थः। मृत्युना शरीरत्यागः भवति चेत् पुनः जन्म भवति। किन्तु योगेन देहत्यागः भवति चेत् मोक्ष एव भवति। एवं तेषां सर्वे एव आश्रमाः सार्थकाः आसन्। अपि च तैः जीवने पुरुषार्थाः अपि प्राप्ताः आसन्। अनेन श्लोकेन कविः सनातनधर्मस्य सारं लीलया दर्शयति।

**व्याकरणविमर्शः -**

- अभ्यस्तविद्यानाम् - अभ्यस्ता विद्या यैः ते अभ्यस्तविद्याः इति बहुव्रीहिसमासः, तेषाम् अभ्यस्तविद्यानाम्। षष्ठ्या बहुवचने एतत् रूपम्।
- विषयैषिणाम् - विषयान् इच्छन्ति इति विषयैषिणः, तेषां विषयैषिणाम्। षष्ठीबहुवचनान्तं रूपमेतत्।
- मुनिवृत्तीनाम् - मुनीनां वृत्तिः व्यापारः येषां ते मुनिवृत्तयः इति बहुव्रीहिसमासः, तेषां मुनिवृत्तीनाम्। मुनिवृत्तिशब्दस्य षष्ठीबहुवचने इदं रूपं भवति।
- तनुत्यजाम् - तनुं त्यजन्ति इति तनुत्यजः इति उपपदसमासः, तेषां तनुत्यजाम्। तनुत्यज्-शब्दस्य षष्ठीबहुवचने इदं रूपम्। तनुं त्यक्तवताम् इत्यर्थः।

**सन्धिकार्यम्** -

- शैशवेभ्यस्तविद्यानाम् - शैशवे+अभ्यस्तविद्यानाम्
- योगेनान्ते - योगेन+अन्ते
- **प्रयोगपरिवर्तनम्** - (तेन मया) शैशवे अभ्यस्तविद्यानां यौवने विषयैषिणां वार्धके मुनिवृत्तीनाम् अन्ते योगेन तनुत्यजाम् (रघूणाम् अन्वयः वक्ष्यते)।

## पाठगतप्रश्नाः -८

४२. सूर्यवंशीयाः कथं देहं त्यजन्ति स्म।

४३. रघुवंशीयाः शैशवे किं कुर्वन्ति स्म।

४४. तनुत्यजाम् इत्यत्र विग्रहवाक्यं समासनाम च लिखत।

४५. कति आश्रमाः-

१) ३ २) ४ ३) ५ ४) ६

४६. अभ्यस्तविद्यानाम् इत्यत्र कः समासः-

१) बहुव्रीहिसमासः २) तत्पुरुषसमासः ३) द्वन्द्वसमासः ४) अव्ययीभावसमासः

## ४.१०) इदानीं मूलपाठम् अवगच्छाम -

**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोपि सन्।**
**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः।।९।।**

**अन्वयः** - (सः अहम्) तनुवाग्विभवः सन् अपि तद्गुणैः कर्णम् आगत्य चापलाय प्रचोदितः सन् (रघूणाम् अन्वयं वक्ष्ये)।

**अन्वयार्थः** - सः अहं कालिदासः तनुवाग्विभवः अल्पवाक्सम्पत्तिवान् सन् अपि भवन् अपि तद्गुणैः रघुवंशीयानां गुणैः कर्णम् श्रोत्रम् आगत्य प्राप्य चापलाय चाञ्चल्याय प्रचोदितः प्रेरितः सन् रघूणाम् अन्वयं वक्ष्ये।

**सरलार्थः** - अहं कालिदासः अल्पज्ञानी अस्मि। तथापि रघुवंशीयानां नृपाणां महद्भिः गुणैः प्रेरितः सन् रघुवंशकाव्यं रचितुं प्रवर्तितः अस्मि।

**तात्पर्यार्थः** - रघुवंशीयानां वर्णनं पूर्वं वाल्मीक्यादिभिः कविभिः कृतम्। अतः स रघुवंशे लब्धप्रवेशः वर्तते इति कालिदासः पूर्वम् एव वर्णितवान्। किञ्च इतः पूर्वं चतुर्भिः श्लोकैः स तेषां आजन्मशुद्ध्यादीनां गुणानां वर्णनमपि कृतवान्। तथापि अस्मिन् श्लोके सः पुनः स्वस्य असामर्थ्यं कथयति। स वदति यत् रघुवंशीयानां जीवनवर्णनाय यावत् ज्ञानम् अपेक्षितम् अस्ति तावत् ज्ञानं तस्य नास्ति। अर्थात् सः असमर्थः अस्ति इत्येव तस्य अभिप्रायः। तथापि तेषां नृपाणां गुणाः यदा कविः श्रुतवान् तदा तैः गुणैः स प्रचोदितः सञ्जातः। अर्थात् तेषां चरितवर्णनाय तस्य मनसि महती इच्छा समुत्पन्ना। अत एव स रघुवंशकाव्यं कर्तुं प्रवर्तते इति श्लोकस्य अस्य तात्पर्यम्।

### व्याकरणविमर्शः -

- तनुवाग्विभवः - वाचां विभवः वाग्विभवः इति तत्पुरुषसमासः। तनुः वाग्विभवः यस्य सः तनुवाग्विभवः इति बहुव्रीहिसमासः।
- तद्गुणैः - तेषां गुणाः तद्गुणाः इति षष्ठीतत्पुरुषसमासः,तैः तद्गुणैः। तृतीयायाः बहुवचने एतत् रूपं भवति।
- चापलाय - चपलस्य भावः चापलं, तस्मै चापलाय। चतुर्थ्येकवचनान्तं रूपम्।
- वक्ष्ये - ब्रूधातोः लृटि उत्तमपुरुषैकवचने वक्ष्ये इति रूपम्।
- आगत्य- आपूर्वकात् गम्धातोः ल्यप्प्रत्यये आगत्य इति रूपं भवति। अस्य अव्ययपदवत् प्रयोगः भवति।

### सन्धिकार्यम् -

- रघूणामन्वयम् - रघूणाम्+अन्वयम्
- तनुवाग्विभवोऽपि - तनुवाग्विभवः+अपि
- कर्णमागत्य - कर्णम्+आगत्य
- **प्रयोगपरिवर्तनम्** - (तेन मया) तनुवाग्विभवेन सता अपि तद्गुणैः कर्णम् आगत्य चापलाय प्रचोदितेन (रघूणाम् अन्वयः वक्ष्यते)।

**विशेषालोचना** - श्लोकानां कश्चन विभागः वर्तते। यदि एकेन एव श्लोकेन वाक्यस्य समाप्तिः भवति तर्हि तत् मुक्तकम् इति उच्यते। यदि द्वयोः श्लोकयोः मध्ये परस्परं सम्बन्धः वर्तते तर्हि तत् युग्मकम् इति कथ्यते। यदि त्रयाणां श्लोकानां मध्ये सम्बन्धः अस्ति तर्हि तत् सान्दानतिकम् इत्युच्यते। यदि चतुर्णां श्लोकानां मध्ये सम्बन्धः अस्ति तर्हि तत् विशेषकम् इत्युच्यते। ततः अधिकानां श्लोकानां मध्ये सम्बन्धः अस्ति चेत् तत् कुलकम् इत्युच्यते। अत्रापि सोहमाजन्म इत्यादिश्लोकात् रघूणामन्वयं वक्ष्ये इति श्लोकपर्यन्तं पञ्चानां श्लोकानां मध्ये सम्बन्धः अस्ति। अतः अत्र कुलकं वर्तते इति वक्तुं शक्यते।

## पाठगतप्रश्नाः -९

४७. कविः कथं रघुवंशकाव्यलेखने प्रवृत्तः।

४८. तनुवाग्विभवः इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

४९. अत्र कुलकलक्षणं कथम् अन्वेति - दर्शयत।

५०. चत्वारः श्लोकाः परस्परं सम्बद्धाः चेत् किम् उच्यते

१) कुलकम् २) सान्दानातिकम् ३) मुक्तकम् ४) विशेषकम्

५१. वक्ष्ये इत्यत्र कः धातुः-

१) वद् २) वच् ३) ब्रू ४) व्रज्

## ४.११) इदानीं मूलपाठम् अवगच्छाम -

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**

**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।।१०।।**

**अन्वयः** - तं सदसद्व्यक्तिहेतवः सन्तः श्रोतुम् अर्हन्ति, हि हेम्नः विशुद्धः श्यामिका अपि वा अग्नौ संलक्ष्यते।

**अन्वयार्थः** - तं रघुवंशनामकं प्रबन्धं सदसद्व्यक्तिहेतवः गुणदोषविभागकर्तारः सन्तः विद्वांसः श्रोतुम् आकर्णयितुम् अर्हन्ति योग्या भवन्ति हि यतो हि हेम्नः सुवर्णस्य विशुद्धिः निर्दोषरूपं श्यामिकापि वा लोहान्तरसंसर्गात्मकः दोषः अपि वा अग्नौ वह्नौ संलक्ष्यते संदृश्यते।।

**सरलार्थः** - रघुवंशप्रबन्धं प्राज्ञाः एव श्रोतुम् अर्हन्ति। यतो हि ते एव काव्यस्य गुणं दोषं च सम्यक् अवगच्छन्ति। सुवर्णस्य विशुद्धिः दोषः वा अग्नौ एव सम्यक् परिलक्ष्यते।

**तात्पर्यार्थः** - अस्मिन् श्लोके कालिदासः रघुवंशकाव्यस्य अधिकारिविषये आलोचयति। सर्वे रघुवंशकाव्यं पठितुं नार्हन्ति। प्राज्ञाः अर्थात् सम्यक् गुणदोषविवेचकाः एव अस्य अधिकारिणः भवन्ति। ये गुणदोषयोः विवेचनां कर्तुं न जानन्ति ते दोषस्थाने गुणग्रहणं किञ्च गुणस्थाने दोषग्रहणं च कुर्वन्ति। तेन ते काव्यस्य यथायुक्तम् अर्थं प्राप्तुं न शक्नुवन्ति। किन्तु प्राज्ञाः गुणान् दोषान् च सम्यक् अवगम्य यथार्थं गृह्णन्ति। अत्र कविः एकं दृष्टान्तम् अपि प्रयच्छति। सुवर्णस्य विशुद्धिः दोषः वा सामान्यतया न अवगम्यते। किन्तु यदि तत् सुवर्णम् अग्नौ स्थाप्यते तदा तस्य गुणः दोषः वा परिलक्ष्यते। यथा अग्निः निष्पक्षपातेन सुवर्णस्य गुणं दोषं च प्रकाशयति तथा प्राज्ञाः अपि काव्यस्य गुणान् दोषान् च द्योतयन्ति। अस्मिन् श्लोके कविः स्वकाव्यस्य गुणदोषपरीक्षां प्राज्ञाः कर्तुं शक्नुवन्ति इति वदति। तेन स प्राज्ञैः उक्तस्य दोषस्य ग्रहणमपि करिष्यति इति ज्ञायते। एतेन कालिदासस्य एकः महागुणः सूचितः भवति।

**व्याकरणविमर्शः -**

- सदसद्व्यक्तिहेतवः - सच्च असच्च सदसती इति इतरेतरद्वन्द्वसमासः। सदसतोः व्यक्तिः सदसद्व्यक्तिः इति षष्ठीतत्पुरुषसमासः। सदसद्व्यक्तेः हेतवः सदसद्व्यक्तिहेतवः इति षष्ठीसमासः।
- श्रोतुम् - श्रुधातोः तुमुन्प्रत्यते श्रोतुम् इति रूपम्।
- अर्हन्ति - अर्ह्-धातोः लटि प्रथमपुरुषबहुवचने अर्हन्ति इति रूपम्।
- विशुद्धिः - विपूर्वकात् शुध्-धातोः क्तिन्प्रत्यये विशुद्धिशब्दः निष्पद्यते।
- संलक्ष्यते - सम्-पूर्वकात् लक्ष्-धातोः कर्मणि लटि प्रथमपुरुषैकवचने संलक्ष्यते इति रूपम्।

**सन्धिकार्यम् -**

- श्रोतुमर्हन्ति - श्रोतुम्+अर्हन्ति
- ह्यग्नौ - हि+अग्नौ
- श्यामिकापि - श्यामिका+अपि
- **अव्ययपरिचयः** - अस्मिन् श्लोके हि अपि वा इति त्रीणि अव्ययपदानि।
- **प्रयोगपरिवर्तनम्** - सदसद्व्यक्तिहेतुभिः सद्भिः स श्रोतुम् अर्ह्यते। हि हेम्नः विशुद्धिं श्यामिकाम् अपि वा अग्नौ संलक्षयन्ति।

**अलंकारालोचना** - यथा अग्निः सुवर्णस्य गुणं दोषं च सम्यक् प्रकाशयति तथैव प्राज्ञाः अपि काव्यस्य गुणं दोषं च प्रकाशयति। अत्र प्राज्ञाः अग्निना उपमिताः। उपमानवाचकशब्दः यथा। अतः अत्र उपमालंकारः अस्ति।

## पाठगतप्रश्नाः -१०

५२. रघुवंशकाव्यपठने कः अधिकारी।

५३. अत्र प्राज्ञाः केन उपमिताः।

५४. सदसद्व्यक्तिहेतवः इत्यत्र समासनाम विग्रहवाक्यं च लिखत।

५५. श्लोके अग्निपदं किंवाचकम्-

१) उपमावाचकम् २) उपमानवाचकम् ३) उपमेयवाचकम् ४) सदृशधर्मवाचकम्

## पाठसारः

कार्यस्य निर्विघ्नं परिसमाप्तये मङ्गलम् आचरन्ति शिष्टाः। अतः महाकविः कालिदासः अपि काव्यस्य आदौ मङ्गलाचरणं करोति। अत्र सः शब्दार्थयोः स्पष्टज्ञानाय वागर्थौ इव सम्पृक्तौ जगतः पितरौ पार्वतीं परमेश्वरं च वन्दते। मङ्गलं विधाय स रघुवंशकाव्यरचनायां स्वीयम् असामर्थ्यं प्रकटयति। स मन्दमतिः अस्ति। अतः यथा लघुनौकया दुस्तरसमुद्रतरणम् असम्भवं तथा मन्दमतिना तेन अपि रघुवंशकाव्यरचना दुष्करा भवति। यथा वामनः उपरि स्थितं फलं प्राप्तुं न शक्नोति तथा कविना अपि रघुवंशकाव्यं रचयितुं न शक्यते। किन्तु व्यासवाल्मीक्यादयः पूर्वं रघुवंशीयानां चरितं वर्णितवन्तः। तस्मात् कार्यं सुकरं सञ्जातम् इति कविः स्वीकृतवान्। ततः च रघुवंशीयानां नृपाणां सामान्यतया वर्णनं कृतवान् कालिदासः। जन्मनः शुद्धाः ते फलप्राप्तिपर्यन्तं निरन्तरं कर्म सम्पादयन्ति स्म। तेषां राज्यस्य सीमा समुद्रः आसीत्। अपि च स्वर्गं प्रति तेषां गमनागमनम् आसीत्। ते शास्त्रानुसारं धर्माचरणम् अकुर्वन्। याचकेभ्यः अभीष्टं वस्तु यथायथम् अयच्छन्। तेषां शासनकाले ये अपराधं कृतवन्तः ते दण्डं प्राप्तवन्तः। यदा प्रयोजनं तदा ते कार्याय प्रबुद्धाः अपि भवन्ति स्म। ते त्यागाय धनसंग्रहं सत्यरक्षणाय

मितभाषणं कीर्तये राज्यजयं सन्तानाय च परिणयं कृतवन्तः। शैशवे तैः विद्याभ्यासः कृतः। यदा ते यौवनं सम्प्राप्ताः तदा विषयसुखम् अनुभूतवन्तः। वार्धके ते मुनिवत् जीवनं यापितवन्तः। जीवनान्ते च योगमार्गेण देहं त्यक्तवन्तः अर्थात् मोक्षं प्राप्तवन्तः। अनेन तेषां जीवनं पुरुषार्थचतुष्टयसम्वलितम् आसीत् इति स्पष्टं ज्ञायते। एवंविधानाम् एतेषां महारितानां वर्णनं कर्तुम् असमर्थः सन् अपि कविः तेषां गुणैः प्रेरितः सन् रघुवंशकाव्यं रचयति इति कविः स्वविनम्रताम् अपि प्रकटितवान्। एतत् रघुवंशकाव्यं प्राज्ञाः एव पठितुं शक्नुवन्ति। यतो हि ते एव काव्यस्य दोषं गुणं च सम्यक् गृह्णन्ति। यथा सुवर्णस्य गुणः दोषः वा अग्नौ सम्यक् परिलक्षितः भवति।

## पाठान्तप्रश्नाः -

१. रघुवंशस्य मङ्गलश्लोकं व्याख्यात।

२. कालिदासः स्वस्य असामर्थ्यं कथं प्रकटितवान्।

३. रघुवंशीयनृपाणां पुरुषार्थचतुष्टयपूर्णं जीवनं वर्णयत।

४. उपमालङ्कारविषये लघुटिप्पणीं रचयत।

५. श्लोकाः कतिविधाः भवन्ति। तेषां भेदान् वर्णयत।

६. रघुवंशीयानां कानिचन चत्वारि विशेषणानि वर्णयत।

७. रघुवंशीयाः जीवने चतुर्वर्गं कथं साधितवन्तः - विचारयत।

८. तं सन्तः इत्यादिश्लोके उपमालङ्कारस्य समन्वयं दर्शयत।

९. स्तम्भयोः लिखितान् परस्परसम्बद्धान् मेलयत।

| **स्तम्भः-क** | **स्तम्भः-ख** |
|---|---|
| १. पार्वतीपरमेश्वरौ | १. कालिदासः |
| २. रघुवंशम् | २. शैशवे |
| ३. उडुपम् | ३. वागर्थौ |
| ४. आनाकरथवर्त्मानः | ४. वार्धके |
| ५. वज्रम् | ५. सन्तः |
| ६. विद्याभ्यासः | ६. लघुनौका |
| ७. मुनिवृत्तिः | ७. सूचीविशेषः |
| ८. अधिकारी | ८. रघुवंशीयाः नृपाः |

उत्तरम् - १-३, २-१, ३-६, ४-८, ५-७, ६-२, ७-४, ८-५

## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. कविः वागर्थप्रतिप्रत्तये पार्वतीपरमेश्वरौ वन्दते।

२. पार्वतीपरमेश्वरौ वागर्थौ इव सम्पृक्तौ।

३. माता च पिता च पितरौ इति एकशेषः।

४. प्रस्तुते श्लोके उपमालङ्कारः अस्ति।

५. २

६. ३

७. ३

८. १

९. ४

१०. १

### उत्तराणि-२

११. कविः स्वमतिं लघुनौकया उपमाति। रघूणां चरितस्य उपमानं कविना सागरः इति प्रदत्तम्।

१२. मोहाद्+उडुपेन+अस्मि

१३. तरीतुम् इच्छुः इत्यर्थः।

१४. प्रस्तुते श्लोके सूर्यवंशः दुस्तरसमुद्र इव स्वमतिः लघुनौका इव इति कविः प्रयोगं कृतवान्। अतः अत्र सूर्यवंशः स्वमतिः च उपमेयवाचकं पदद्वयं भवति। दुस्तरसमुद्रः लघुनौका च उपमानवाचके द्वे पदे भवतः। लघुनौकया यथा दुस्तरसमुद्रस्य तरणम् असम्भवं तथा कवेः मत्या रघुवंशीयानां चरितवर्णनम् असम्भवम् इति सादृश्यम्। अतः अत्र उपमालङ्कारः वर्तते।

१५. ३

### उत्तराणि-३

१६. कविः आत्मानं वामनेन उपमाति।

१७. उपरि स्थितं फलं प्रांशुना लब्धुं शक्यते।

१८. इव इति अव्ययपदं सादृश्यार्थकम्।

१९. प्रांशुना लभ्यं प्रांशुलभ्यमिति तृतीयातत्पुरुषसमासः,तस्मिन् प्रांशुलभ्ये।

२०. २

### उत्तराणि-४

२१. वज्रबिद्धे रत्ने सूत्रस्य गतिः प्रतिबन्धकविहीना भवति।

२२. वज्रं नाम मणिभेदकः सूचीविशेषः।

२३. सूत्रस्य+इव+अस्ति।

२४. व्यासवाल्मीक्यादयः पूर्वसूरिणः।

२५. ३

### उत्तराणि-५

२६. नाकात् आ आनाकम् इति अव्ययीभावसमासः। रथस्य वर्त्म रथवर्त्म इति षष्ठीतत्पुरुषसमासः। आनाकं रथवर्त्म येषां ते आनाकरथवर्त्मानः इति बहुव्रीहिसमासः, तेषाम् आनाकरथवर्त्मनाम्। अस्यार्थः स्वर्गपर्यन्तं रघुवंशीयानां नृपाणां रथमार्गः आसीत् इति। अर्थात् स्वर्गं प्रत्यपि तेषां गमनागमनम् आसीत्। एवं ते इन्द्रस्य मित्राणि आसन् इति स्फुटं भवति।

२७. रघुवंशीयनृपाणां राज्यस्य सीमा समुद्रः आसीत्।

२८. सः+अहम्+आजन्मशुद्धानाम्+आफलोदयकर्मणाम्

२९. १

३०. २

### उत्तराणि-६

३१. अग्निः द्विविधः भवति- श्रौताग्निः स्मार्ताग्निः च। श्रौताग्नेः त्रयः भेदाः सन्ति- दक्षिणाग्निः आहवनीयाग्निः गार्हपत्याग्निः च। स्मार्ताग्नेः अपि द्वौ भेदौ- शम्याग्निः आवसथ्याग्निः च।

३२. अपराधम् अनतिक्रम्य यथापराधम् इति अव्ययीभावसमासः। यथापराधं दण्डः येषां ते यथापराधदण्डाः इति बहुव्रीहिसमासः,तेषां यथापराधदण्डानाम्। अस्य पदस्य अर्थः भवति - अपराधः कृतः चेत् तदपराधानुसारेण अपराधकारिभ्यः ते दण्डान् यच्छन्ति स्म। तेषां शासनकाले अपराधं कृत्वा कोपि निर्दण्डः न तिष्ठति स्म। तेन अधिकदण्ड्यानां न्यूनदण्डः न्यूनदण्ड्यानाम् अधिकदण्डः इति वैषम्यभावः नासीत्।

३३. एतानि चत्वारि विशेषणानि रघुवंशीयान् नृपान् विशिंषन्ति।

३४. ४

३५. २

३६. २

### उत्तराणि-७

३७. रघुवंशीयाः नृपाः सत्याय मितभाषिणः।

३८. मितं स्वल्पं भाषणं शीलं येषां ते मितभाषिणः, तेषां मितभाषिणाम्।

३९. रघुवंशीयाः नृपाः सन्तानलाभाय गृहस्थाश्रमं प्रविष्टवन्तः। अज्ञानिनः भार्यादिभोगाय विवाहं कुर्वन्ति। किन्तु रघुवंशीयराज्ञां सन्तानप्राप्तिः एव विवाहस्य कारणम् आसीत्।

४०. १

४१. ३

### उत्तराणि-८

४२. सूर्यवंशीयाः योगेन देहं त्यजन्ति स्म।

४३. रघुवंशीयाः शैशवे विद्याभासं कृतवन्तः।

४४. तनुं त्यजन्ति इति तनुत्यजः इति उपपदसमासः, तेषां तनुत्यजाम्।

४५. २

४६. १

### उत्तराणि-९

४७. कविः रघुवंशीयानां गुणैः प्रचोदितः रघुवंशकाव्यलेखने प्रवृत्तः।

४८. वाचां विभवः वाग्विभवः इति तत्पुरुषसमासः। तनुः वाग्विभवः यस्य सः तनुवाग्विभवः इति बहुव्रीहिसमासः।

४९. यत्र चतुर्भ्यः अधिकानां श्लोकानां मध्ये सम्बन्धः अस्ति चेत् तत् कुलकम् इत्युच्यते। अत्रापि सोहमाजन्म इत्यादिश्लोकात् रघूणामन्वयं वक्ष्ये इति श्लोकपर्यन्तं पञ्चानां श्लोकानां मध्ये सम्बन्धः अस्ति। अतः अत्र कुलकं वर्तते इति वक्तुं शक्यते।

५०. ४

५१. ३

### उत्तराणि-९

५२. सन्तः रघुवंशकाव्यपठने अधिकारिणः।

५३. अत्र प्राज्ञाः अग्निना उपमिताः।

५४. सच्च असच्च सदसती इति इतरेतरद्वन्द्वसमासः। सदसतोः व्यक्तिः सदसद्व्यक्तिः इति षष्ठीतत्पुरुषसमासः। सदसद्व्यक्तेः हेतवः सदसद्व्यक्तिहेतवः इति षष्ठीसमासः।

५५. २

॥ इति चतुर्थः पाठः ॥

५

# रघुवंशम्- राज्ञो दिलीपस्य गुणवर्णनम् - १

## प्रस्तावना

अस्मिन् पाठे वयं तदनन्तरं त्रयोदश श्लोकान् पठामः। अत्र कविः विषयकथनम् आरभते। सूर्यात् रघुवंशस्य उत्पत्तिः सञ्जाता। सूर्यवंशस्य आदिमः राजा आसीत् मनुः। तस्मिन् एव वंशे कालक्रमेण दिलीपः उत्पन्नः। दिलीपः एव रघुवंशस्य प्रथमसर्गस्य नायकः वर्तते। अस्मिन् पाठे प्रधानतया महाराजस्य दिलीपस्य देहादिवैशिष्ट्यं वर्णयति कविः।

## उद्देश्यानि -

अमुं पाठं पठित्वा भवान्-

- रघुवंशस्य उत्पत्तिं जानीयात्।
- महाराजस्य दिलीपस्य गुणावलीम् अवगच्छेत्।
- कालिदासस्य काव्यशैल्या विषये ज्ञातुं शक्नुयात्।
- अलङ्काराणां समन्वयं कर्तुं समर्थः भवेत्।
- समासं सन्धिं च बोद्धुं शक्नुयात्।
- श्लोकानाम् अन्वयादिकं कर्तुं समर्थः स्यात्।

## ५.१) मूलपाठः -

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव।।११।।**
**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव।।१२।।**
**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः।।१३।।**

सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना।।१४।।
आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भ आरम्भसदृशोदयः।।१५।।
भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः।।१६।।
रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः।।१७।।
प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।।१८।।
सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम्।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता।।१९।।
तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव।।२०।।
जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्।।२१।।
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।।२२।।
अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः।
तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना।।२३।।

## ५.२) इदानीं मूलपाठम् अवगच्छाम -

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव।।११।।

**अन्वयः** - मनीषिणां माननीयः छन्दसां प्रणवः इव महीक्षिताम् आद्यः वैवस्वतः नाम मनुः आसीत्।

**अन्वयार्थः** - मनीषिणां विदुषां माननीयः पूजनीयः छन्दसां वेदानां प्रणव इव ओङ्कार इव महीक्षितां राज्ञाम् आद्यः प्रथमः वैवस्वतो नाम वैवस्वत इति नाम्ना प्रसिद्धः मनुः प्रजापतिः आसीत् अभवत्।

**सरलार्थः** - विद्वत्पूज्यः महीपतीनाम् आदिमः वैवस्वतः नाम मनुः आसीत्। स च वेदमन्त्रेषु ओङ्कारः इव आसीत्।

**तात्पर्यार्थः** - अत्र कविः रघुवंशस्य वर्णनप्रसङ्गे सूर्यवंशस्य उत्पत्तिं वर्णयति। पुराणानुसारेण स्वयम्भुवादयः चतुर्दश मनवः आसन्। तेषु सूर्यपुत्रः वैवस्वतः मनुः सप्तमः वर्तते। तस्मात् एव सूर्यवंशस्य उत्पत्तिः सञ्जाता। श्लोकेस्मिन् तस्य एव पूजनीयतां वर्णयति कविः। वैवस्वतमनुः तथा पूजनीयः आसीत् यत् दिव्यदृष्टिसम्पन्नाः मनीषिणः अपि तं श्रद्दधति स्म। अपि च, स पृथिव्याः सर्वेषां राज्ञां मध्ये प्रथमः अपि आसीत्। अर्थात् स एव धरण्याः प्रथमः राजा। अस्य प्रतिपादनाय कविः उपमालङ्कारम् अपि समाश्रितवान् - छन्दसां प्रणवः इव। यथा ओङ्कारः वेदमन्त्रेषु आदिमः अस्ति तथैव वैवस्वतमनुः अपि महीपतीषु प्रथमः आसीत्। यथा ओङ्कारः सर्वेषां पूजनीयः अस्ति तथा सः अपि सर्वेषां माननीयः आसीत् इति अस्य श्लोकस्य आशयः।

**व्याकरणविमर्शः -**

- माननीयः - मानितुं योग्यः इत्यर्थे मानधातोः अनीयर्-प्रत्यये माननीयः इति रूपम्।
- मनीषिणाम् - मनस ईषिणः मनीषिणः।मनीषिन्-शब्दस्य षष्ठीबहुवचने मनीषिणाम् इति रूपम्।
- आसीत् - अस्-धातोः लङि प्रथमपुरुषैकवचने आसीत् इति रूपम्।
- महीक्षिताम् - महीं क्षियन्ति इति महीक्षितः, तेषां महीक्षिताम्। एतत् षष्ठीबहुवचनान्तं रूपम्।
- वैवस्वतः - विवस्वतः अपत्यं वैवस्वतः। विवस्वान् नाम सूर्यः। तस्य पुत्रः वैवस्वतः।

**सन्धिकार्यम्** -

- वैवस्वतो मनुर्नाम – वैवस्वतः+मनुः+नाम
- माननीयो मनीषिणाम् - माननीयः+मनीषिणाम्
- आसीन्महीक्षितामाद्यः - आसीत्+महीक्षिताम्+आद्यः
- प्रणवश्छन्दसामिव- प्रणवः+छन्दसाम्+इव
- **प्रयोगपरिवर्तनम्** - मनीषिणां माननीयेन छन्दसां प्रणवेन इव महीक्षिताम् आद्येन वैवस्वतेन नाम मनुना अभूयत।

**अलङ्कारालोचना** - अस्मिन् श्लोके उपमालङ्कारः विद्यते। अत्र महीक्षितां वैवस्वतः इति पदद्वयम् उपमेयवाचकम्। छन्दसां प्रणवः इति पदद्वयम् उपमानवाचकम्। इव इति उपमावाचकः शब्दः। अत्र महीक्षितः छन्दोभिः उपमीयते। अपि च वैवस्वतः प्रणवेन उपमीयते। अतः अत्र उपमालङ्कारः अस्ति।



## पाठगतप्रश्नाः -१

१. मनुः केन उपमितः। महीक्षितः केन उपमिताः।

२. लोके राज्ञाम् आदिमः कः।

३. वैवस्वतः इत्यस्य अर्थः कः।

४. कति मनवः आसन्-

१) द्वादश २) त्रयोदश ३) चतुर्दश ४) पञ्चदश

५. वैवस्वतः कतमः मनुः-

१) षष्ठः २) सप्तमः ३) दशमः ४) चतुर्थः

६. रघुवंशः कस्मात् उत्पन्नः

१) सूर्यात् २) चन्द्रात् ३) बुधात् ४) कुरोः

## ५.३) इदानीं मूलपाठम् अवगच्छाम -

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।**

**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव।।१२।।**

**अन्वयः** - शुद्धिमति तदन्वये शुद्धिमत्तरः दिलीप इति राजेन्दुः क्षीरनिधौ इन्दुः इव प्रसूतः।

**अन्वयार्थः** - शुद्धिमति पवित्रतासम्पन्ने तदन्वये मनुवंशे शुद्धिमत्तरः पवित्रतरः दिलीप इति दिलीपनाम्ना प्रसिद्धः राजेन्दुः भूपचन्द्रः क्षीरनिधौ क्षीरसमुद्रे इन्दुः इव चन्द्र इव प्रसूतः जातः।

**सरलार्थः** - क्षीरसमुद्रे चन्द्रः यथा जन्म लब्धवान् तथा मनोः पवित्रे वंशे दिलीपनामकः पवित्रतरः राजचन्द्रः जन्म लब्धवान्।

**तात्पर्यार्थः** - अस्मिन् श्लोके कविः रघुवंशस्य वर्णनप्रसङ्गे रघुमहाराजस्य पितुः विषये कथयति। तस्य नाम आसीत् दिलीपः। अत्र स इन्दुना उपमितः। इन्दुः नाम चन्द्रः। यथा समुद्रमन्थनकाले क्षीरसागरे इन्दुः उत्पन्नः तथैव पवित्रे मनुवंशे पवित्रतरः दिलीपः उत्पन्नः इति अभिप्रायः। किञ्च चन्द्रः यथा जनानां मनसि आह्लादं जनयति तथा दिलीपः अपि प्रजानां सुखदायकः आसीत्। तस्मात् दिलीपः राजेन्दुः अर्थात् राजश्रेष्ठः इत्यपि कथितं कविना। मनुवंशः नाम सूर्यवंशः। स तु प्रकृत्या एव पुनानः वर्तते। अपि च पुत्रोत्पादनात् पूर्वं परं च शास्त्रेण उक्ताः गर्भाधानादिसंस्काराः तैः सम्यक् परिपालिताः। अतः एव तेषां पवित्रे वंशे पवित्रतरः दिलीपः जन्म लब्धवान् इति कवेः आकूतम्।

**व्याकरणविमर्शः** -

- तदन्वये – तस्य अन्वयः तदन्वयः इति षष्ठीतत्पुरुषसमासः, तस्मिन् तदन्वये। एतत्

सप्तम्येकवचनान्तं पदम्।

- शुद्धिमति - प्रशस्ता शुद्धिः अस्मिन् स शुद्धिमान्, तस्मिन् शुद्धिमति। एतदपि सप्तम्येकवचनान्तं पदम्।
- प्रसूतः - प्रपूर्वकात् सूधातोः क्तप्रत्यये प्रसूत इति रूपं सिध्यति।
- शुद्धिमत्तरः - अतिशयेन शुद्धिमान् शुद्धिमत्तरः भवति। अत्र शुद्धिमत्-शब्दात् तरप्प्रत्ययः अस्ति।
- राजेन्दुः - राजा इन्दुः इव इति विग्रहे राजेन्दुः इति भवति। अत्र उपमेयपदपूर्वककर्मधारयसमासः अस्ति।
- क्षीरनिधौ - क्षीराणां निधिः क्षीरनिधिः इति षष्ठीतत्पुरुषसमासः, तस्मिन् क्षीरनिधौ।

**सन्धिकार्यम्** -

- दिलीप इति - दिलीपः+इति
- राजेन्दुरिन्दुः - राजेन्दुः+इन्दुः
- क्षीरनिधाविव - क्षीरनिधौ+इव
- **प्रयोगपरिवर्तनम्** - शुद्धिमति तदन्वये शुद्धिमत्तरेण दिलीपेन इति राजेन्दुना क्षीरनिधौ इन्दुना इव प्रसूतम्।

**अलङ्कारालोचना** - अस्मिन् श्लोके तदन्वये अर्थात् मनुवंशे अपि च दिलीपः इति पदद्वयम् उपमेयवाचकम्। क्षीरनिधौ इन्दुः इति च द्वे पदे उपमानवाचके। इव इति उपमावाचकः शब्दः। अत्र तदन्वयः क्षीरनिधिना उपमीयते। दिलीपः च क्षीरनिधौ उत्पन्नेन इन्दुना उपमीयते। यथा क्षीरनिधौ चन्द्रः उत्पन्नः तथा मनुवंशे दिलीपः उत्पन्नः इति सादृश्यम्। अतः अत्र उपमालङ्कारः अस्ति।

## पाठगतप्रश्नाः -२

७. अस्मिन् श्लोके दिलीपः केन उपमितः। मनुवंशः च केन उपमितः।

८. अत्र उपमालङ्कारं साधयत।

९. राजेन्दुः इति समासनाम विग्रहवाक्यं च लिखत।

१०. दिलीपः किम् इव प्रसूतः-

१) सूर्यः २) चन्द्रः ३) क्षीरनिधिः ४) बुधः

११. चन्द्रः कुत्र प्रसूतः-

१) वीरनिधौ २) तीरनिधौ ३) क्षीरनिधौ४) नीरनिधौ

## ५.४) इदानीं मूलपाठम् अवगच्छाम -

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।**

**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः।।१३।।**

**अन्वयः** - व्यूढोरस्कः वृषस्कन्धः शालप्रांशुः महाभुजः आत्मकर्मक्षमं देहम् आश्रितः क्षात्रः धर्मः इव (स्थितः)।

**अन्वयार्थः** - व्यूढोरस्कः विपुलवक्षाः वृषस्कन्धः वृषभांसः शालप्रांशुः वृक्षोन्नतः महाभुजः दीर्घबाहुः आत्मकर्मक्षमं स्वकार्यसमर्थं देहं शरीरम् आश्रितः प्राप्तः क्षात्रः क्षत्रियसम्बन्धी धर्मः गुणः इव स्थितः।

**सरलार्थः** - दिलीपस्य विशालं वक्षःस्थलं, वृषभस्कन्ध इव स्कन्धः दीर्घौ बाहू च आसन्। अपि च, स शालवृक्षः इव उन्नतः आसीत्। एवं स्वकार्यकरणे समर्थं देहं प्राप्तः स क्षात्रधर्म इव आसीत्।

**तात्पर्यार्थः** - अस्मिन् श्लोके कालिदासः रघुपितरं दिलीपं वर्णयति। दिलीपस्य वक्षःस्थलं विशालाकारम् आसीत्। वृषस्य स्कन्धवत् बलीयान् स्कन्धः तस्य आसीत्। वृक्षेषु शालवृक्षः अतीव उन्नतः भवति। दिलीपः अपि तथा उन्नतः आसीत्। तस्य भुजद्वयम् अपि दीर्घम् आसीत्। एवं तस्य शरीरं बहु बलिष्ठम् आसीत् इति ज्ञायते। दिलीपम् अवलोक्य मन्यते स्म, यत् क्षात्रः धर्मः स्वकार्यं सम्पादयितुम् एकं समर्थं देहं समाश्रितवान्। अत्र स्वकार्यं नाम विपन्नजनानां त्राणादिकं भवति। क्षात्रः इति एकः वीरोचितः क्षत्रियसम्बन्धी धर्मः। स एव शरीरं गृहीत्वा दिलीपरूपेण स्थितः इति कवेः अभिप्रायः। अर्थात् पराक्रमः एव मूर्तिमान् भूत्वा स्थितः इति अर्थः। अस्मिन् श्लोके कविः क्षात्रः धर्मः आत्मकर्मक्षमं दिलीपदेहम् आश्रितवान् इति उत्प्रेक्षते। अतः अस्मिन् श्लोके उत्प्रेक्षालङ्कारः विद्यते।

### व्याकरणविमर्शः -

- व्यूढोरस्कः - व्यूढम् उरः यस्य स व्यूढोरस्कः इति बहुव्रीहिसमासः।
- वृषस्कन्धः - वृषस्य इव स्कन्धः वृषस्कन्धः इति व्यधिकरणबहुव्रीहिसमासः।
- शालप्रांशुः - शाल इव प्रांशुः शालप्रांशुः इति उपमानपदपूर्वककर्मधारयसमासः।
- महाभुजः - महान्तौ भुजौ यस्य सः महाभुजः इति बहुव्रीहिसमासः।
- आत्मकर्मक्षमम् - आत्मनः कर्म आत्मकर्म इति षष्ठीतत्पुरुषसमासः। आत्मकर्मणि क्षमः आत्मकर्मक्षमः इति सप्तमीतत्पुरुषसमासः, तम् आत्मकर्मक्षमम्। एतत् द्वितीयैकवचनान्तं पदम्।
- आश्रितः - आङ्पूर्वकात् श्रिधातोः क्तप्रत्यये कृते आश्रितः इति रूपं सिध्यति।

### सन्धिकार्यम् -

- व्यूढोरस्को वृषस्कन्धः - व्यूढोरस्कः+वृषस्कन्धः
- शालप्रांशुर्महाभुजः - शालप्रांशुः+महाभुजः
- क्षात्रो धर्म इवाश्रितः - क्षात्रः+धर्मः+इव+आश्रितः

- **प्रयोगपरिवर्तनम्** - व्यूढोरस्केन वृषस्कन्धेन शालप्रांशुना महाभुजेन आत्मकर्मक्षमं देहम् आश्रितेन क्षात्रेण धर्मेण इव (स्थितम्)।

**अलङ्कारालोचना** - अस्मिन् श्लोके उत्प्रेक्षालङ्कारः विद्यते। अत्र महाराजं दिलीपं मूर्तिमान् क्षात्रधर्मरूपेण उत्प्रेक्षितवान् कविः। यतो हि महाराजः दिलीपः स्वगुणैः क्षात्रः धर्मः इव प्रतीयते स्म। अत्र उत्प्रेक्षालङ्कारः अस्ति।

## पाठगतप्रश्नाः -३

१२. दिलीपस्य स्कन्ध कस्य स्कन्धवत् आसीत्।

१३. शालप्रांशुः इत्यत्र कः समासः। विग्रहवाक्यं च किम्।

## ५.५) इदानीं मूलपाठम् अवगच्छाम -

**सर्वातिरिक्तसारेण सर्वतेजोभिभाविना।**
**स्थितः सर्वोन्नोतेनोर्वीं क्रान्त्वा मेरुरिवात्मना।।१४।।**

**अन्वयः** - सर्वातिरिक्तसारेण सर्वतेजोभिभाविना सर्वोन्नतेन आत्मना मेरुः इव उर्वीं क्रान्त्वा स्थितः।

**अन्वयार्थः** - सर्वातिरिक्तसारेण सकलभूतेभ्यः अधिकबलेन सर्वतेजोभिभाविना सर्वभूतानि तेजसा तिरस्कारिणा सर्वोन्नतेन सर्वेभ्य उन्नतेन आत्मना शरीरेण मेरुः इव सुमेरुपर्वतः इव उर्वीं पृथ्वीं क्रान्त्वा आक्रम्य स्थितः अविद्यत।

**सरलार्थः** - दिलीपः सर्वापेक्षया अधिकबलशाली आसीत्। स सर्वभूतानि स्वतेजसा तिरस्कृतवान्। तस्य शरीरम् अपि बहु उन्नतम् आसीत्। अतः स सम्पूर्णां पृथिवीम् अतिक्रान्तवान्। यथा सुमेरुपर्वतः पृथिवीम् अतिक्रान्तवान् इति अस्य श्लोकस्य सरलार्थः।

**तात्पर्यार्थः** - अस्मिन् श्लोके कविः महाराजं दिलीपं सुमेरुनामकेन पर्वतेन सह उपमितवान्। अत्र सर्वातिरिक्तसारत्वं सर्वतेजोऽभिभावित्वं सर्वोन्नतत्वम् इत्यादयः दिलीपस्य ये गुणाः उक्ताः ते गुणाः सुमेरुपर्वतस्य अपि सन्ति। यथा सुमेरुपर्वतः स्तम्भवत् समग्रां पृथिवीं रक्षति तथा दिलीपः अपि आत्मबलेन समग्रां पृथिवीं रक्षति। सुमेरुपर्वतः अतीव उन्नतः इति पुराणादिषु अपि प्रसिद्धम् अस्ति। महाराजः दिलीपः अपि तथा उन्नतः आसीत्। स उन्नतचरित्रशाली आसीत् इति आशयः। अपि च, स महान् तेजस्वी आसीत्। अतः स आत्मतेजसा अन्यान् सर्वान् अपि नृपान् पराजितवान्। एवं सकलेभ्यः

अधिकबलशाली सर्वभूतानि तेजसा तिरस्कारी सर्वोन्नतः स पृथिवीम् अतिक्रम्य स्थितवान्। यथा सुमेरुपर्वतः पृथिवीम् आक्रम्य तिष्ठति।

**व्याकरणविमर्शः -**

- सर्वातिरिक्तसारेण - अतिरिक्तः सारः यस्य सः अतिरिक्तसारः इति बहुव्रीहिसमासः। सर्वेभ्यः अतिरिक्तसारः सर्वातिरिक्तसारः इति पञ्चमीतत्पुरुषसमासः, तेन सर्वातिरिक्तसारेण। इदं तृतीयैकवचनान्तं पदम्।
- सर्वतेजोऽभिभाविना - तेजसा अभिभवति इति तेजोभिभावी। सर्वेषां तेजोऽभिभावी सर्वतेजोऽभिभावी इति षष्ठीतत्पुरुषसमासः, तेन सर्वतेजोऽभिभाविना। तृतीयैकवचनान्तम् एतत् पदम्।
- सर्वोन्नतेन - सर्वेभ्यः उन्नतः सर्वोन्नतः इति पञ्चमीतत्पुरुषसमासः, तेन सर्वोन्नतेन।
- क्रान्त्वा - क्रम्-धातोः क्त्वाप्रत्यये क्रान्त्वा इति रूपं निष्पद्यते। अस्य अव्ययपदवत् प्रयोगः भवति।

**सन्धिकार्यम्** -

- सर्वोन्नतेनोर्वीम् - सर्वोन्नतेन+उर्वीम्
- मेरुरिवात्मना - मेरुः+इव+आत्मना
- **अव्ययपरिचयः** - अत्र इव इति अव्ययपदं वर्तते।
- **प्रयोगपरिवर्तनम्** - सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेन आत्मना मेरुणा इव उर्वीं क्रान्त्वा स्थितम्।

**अलङ्कारालोचना** - अत्र महाराजः दिलीपः सुमेरुपर्वतेन उपमीयते। अतः दिलीपः उपमेयः मेरुः च उपमानम्। इव इति उपमावाचकः शब्दः। अत्र ये गुणाः प्रोक्ताः ते गुणाः दिलीपे अपि आसन् सुमेरुपर्वते अपि आसन् इति सादृश्यम्। अतः अस्मिन् श्लोके उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -४

१४. अत्र दिलीपं केन पर्वतेन सह उपमितवान् कविः।

१५. सर्वातिरिक्तसारः इत्यत्र समासनाम विग्रहवाक्यं च लिखत।

१६. सुमेरुपर्वतः किम् आक्रम्य स्थितः।

## ५.६) इदानीं मूलपाठम् अवगच्छाम -

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।**

**आगमैः सदृशारम्भ आरम्भसदृशोदयः।।१५।।**

**अन्वयः** - आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः आगमैः सदृशारम्भः आरम्भसदृशोदयः (आसीत्)।

**अन्वयार्थः** - (सः) आकारसदृशप्रज्ञः मुर्तितुल्यबुद्धिः प्रज्ञया बुद्ध्या सदृशागमः समानशास्त्रपरिश्रमः आगमैः शास्त्रैः सदृशारम्भः तुल्यकर्मा आरम्भसदृशोदयः कर्मसदृशफलसिद्धिश्च (आसीत्)।

**सरलार्थः** - दिलीपस्य प्रज्ञा तस्य देहाकृतिसदृशी आसीत्। तस्य शास्त्रज्ञानं प्रज्ञानुरूपम् आसीत्। शास्त्राज्ञानानुसारम् एव स कर्मानुष्ठानम् अकरोत्। किञ्च, स यथा कर्माणि अनुष्ठितवान् तथा एव फलं लब्धवान्।

**तात्पर्यार्थः** - लोके देहवैशिष्ट्यम् अवलोक्य मनुष्याणां गुणाः प्रायः अनुमीयन्ते। दिलीपस्य शरीरं कथम् आसीत् इति प्राक्तनैः श्लोकैः वर्णितवान् कविः। तस्य शरीरं यथा सुन्दरम् आसीत् तथा तस्य प्रज्ञा अपि अपरिमेया आसीत्। एतादृशप्रज्ञाकारणात् स वेदादिशास्त्राणि सम्यक् अधीतवान् गृहीतवान् च। किन्तु केवलं शास्त्रपठनेन सर्वं न सिध्यति। अपि तु शास्त्रोक्तविधयः जीवने आचरणीया भवन्ति। अतः दिलीपः शास्त्राविहितानि कर्माणि स्वजीवने यथार्थम् आचरितवान्। यथा कर्माणि आचरितवान् तथा कर्मफलम् अपि लब्धवान्। एवं दिलीपः न केवलं शास्त्राणि अपठत्। अपि च शास्त्रं पठित्वा तानि शास्त्रोक्तवचनानि जीवने यथायथं प्रयुज्य तत्सदृशं फलम् अपि प्राप्तवान् इति अस्य श्लोकस्य आशयः।

**व्याकरणविमर्शः -**

- आकारसदृशप्रज्ञः - सदृशी प्रज्ञा यस्य सः सदृशप्रज्ञः इति बहुव्रीहिसमासः। आकारेण सदृशप्रज्ञः आकारसदृशप्रज्ञः इति तृतीयातत्पुरुषसमासः।
- सदृशागमः - सदृशः आगमः यस्य सः सदृशागमः इति बहुव्रीहिसमासः।
- सदृशारम्भः - सदृशः आरम्भः यस्य सः सदृशारम्भः इति बहुव्रीहिसमासः।
- आरम्भसदृशोदयः - सदृशः उदयः यस्य सः सदृशोदयः इति बहुव्रीहिसमासः। आरम्भेण सदृशोदयः आरम्भसदृशोदयः इति तृतीयातत्पुरुषसमासः।
- **प्रयोगपरिवर्तनम्** - (तेन) आकारसदृशप्रज्ञेन प्रज्ञया सदृशागमेन आगमैः सदृशारम्भेण आरम्भसदृशोदयेन (अभूयत)।

## पाठगतप्रश्नाः -५

१७. आगमशब्दस्य आरम्भशब्दस्य च कः अर्थः।

१८. दिलीपस्य प्रज्ञा कीदृशी आसीत्।

१९. आकारसदृशप्रज्ञः इत्यत्र समासनाम विग्रहवाक्यं च लिखत।

२०. सदृशारम्भः इत्यस्य किं विग्रहवाक्यम्-

१) सदृशस्य आरम्भ २) सदृशः आरम्भः ३) सदृशः आरम्भः यस्य ४) सदृशः च आरम्भः च

## ५.७) इदानीं मूलपाठम् अवगच्छाम -

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।**
**अधृष्यश्चाधिगम्यश्च यादोरत्नैरिवार्णवः।।१६।।**

**अन्वयः** - भीमकान्तैः नृपगुणैः स उपजीविनाम् यादोरत्नैः अर्णव इव अधृष्यः अभिगम्यश्च बभूव।

**अन्वयार्थः** - भीमकान्तैः भयङ्करमनोहरैः नृपगुणैः राजगुणैः स दिलीपः उपजीविनाम् आश्रितानां यादोरत्नैः जलजीवमणिभिः अर्णव इव समुद्र इव अधृष्यः अनभिगम्यः अभिगम्यः आश्रयणीयः च बभूव भवति स्म।

**सरलार्थः** - दिलीपस्य शौर्यादयः भयङ्करगुणाः आसन्। अतः स आश्रितानाम् सचिवभृत्यादीनाम् अनभिगम्यः आसीत्। किञ्च, औदार्यं प्रजावात्सल्यम् इत्यादयः मनोज्ञगुणाः अपि तस्य आसन्। अतः स उपजीविभिः सेवनीयः अपि आसीत्। यथा समुद्रः गम्भीरतरङ्गमकरादिभिः भीषणः अस्ति। किन्तु रत्नैः सेवनीयः अपि अस्ति।

**तात्पर्यार्थः** - दिलीपस्य प्रतापादयः तीक्ष्णगुणाः आसन्। अतः उपजीविनः तस्मात् बिभ्यन्ति स्म। किन्तु स औदार्यादिभिः मनोहरैः गुणैः अपि युक्तः आसीत्। अतः आश्रयिणः तं सेवन्ते स्म। वस्तुतः प्रभुणा एवमेव भवितव्यम्। प्रभुः प्रतापादितीक्ष्णगुणरहितः चेत् प्रजाः तस्य आदेशं न पालयन्ति। तेन राज्यस्य हानिः सम्भवति। किञ्च राजनि एकः अपि मनोज्ञगुणः न तिष्ठति, यदि राजा सम्पूर्णतया भीषणः भवति तर्हि प्रजाः क्रुद्धाः भवन्ति। क्रमेण गूढतया राज्ञः हानिम् एव जनयति। एवम् उभयत्र राज्ञः तथा राज्यस्य हानिः एव सम्भवति। अतः प्रभौ भीषणगुणाः मनोज्ञगुणाः इति उभयविधाः एव गुणाः अपेक्षिताः वर्तन्ते। दिलीपे तु उभौ एव गुणौ आस्ताम्। तेन तस्य सचिवादयः उपजीविनः भीत्या कर्तव्यं निर्वहन्ति स्म। अपि च प्रीत्या अभीष्टम् अर्थं प्राप्नुवन्ति स्म। अत्र एकः दृष्टान्तः अपि प्रदत्तः। यथा समुद्रः तस्य भीषणतरङ्गैः मकरादिभिः पशुभिः च भयङ्करः दृश्यते। पुनः समुद्रे रत्नानि अपि प्राप्नुवन्ति जनाः। तैः च रत्नैः स जनानां मनःसु आह्लादम् अपि जनयति। एवं यथा समुद्रः भयङ्करः मनोहरः इति उभयथा प्रतीयते तथा दिलीपे भयङ्करगुणानां मनोज्ञगुणानां च मिश्रणम् आसीत् इति वक्तुं शक्यते।

**व्याकरणविमर्शः -**

- भीमकान्तैः - भीमाः च कान्ताः भीमकान्ताः इति कर्मधारयसमासः, तैः भीमकान्तैः। तृतीयाबहुवचनान्तं पदम् इदम्।

- नृपगुणैः - नृपस्य गुणाः नृपगुणाः इति षष्ठीतत्पुरुषसमासः, तैः नृपगुणैः।
- उपजीविनाम् - उपजीवन्ति इति उपजीविनः, तेषाम् उपजीविनाम्। षष्ठीबहुवचनान्तं रूपम् इदम्।
- अधृष्यः - न धृष्यः अधृष्यः इति नञ्तत्पुरुषसमासः।
- अभिगम्यः - अभिपूर्वकात् गम्-धातोः यत्प्रत्यये कृते अभिगम्यः इति रूपम्। अभिगन्तुं योग्यः इत्यर्थः।
- यादोरत्नैः - यादांसि च रत्नानि च यादोरत्नानि इति इतरेतरद्वन्द्वसमासः, तैः यादोरत्नैः।
- बभूव - भूधातोः लिट्-लकारे प्रथमपुरुषैकवचने बभूव इति रूपम्।

**सन्धिकार्यम् -**

- भीमकान्तैर्नृपगुणैः - भीमकान्तैः+नृपगुणैः
- बभूवोपजीविनाम् - बभूव+उपजीविनाम्
- अधृष्यश्चाधिगम्यश्च - अधृष्यः+च+अधिगम्यः+च
- यादोरत्नैरिवार्णवः - यादोरत्नैः+इव+अर्णवः
- **प्रयोगपरिवर्तनम्** - भीमकान्तैः नृपगुणैः तेन उपजीविनां यादोरत्नैः अर्णवेन इव अधृष्येण अभिगम्येन बभूवे।

**अलङ्कारालोचना** - अत्र दिलीपस्य वर्णनाय समुद्रदृष्टान्तः प्रदत्तः कविना। यथा समुद्रः मकरादिभिः भीषणः रत्नैः च मनोरमः आसीत् तथा दिलीपः अपि शौर्यादिभिः तीक्ष्णगुणैः भीषणः प्रजावात्सल्यादिभिः मनोहरैः गुणैः मनोरमः आसीत्। अत्र दृष्टान्तालङ्कारः अस्ति।

### पाठगतप्रश्नाः -६

२१. दिलीपः कथम् उपजीविनाम् अधृष्यः अभिगम्यः च बभूव।
२२. प्रकृते श्लोके कः अलङ्कारः अस्ति।
२३. अधृष्यश्चाधिगम्यश्च इत्यत्र सन्धिविच्छेदं कुरुत।

## ५.८) इदानीं मूलपाठम् अवगच्छाम -

**रेखामात्रमपि क्षुण्णादमनोर्वर्त्मनः परम्।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः।।१७।।**

**अन्वयः** - नियन्तुः तस्य नेमिवृत्तयः प्रजाः आमनोः क्षुण्णात् वर्त्मनः परं रेखामात्रम् अपि न व्यतीयुः।

**अन्वयार्थः** - नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य नेमिवृत्तयः चक्रधाराव्यापाराः प्रजाः जनाः आमनोः मनुम् आरभ्य क्षुण्णात् अभ्यस्तात् प्रचलितात् च वर्त्मनः आचारपद्धतेः मार्गात् च परम् अधिकं रेखामात्रम् अपि रेखाप्रमाणम् अपि न व्यतीयुः न अतिक्रान्तवत्यः।

**सरलार्थः** - निपुणः सारथिः यं रथं चालयति तस्य रथस्य चक्रं पूर्ववर्तिना चक्रेण कृतां रेखां न अतिक्रामति। एवं दिलीपस्य प्रजाः अपि मनोः कालात् आरब्धान् आचारान् न उल्लङ्घितवन्तः।

**तात्पर्यार्थः** - अस्मिन् पद्ये कविः राज्यपरिचालनायां दिलीपस्य निपुणत्वं कथयति। दिलीपः वैवस्वतमनोः वंशे जातः। अतः स मनोः वचनं श्रद्धया पालितवान्। किञ्च तदनुसारेण एव राज्यशासनं कृतवान्। मनुः सत्ययुगे मनुस्मृतिम् अलिखत्। दिलीपः तु त्रेतायाम् आसीत्। एवम् उभयोः कालयोः मध्ये महान् भेदः आसीत्। तथापि राजा दिलीपः तथा तस्य प्रजाः मनुना दर्शितं मार्गम् यथायथम् अनुसृत्य एव अजीवन्। सर्वे एव सारथिनः रथं चालयन्ति। किन्तु निपुणः सारथिः रथं चालयति चेत् रथस्य पूर्वेण चक्रेण कृतां रेखाम् अन्तिमं चक्रम् अनुकरोति। कञ्चित् अपि व्यतिक्रमं न करोति। सर्वे सारथयः तथा कर्तुं न पारयन्ति। दिलीपः अपि राज्यशासने निपुणः आसीत्। अतः स स्वस्य राज्यं सम्यक् शासितवान्। तेन तस्य प्रजाः मनुवचनं किञ्चिदपि न उल्लङ्घितवन्तः।

**व्याकरणविमर्शः -**

- रेखामात्रम् - रेखा प्रमाणम् यस्य इति अर्थे रेखामात्रम् इति रूपं भवति।
- क्षुण्णात् - क्षुद्-धातोः क्तप्रत्यये क्षुण्णः इति रूपं, तस्मात् क्षुण्णात्। एतत् पञ्चम्येकवचनान्तं पदम्।
- आमनोः - आङ्पूर्वकात् मनुशब्दात् पञ्चमीविभक्तौ आमनोः इति रूपं सिध्यति। मनुम् आरभ्य इत्यर्थः।
- वर्त्मनः - वर्त्मन्-शब्दस्य पञ्चमीविभक्त्यैकवचने वर्त्मनः इति रूपम्। वर्त्म नाम मार्गः।
- व्यतीयुः - वि-पूर्वकात् अति-पूर्वकात् इण्-धातोः लिटि व्यतीयुः इति रूपम्।
- नियन्तुः - नियच्छति इति नियन्ता, तस्य नियन्तुः।
- नेमिवृत्तयः - नेमीनाम् इव वृत्तिः यासां ता नेमिवृत्तयः इति बहुव्रीहिसमासः।

**सन्धिकार्यम् -**

- रेखामात्रमपि - रेखामात्रम्+अपि
- क्षुण्णादमनोर्वत्मनः - क्षुण्णात्+आमनोः+वर्त्मनः
- प्रजास्तस्य - प्रजाः+तस्य
- नियन्तुर्नेमिवृत्तयः - नियन्तुः+नेमिवृत्तयः
- **प्रयोगपरिवर्तनम्** - नियन्तुः तस्य नेमिवृत्तिभिः प्रजाभिः आमनोः क्षुण्णात् वर्त्मनः परः रेखामात्रः अपि न व्यतीये।

**अलङ्कारालोचना**- अस्मिन् श्लोके दिलीपः निपुणेन सारथिना उपमितः। तस्य प्रजाः नेमिभिः उपमिताः। अतः दिलीपः तस्य प्रजाः च अत्र उपमेयाः। निपुणः सारथिः तस्य रथस्य नेमयः च अत्र

उपमानानि। यथा रथस्य चक्रं पूर्ववर्तिना रथेन कृतां रेखां न अतिक्रामति तथा दिलीपस्य प्रजाः अपि मनुवचनं न उल्लङ्घितवन्तः इति सादृश्यम्। अतः अत्र उपमालङ्कारः अस्ति।

## पाठगतप्रश्नाः - ७

२४. रथस्य चक्रं किं न अतिक्रामति।

२५. क्षुण्णादामनोर्वत्मनः इत्यत्र सन्धिविच्छेदं कुरुत।

२६. प्रस्तुतश्लोकस्य अन्वयं लिखत।

## ५.९) इदानीं मूलपाठम् अवगच्छाम -

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।।१८।।**

**अन्वयः** - सः प्रजानां भूत्यर्थम् एव ताभ्यो बलिम् अग्रहीत्। हि रविः सहस्रगुणम् उत्स्रष्टुं रसम् आदत्ते।

**अन्वयार्थः** - स दिलीपः प्रजानां जनानां भूत्यर्थं वृद्ध्यर्थं ताभ्यः प्रजाभ्यः बलिं करम् अग्रहीत् गृहीतवान्। हि तथा हि रविः सूर्यः सहस्रगुणं सहस्रधा उत्स्रष्टुं दातुं रसं जलम् आदत्ते गृह्णाति।

**सरलार्थः** - प्रजानां कल्याणाय एव दिलीपः ताभ्यः करं गृहीतवान्। न तु आत्मनः भोगाय गृहीतवान्। यथा सूर्यः सहस्रगुणं जलं प्रत्यर्पयितुं पृथिव्याः जलं संगृह्णाति।

**तात्पर्यार्थः** - महाराजः दिलीपः राज्यवासिनां प्रजानां कल्याणाय ताभ्यः करम् अग्रहीत्। एकः जनः यद् उत्पादयति तस्य यदि षट् भागाः क्रियन्ते तर्हि तेषु एकं भागं राजा करत्वेन गृह्णाति। एतं बलिं राजा स्वभोगाय न प्रयुङ्क्ते। कररूपेण गृहीतम् अर्थं स राजकोषे संगृह्णाति। सा प्रजानाम् एव सम्पत्। प्रयोजने सति राजा तद् एव धनं प्रजाकल्याणाय प्रयच्छति। दिलीपस्य करसंग्रहणं कथम् आसीत् इति विषये उपमा अपि प्रदत्ता कविना। सूर्यः सम्पूर्णं वर्षं व्याप्य पृथिव्याः जलं शुष्यति। ग्रीष्मकाले पृथिवी जलाभावेन शुष्का भवति। तदा सूर्यः सहस्रगुणं जलं वर्षणरूपेण प्रददाति। एवं सूर्यः जलशोषणं स्वभोगाय न करोति। अपि तु अधिकं जलं प्रत्यर्पयितुम् एव स पृथिव्याः जलं स्वीकरोति। एवं दिलीपः अपि प्रजाकल्याणाय करं गृहीतवान्।

### व्याकरणविमर्शः -

- भूत्यर्थम् - भूत्यै इदम् इति विग्रहे भूत्यर्थम् इति रूपम्। अत्र नित्यसमासः वर्तते।
- अग्रहीत् - ग्रह्-धातोः लुङि प्रथमपुरुषैकवचने अग्रहीत् इति रूपम्।

- सहस्रगुणम् - सहस्रं गुणा यस्मिन् तत् यथा तथा इति विग्रहे सहस्रगुणम् इति रूपम्। अत्र बहुव्रीहिसमासः अस्ति।
- उत्स्रष्टुम् - उत्-पूर्वकात् सृज्धातोः तुमुन्-प्रत्यये उत्स्रष्टुम् इति रूपम्। उत्सर्जनाय इत्यर्थः।
- आदत्ते - आङ्-पूर्वकात् दाधातोः लटि प्रथमपुरुषैकवचने आदत्ते इति रूपम्।

**सन्धिकार्यम्** -

- प्रजानामेव - प्रजानाम्+एव
- स ताभ्यो बलिमग्रहीत् - सः+ताभ्यः+बलिम्+अग्रहीत्
- सहस्रगुणमुत्स्रष्टुमादत्ते - सहस्रगुणम्+उत्स्रष्टुम्+आदत्ते
- **प्रयोगपरिवर्तनम्** - तेन प्रजानां भूत्यर्थम् एव ताभ्यः बलिः अगृह्यत। हि रविणा सहस्रगुणम् उत्स्रष्टुं रसः आदीयते।

**अलङ्कारालोचना** - अत्र दिलीपं सूर्येण उपमितवान् कविः। यथा सूर्यः जलं गृहीत्वा सहस्रगुणं जलं प्रत्यर्पयति तथा दिलीपः अपि प्रजाभ्यः करं संगृह्णाति। ततः च कररूपेण संगृहीतं धनं प्रजाकल्याणाय प्रयुङ्क्ते इति सादृश्यम्। अत्र दिलीपः उपमेयः। सूर्यः उपमानम्। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -८

२७. दिलीपः कथं बलिम् अग्रहीत्।

२८. प्रस्तुते श्लोके कः अलङ्कारः वर्तते।

२९. दिलीपस्य करग्रहणविषये कविः किम् उक्तवान्।

## ५.१०) इदानीं मूलपाठम् अवगच्छाम -

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम्।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता।।१९।।**

**अन्वयः** - तस्य सेना परिच्छदः (बभूव)। शास्त्रेषु अकुण्ठिता बुद्धिः, धनुषि आतता मौर्वी च द्वयम् एव अर्थसाधनं(बभूव)।

**अन्वयार्थः** - तस्य दिलीपस्य सेना सैन्यं परिच्छदः उपकरणं बभूव। शास्त्रेषु राजशास्त्रेषु अकुण्ठिता अव्याहता बुद्धिः मतिः धनुषि चापे आतता आरोपिता मौर्वी च ज्या च द्वयम् एव बभूव द्वे एव अर्थसाधनं प्रयोजनकरणम् अभवत्।

**सरलार्थः** - दिलीपस्य सैन्यबलं तु केवलम् उपकरणम् आसीत्। तेन स किमपि प्रयोजनं न साधयति स्म। शास्त्रेषु अपरिमितं ज्ञानं धनुषि आरोपिता ज्या च दिलीपस्य प्रयोजनम् असाधयताम्।

**तात्पर्यार्थः** - राजनीतिशास्त्रे प्रोक्तम् अस्ति-'असन्तुष्टा द्विजा नष्टाः सन्तुष्टाः पार्थिवाः' इति। राजा आत्मसम्पत्त्या सन्तुष्टः चेत् तस्य नाशः एव सम्भवति। अतः राज्ञा राज्यजयादिकं कर्तव्यम् अस्ति। तस्मात् दिलीपः अपि अपरराज्यं जेतुं निर्गच्छति स्म। युद्धाय तस्य महत् सैन्यबलम् अपि आसीत्। किन्तु राजा युद्धसमये तद् न प्रयुङ्क्ते स्म। छत्रचामरादीनि यथा तस्य उपकरणानि आसन् तथा सैन्यबलम् अपि तस्य उपकरणमात्रम् आसीत्। शास्त्रेषु अपरिमिता बुद्धिः धनुषि आरोपिता ज्या च तस्य प्रयोजनसाधनम् आसीत्। नानाविधेषु शास्त्रेषु दिलीपः महापण्डितः आसीत्। अतः स नीतिशास्त्रविशारदः आसीत्। अपि च तस्य धनुषि आरोपिता ज्या अप्रतिरोध्या आसीत्। अतः शास्त्रपाण्डित्यं धनुषि आरोपिता ज्या च तस्य प्रयोजनं साधयतः स्म।

**व्याकरणविमर्शः -**

- अर्थसाधनम् - अर्थस्य साधनम् अर्थसाधनम् इति षष्ठीतत्पुरुषसमासः।
- अकुण्ठिता - न कुण्ठिता अकुण्ठिता इति नञ्तत्पुरुषसमासः।
- धनुषि - धनुष्-शब्दस्य सप्तम्येकवचने धनुषि इति रूपम्।
- आतता - आङ्- पूर्वकात् तन्-धातोः क्तप्रत्यये स्त्रियां टापि आतता इति रूपम्।

**सन्धिकार्यम् -**

- परिच्छदस्तस्य - परिच्छदः+तस्य
- द्वयमेवार्थसाधनम् - द्वयम्+एव+अर्थसाधनम्
- शास्त्रेष्वकुण्ठिता - शास्त्रेषु+अकुण्ठिता
- बुद्धिर्मौर्वी - बुद्धिः+मौर्वी
- चातता - च+आतता
- **प्रयोगपरिवर्तनम्** - सेनया परिच्छदेन बभूवे। अर्थसाधनं शास्त्रेषु अकुण्ठितया बुद्ध्या, धनुषि आततया मौर्व्या च द्वयेन एव बभूवे।

## पाठगतप्रश्नाः ९

३०. दिलीपस्य अर्थसाधनद्वयं किम् आसीत्।

३१. दिलीपस्य सेना किं जातम्।

३२. शास्त्रेषु+अकुण्ठिता इत्यत्र सन्धिं कुरुत।

## ५.११) इदानीं मूलपाठम् अवगच्छाम -

**तस्य संवृतमन्त्रस्य गुढाकारेङ्गितस्य च।**

**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव।।२०।।**

**अन्वयः** - संवृतमन्त्रस्य गूढाकारेङ्गितस्य च तस्य प्रारम्भाः प्राक्तनाः संस्कारा इव फलानुमेयाः (आसन्)।

**अन्वयार्थः** - संवृतमन्त्रस्य गुप्तविचारस्य गूढाकारेङ्गितस्य गुप्ते आकारेङ्गिते यस्य च तस्य दिलीपस्य प्रारम्भाः कर्माणि प्राक्तनाः प्राचीनाः संस्काराः इव पूर्वकर्मवासनाः इव फलानुमेयाः कार्येण अनुमातुं योग्याः आसन्।

**सरलार्थः** - दिलीपः अत्यन्तं गूढतया मन्त्रणाम् अकरोत्। आकारेण इङ्गितेन वा तस्य मनोभावः न ज्ञायते स्म। यथा मनुष्यस्य प्रवृत्तिं दृष्ट्वा पूर्वजन्मनः संस्काराः ज्ञायन्ते। तथा एव फलं दृष्ट्वा दिलीपस्य मनोभावः क आसीत् इति अवगम्यते स्म।

**तात्पर्यार्थः** - मन्त्रणा गूढतया एव करणीया इति राजनीतेः नियमः वर्तते। यदि केनापि कारणेन मन्त्रणा प्रकाशिता भवति तर्हि समग्रस्य राज्यस्य हानिः सम्भवति। अतः दिलीपः अतीव गोपनतया मन्त्रिभिः सह मन्त्रणाम् अकरोत्। इङ्गितादिकम् अवलोक्य अपि जनाः तस्य सामदामादीन् उपायान् अवगन्तुं समर्थाः न आसन्। यदा कार्यसिद्धिः भवति स्म तदा एव सर्वे दिलीपस्य मनोगतां मन्त्रणां जानन्ति स्म। एतदर्थसमर्थनाय कविना उपमानम् अपि प्रदत्तम्। पूर्वजन्मनि अस्माभिः पुण्यपापादिकं अनेकं कर्म कृतम्। तानि च कर्माणि अस्मिन् जन्मनि संस्काररूपेण तिष्ठन्ति। किन्तु साधारणतया ते संस्काराः न अवगम्यन्ते। यदा वयं जनानां प्रवृत्तिं पश्यामः तदा एव ते संस्काराः अनुमीयन्ते। यतो हि पुण्यकर्म कुर्वाणाः एव सत्कर्मसु प्रवर्तन्ते। पापकर्म कुर्वाणानां च असत्कर्मसु प्रवृत्तिः भवति। एवं कार्यसिद्धिम् अवलोक्य दिलीपस्य मन्त्रणाः अनुमीयन्ते स्म।

**व्याकरणविमर्शः-**

- संवृतमन्त्रस्य - संवृतः मन्त्रः यस्य स संवृतमन्त्रः इति बहुव्रीहिसमासः, तस्य संवृतमन्त्रस्य।
- गूढाकारेङ्गितस्य - आकारः च इङ्गितं च आकारेङ्गिते इति इतरेतरद्वन्द्वसमासः। गूढे आकारेङ्गिते यस्य स गूढाकारेङ्गितः इति बहुव्रीहिसमासः, तस्य गूढाकारेङ्गितस्य।
- फलानुमेयाः - फलेन अनुमेयाः फलानुमेयाः इति तृतीयातत्पुरुषसमासः।

### सन्धिकार्यम् -

- प्राक्तना इव - प्राक्तनाः+इव
- **प्रयोगपरिवर्तनम्** - संवृतमन्त्रस्य गूढाकारेङ्गितस्य च तस्य प्रारम्भैः प्राक्तनैः संस्कारैः इव फलानुमेयैः (अभूयत)।

**अलङ्कारालोचना** - अत्र दिलीपस्य सामादामादयः उपायाः प्राक्तनैः संस्कारैः उपमीयन्ते। अतः सामदामदयः उपायाः उपमेयाः। प्राक्तनाः संस्काराः च उपमानवाचकाः। इव इति उपमावाचकः शब्दः। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -१०

३३. दिलीपस्य प्रारम्भाः कैः उपमिताः।

३४. गूढाकारेङ्गितस्य इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

## ५.१२) इदानीं मूलपाठम् अवगच्छाम -

**जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।**

**अगृध्नुराददे सोर्थमसक्तः सुखमन्वभूत्।।२१।।**

**अन्वयः** - सः अत्रस्तः आत्मानं जुगोप, अनातुरो धर्मं भेजे, अगृध्नुः अर्थम् आददे, असक्तः सुखम् अन्वभूत्।

**अन्वयार्थः** - सः दिलीपः अत्रस्तः भीतरहितः आत्मानं शरीरं जुगोप रक्षितवान्। अनातुरः अरुग्णः सन् धर्मं सुकृतं भेजे सेवितवान्। अगृध्नुः लोभरहितः सन् अर्थं धनम् आददे स्वीकृतवान्, असक्तः आसक्तिरहितः सन् सुखं विषयानन्दम् अन्वभूत् अनुभूतवान्।

**सरलार्थः** - दिलीपः भयशून्यः अपि स्वदेहम् अरक्षत्। रोगरहितः सन् धर्मम् असेवत। लोभशून्यः अपि धनं गृहीतवान्। निरासक्तः अपि विषयसुखम् अनुभूतवान्।

**तात्पर्यार्थः** - अत्र सामान्यजनैः साकं दिलीपस्य भेदं प्रदर्शयति कविः। धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां शरीरम् एव प्रधानं साधनम्। शरीरं विना किमपि धर्माचरणं कर्तुं न शक्यते। लोके तु सर्वे कस्या अपि आपदः भीताः भूत्वा शरीरं रक्षन्ति। किन्तु दिलीपः पुरुषार्थसिद्धये आत्मानम् अर्थात् शरीरं रक्षितवान्। प्रायः जनाः यदा रोगेण क्लिष्टाः भवन्ति अथवा वृद्धाः भवन्ति तदा एव धर्मं सेवन्ते। किन्तु दिलीपः रोगरहितः अपि धर्माचरणं कृतवान्। लोके जनानां धनलाभाय एव भूयशः प्रवृत्तिः दृश्यते। ते सर्वे एव धनलोलुपाः भवन्ति। लोभवशात् एव ते धनलाभाय प्रवर्तन्ते। किन्तु दिलीपः न लोभवशात् अपि तु प्रजानां कल्याणाय धनम् अर्जितवान्। दिलीपः विषयसुखेषु निरासक्तः आसीत्। तथा आसक्तिरहितः अपि स सुखम् अनुभूतवान्। आसक्तस्य एव सुखदुःखे भवतः। किन्तु दिलीपः अनासक्तः आसीत्। अतः तस्य सुखदुःखाभ्यां दूरे स्थितिः आसीत्।

### व्याकरणविमर्शः -

- जुगोप - गुप्-धातोः लिट्लकारे जुगोप इति रूपम्। रक्षितवान् इत्यर्थः।
- अत्रस्तः - न त्रस्तः अत्रस्तः इति नञ्तत्पुरुषसमासः।
- भेजे - भज्-धातोः लिट्लकारे प्रथमपुरुषस्य एकवचने भेजे इति रूपम्। सेवितवान् इत्यर्थः।
- अनातुरः - न आतुरः अनातुरः इति नञ्तत्पुरुषसमासः।
- अगृध्नुः - न गृध्नुः अगृध्नुः इति नञ्तत्पुरुषसमासः।
- आददे - आङ्पूर्वकात् दाधातोः लिट्लकारे आददे इति रूपम्।
- असक्तः - न सक्तः इति असक्तः इति नञ्तत्पुरुषसमासः।
- अन्वभूत् - अनुपूर्वकात् भूधातोः लुङ्लकारे प्रथमपुरुषस्य एकवचने अन्वभूत् इति रूपम्।

### सन्धिकार्यम् -

- जुगोपात्मानमत्रस्तो भेजे - जुगोप+आत्मानम्+अत्रस्तः+भेजे
- धर्ममनातुरः - धर्मम्+अनातुरः
- अगृध्नुराददे - अगृध्नुः+आददे
- सोर्थमसक्तः - सः+अर्थम्+असक्तः
- सुखमन्वभूत् -सुखम्+अन्वभूत्
- **प्रयोगपरिवर्तनम्** - तेन अत्रस्तेन आत्मा जुगुपे, अनातुरेण धर्मः भेजे, अगृध्नुना अर्थः आददे, असक्तेन सुखम् अन्वभूयत।

## पाठगतप्रश्नाः -११

३५. दिलीपः कथं धर्मं अर्थं कामं च सेवितवान्।

३६. पुरुषार्थानां प्रधानं साधनं किम्।

३७. जुगोपात्मानमत्रस्तो भेजे इत्यत्र सन्धिविच्छेदं कुरुत।

३८. दिलीपः शरीरं कथं रक्षितवान्

१) स शत्रुभ्यः भीतः आसीत्

२) स मृत्योःभीतः आसीत्

३) स पुरुषार्थान् साधयितुम् इष्टवान्।

४) स जराग्रस्तः आसीत्

## ५.१३) इदानीं मूलपाठम् अवगच्छाम -

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**

**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।।२२।।**

**अन्वयः** - ज्ञाने मौनं, शक्तौ क्षमा, त्यागे श्लाघाविपर्ययः,( इत्थम्) तस्य गुणाः गुणानुबन्धित्वात् सप्रसवा इव (अभूवन्)।

**अन्वयार्थः** - ज्ञाने (सति अपि) परवृत्तान्तं ज्ञात्वा अपि मौनं मुनिभावः शक्तौ सामर्थ्ये क्षमा तितिक्षा त्यागे वितरणे श्लाघाविपर्ययः प्रशंसाभावः (इत्थम् अनेन प्रकारेण) तस्य दिलीपस्य गुणाः ज्ञानादयः गुणानुबन्धित्वात् विरुद्धगुणानां मौनादीनां सहचारात् सप्रसवाः इव सहोदराः इव अभूवन्।

**सरलार्थः** - दिलीपस्य ज्ञानेन साकं मौनम् आसीत्। शक्त्या सह क्षमाभावः आसीत्। त्यागेन तु आत्मप्रशंसाराहित्यम् आसीत्। इत्थं तस्य ज्ञानादयः गुणाः मौनादिभिः विरुद्धैः गुणैः सह सहोदरा इव अभवन्।

**तात्पर्यार्थः** - अत्रापि दिलीपस्य लोकोत्तरत्वं वर्णयति कविः। लोके प्रायः कश्चित् जनः ज्ञानी भवति चेत् स मुनिभावं न समाश्रयति। किन्तु दिलीपः परवृत्तान्तं ज्ञात्वा अपि मुनिवत् तिष्ठति स्म। वस्तुतः इदम् एव प्रकृतराज्ञः लक्षणम्। राजा यदि पण्डितः भूत्वा अपि मौनेन न तिष्ठति तर्हि तस्य हानिः एव जायते। तस्मात् शास्त्रादिषु मुखरः राजा बहुधा निन्दितः वर्तते। दिलीपः सामर्थ्यवान् अपि क्षमाशीलः आसीत्। सामर्थ्ये सति एव क्षमा प्रशंसनीया भवति। अतः दुर्बलः यदि क्षमां कुर्वन्ति तर्हि स न प्रशंसार्हः। तस्मात् मनुस्मृतौ उच्यते- 'शक्तानां भूषणं क्षमा' इति। लोके जनाः त्यागं कृत्वा समुद्घोषयन्ति। किन्तु दिलीपः दानादिकर्म कृत्वा अपि कीर्तनं न करोति स्म। एवं तस्य प्रशंसा अभीष्टा न आसीत्। वस्तुतः ज्ञानादयः गुणाः मौनादयः गुणाः च परस्परं विरुद्धाः वर्तन्ते। किन्तु दिलीपस्य एते सर्वे एव गुणाः आसन्। अतः दिलीपे इमे विरुद्धाः गुणाः सहोदराः इव आसन् इति कवेः आकूतम्।

**व्याकरणविमर्शः -**

- मौनम् - मुनेः भावः मौनं भवति।
- श्लाघाविपर्ययः - श्लाघायाः विपर्ययः श्लाघाविपर्ययः इति षष्ठीतत्पुरुषसमासः।
- गुणानुबन्धित्वात् - गुणैः अनुबन्धित्वं गुणानुबन्धित्वम् इति तृतीयातत्पुरुषसमासः, तस्मात् गुणानुबन्धित्वात्। एतत् पञ्चम्येकवचनान्तं पदम्।
- सप्रसवाः - सह प्रसवः येषां ते सप्रसवाः इति बहुव्रीहिसमासः। प्रसवः नाम जन्म।

**सन्धिकार्यम् -**

- गुणा गुणानुबन्धित्वात्तस्य - गुणाः+गुणानुबन्धित्वाद्+तस्य
- सप्रसवा इव - सप्रसवाः+इव
- **प्रयोगपरिवर्तनम्** - ज्ञाने मौनेन शक्तौ क्षमया त्यागे श्लाघाविपर्ययेण तस्य गुणैः गुणानुबन्धित्वात् सप्रसवैः इव अभूयत।



## पाठगतप्रश्नाः - १२

३९. दिलीपस्य ज्ञानेन साकं कः गुणः आसीत्।

४०. ज्ञानादयः गुणाः कैः गुणैः सह सहोदराः इव आसन्।

४१. केषां क्षमा प्रशंसार्हा-

१) बुद्धिमताम् २) बलवताम् ३) धनवताम् ४) दुर्वलानाम्

## ५.१४) इदानीं मूलपाठम् अवगच्छाम -

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः।**
**तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना।।२३।।**

**अन्वयः** - विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्मरतेः तस्य जरसा विना वृद्धत्वम् आसीत्।

**अन्वयार्थः** - विषयैः रूपादिभिः अनाकृष्टस्य अवशीभूतस्य विद्यानां पारदृश्वनः वेदादीन् सम्पूर्णतया पठितवतः धर्मरतेः पुण्यानुरागस्य तस्य दिलीपस्य जरसा विना वृद्धत्वं विना वृद्धत्वं वार्धकम् आसीत् अभवत्।

**सरलार्थः** - दिलीपः रूपादिभिः विषयैः आकृष्टः न आसीत्। स वेदादिषु सर्वेषु एव शास्त्रेषु पारदर्शी आसीत्। धर्मे अपि तस्य प्रगाढः अनुरागः आसीत्। अतः स जरसा विना वृद्धः अभवत्। दिलीपः ज्ञानवृद्धः आसीत् इति आशयः।

**तात्पर्यार्थः** - अस्मिन् श्लोके दिलीपस्य ज्ञानवृद्धत्वं वर्णयति कविः। रूपरसगन्धस्पर्शशब्दाः पञ्च विषया दिलीपं न आकर्षन्ति स्म। अर्थात् दिलीपः तैः वशीभूतः न भवति स्म। एतेन स इन्दियसंयमी आसीत् इति अवगम्यते। स वेदवेदाङ्गादीनि सर्वाणि शास्त्राणि आमूलम् अधीतवान्। एतेन तस्य विद्वत्ता सूच्यते। एवं दिलीपे विषयवैराग्यं शास्त्रेषु पाण्डित्यम् इत्यनयोः महान् समन्वयः आसीत्। अपि च स सर्वदा धर्मासक्तः आसीत्। धर्मवशात् च तस्मिन् वैराग्यं सम्यक् फलितम्। किञ्च इन्द्रियसंयमेन सह स विद्याम् अर्जितवान्। अतः तस्य विद्यार्जनम् अपि सम्यक् एव सञ्जातम्। एवं यद्यपि महाराजः दिलीपः वयसा वृद्धः नासीत्। तथापि ज्ञानकारणात् वैराग्यकारणात् च स ज्ञानवृद्धः आसीत् इति तस्मिन् वृद्धत्वम् आरोपयति कविः।

### व्याकरणविमर्शः -

- अनाकृष्टस्य - न आकृष्टः अनाकृष्टः इति नञ्तत्पुरुषसमासः, तस्य अनाकृष्टस्य।
- पारदृश्वनः - पारं दृष्टवान् इति पारदृश्वा, तस्य पारदृश्वनः। पारद्रष्टुः इत्यर्थः।

● धर्मरतेः - धर्मे रतिः यस्य स धर्मरतिः इति बहुव्रीहिसमासः, तस्य धर्मरतेः।

**सन्धिकार्यम् -**

● विषयैर्विद्यानाम् - विषयैः+विद्यानाम्

● धर्मरतेरासीद् - धर्मरतेः+आसीद्

● **प्रयोगपरिवर्तनम्** - विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्मरतेः तस्य जरसा विना वृद्धत्वेन अभूयत।

## पाठगतप्रश्नाः -१३

४२. दिलीपस्य वृद्धत्वं ज्ञानेन उत जरसा।

४३. अस्मिन् श्लोके उक्तानां दिलीपस्य विशेषणानाम् उल्लेखं कुरुत।

## पाठसारः

भगवतः भास्करात् रघुवंशस्य उत्पत्तिः। पुरा स्वयम्भूवादयः चतुर्दश मनवः आसन्। तेषु सप्तमः मनुः सूर्यवंशस्य प्रथमः राजा आसीत्। स विद्वद्भिः अपि पूज्यः आसीत्। यथा समुद्रमन्थनकाले समुद्रे चन्द्रः जन्म लब्धवान् तथा मनोः वंशे काले शुद्धात्मा दिलीपः जन्म लब्धवान्। तस्य दिलीपस्य वक्षःस्थलं विशालम् आसीत्। तस्य स्कन्धः वृषस्कन्धः इव आसीत्। स शालवृक्षः इव उन्नतः दीर्घबाहुशाली च आसीत्। तस्य पराक्रमम् अवलोक्य स्वयं क्षात्रः धर्मः एव तस्य देहम् आश्रितवान् इति प्रतीयते स्म। सः अधिकबलशाली आत्मतेजसा सकलभूतानां तिरस्कारी सर्वोन्नतः च अभवत्। अतः स सुमेरुपर्वतः इव उर्वीम् आक्रम्य स्थितवान्। तस्य प्रज्ञा तस्य देहाकारसदृशी अपरिमिता आसीत्। स प्रज्ञानुसारं शास्त्राध्ययनं शास्त्रानुसारं च धर्माचरणं करोति स्म। तदनुरूपं फलम् अपि लभते स्म। तस्मिन् यथा भयङ्करगुणाः आसन् तथा मनोहरगुणाः अपि आसन्। भयङ्करगुणवशात् उपजीविनः तस्मात् बिभ्यन्ति स्म। मनोहरगुणात् च तं सेवन्ते स्म। यथा समुद्रः मकरादिभिः भीषणः रत्नैः च अभीष्टपूरकः भवति। यथा निपुणस्य सारथेः रथचक्रं पूर्वचक्रेण कृतां रेखां न अतिक्रामति तथा दिलीपस्य प्रजाः अपि मनुवचनं किञ्चिदपि न उल्लङ्घितवन्तः। अनेन दिलीपस्य राज्यशासने निपुणता अवगम्यते। स प्रजानां हिताय ताभ्यः बलिं गृहीतवान्। स्वार्थसिद्धये न गृहीतवान्। यथा सूर्यः सहस्रगुणं जलं प्रदातुं पृथिव्याः जलं स्वीकरोति। स्वप्रयोजनसिद्धये न गृह्णाति। तस्य सेना उपकरणमात्रम् आसीत्। शास्त्रपाण्डित्येन धनुषि आरोपिता अप्रतिरोध्यया मौर्व्या च स प्रयोजनं साधयति स्म। स मन्त्रणां गूढतया करोति स्म। आकारेण इङ्गितेन वा तस्य मनोगतः भावः न ज्ञायते स्म। यथा अस्मिन् जन्मनि प्रवृत्तिं दृष्ट्वा जनानां

संस्काराः अनुमीयन्ते तथा कार्यसिद्धिम् अवलोक्य दिलीपस्य मनोभावाः अनुमीयन्ते स्म। स भीतरहितः अपि पुरुषार्थसिद्धये शरीरम् अरक्षत्। स रोगरहितः सन् धर्मं लोभरहितः सन् अर्थं आसक्तिरहितः सन् कामं सेवितवान्। दिलीपस्य ज्ञानेन साकं मौनम् आसीत्, शक्त्या सह क्षमा आसीत्, त्यागेन च प्रशंसाराहित्यम् आसीत्। एवम् इमे गुणाः परस्परं विरुद्धाः अपि सहोदराः इव आसन्। स इन्द्रियसंयमी आसीत्। यतो हि स रूपादिभिः अनाकृष्टः आसीत्। स बहूनि शास्त्राणि अधीतवान्। धर्मे च तस्य यथार्था प्रीतिः आसीत्। एवं यद्यपि स वयसा वृद्धः नासीत् तथापि स ज्ञानवृद्धः आसीत् इति वर्णयति कविः।

## पाठान्तप्रश्नाः

१. दिलीपस्य देहवैशिष्ट्यानि विस्तारेण वर्णयत।

२. दिलीपस्य ज्ञानवृद्धत्वं कथं प्रतिपादयति कविः।

३. ज्ञाने मौनम् इत्यादिश्लोकं पूरयित्वा व्याख्यायत।

४. दृष्टान्तालङ्कारस्य एकम् उदाहरणं गृहीत्वा समन्वयं कुरुत।

५. उत्प्रेक्षालङ्कारस्य एकम् उदाहरणं गृहीत्वा समन्वयं कुरुत।

६. पाठसारं समासेन लिखत।

७. पाठे पठितान् श्लोकान् आश्रित्य दिलीपस्य चरितवर्णनं कुरुत।

८. स्तम्भयोः लिखितान् परस्परसम्बद्धान् मेलयत।

| **स्तम्भः-क** | **स्तम्भः-ख** |
|---|---|
| १. वैवस्वतः | १. मोक्षः |
| २. श्लाघा | २. नृपगुणाः |
| ३. दिलीपः | ३. ज्ञानम् |
| ४. प्रांशुः | ४. दिलीपः |
| ५.समुद्रः | ५. ओङ्कारः |
| ६. भीमकान्ताः | ६. शालवृक्षः |
| ७. मौनम् | ७. राजेन्दुः |
| ८. पुरुषार्थः | ८. प्रशंसा |

उत्तरम् - १-५, २-८, ३-७, ४-६, ५-४, ६-२, ७-३, ८-१

## पाठगतप्रश्नानाम् उत्तराणि-

### उत्तराणि-१

१. मनुः सूर्येण उपमितः। महीक्षितः छन्दोभिः उपमिताः।

२. लोके राज्ञाम् आदिमः मनुः।

३. विवस्वतः अपत्यं वैवस्वतः। विवस्वान् नाम सूर्यः।

४. ३

५. २

६. १

### उत्तराणि-२

७. अस्मिन् श्लोके दिलीपः चन्द्रेण उपमितः। मनुवंशः च क्षीरनिधिना उपमितः।

८. अस्मिन् श्लोके तदन्वये अर्थात् मनुवंशे अपि च दिलीपः इति पदद्वयम् उपमेयवाचकम्। क्षीरनिधौ इन्दुः इति च द्वे पदे उपमानवाचके। इव इति उपमावाचकः शब्दः। अत्र तदन्वयः क्षीरनिधिना उपमीयते। दिलीपः च क्षीरनिधौ उत्पन्नेन इन्दुना उपमीयते। यथा क्षीरनिधौ चन्द्रः उत्पन्नः तथा मनुवंशे दिलीपः उत्पन्नः इति सादृश्यम्। अतः अत्र उपमालङ्कारः अस्ति।

९. राजा इन्दुः इव इति विग्रहे राजेन्दुः इति भवति। अत्र उपमेयपदपूर्वककर्मधारयसमासः अस्ति।

१०. २

११. ३

### उत्तराणि-३

१२. दिलीपस्य स्कन्धः वृषभस्य स्कन्धवत् आसीत्।

१३. शाल इव प्रांशुः शालप्रांशुः इति उपमानपदपूर्वककर्मधारयसमासः।

### उत्तराणि-४

१४. अत्र दिलीपं सुमेरुपर्वतेन सह उपमितवान् कविः।

१५. अतिरिक्तः सारः यस्य सः अतिरिक्तसारः इति बहुव्रीहिसमासः। सर्वेभ्यः अतिरिक्तसारः सर्वातिरिक्तसारः इति पञ्चमीतत्पुरुषसमासः, तेन सर्वातिरिक्तसारेण।

१६. सुमेरुपर्वतः पृथिवीम् आक्रम्य स्थितः।

### उत्तराणि-५

१७. आगमशब्दस्य अर्थः शास्त्रम्। आरम्भशब्दस्य अर्थः कार्यम्।

१८. दिलीपस्य प्रज्ञा तस्य देहसदृशी आसीत्।

१९. सदृशी प्रज्ञा यस्य सः सदृशप्रज्ञः इति बहुव्रीहिसमासः। आकारेण सदृशप्रज्ञः आकारसदृशप्रज्ञः



इति तृतीयातत्पुरुषसमासः।

२०. ३

### उत्तराणि-६

२१. दिलीपः भयङ्करैः नृपगुणैः उपजीविनाम् अधृष्यः कान्तैः च नृपगुणैः तेषाम् अभिगम्यः आसीत्।

२२. प्रस्तुते श्लोके दृष्टान्तालङ्कारः अस्ति।

२३. अधृष्यः+च+अधिगम्यः+च

### उत्तराणि-७

२४. रथस्य चक्रं पूर्ववर्तिना चक्रेण कृतां रेखां न अतिक्रामति।

२५. क्षुण्णात्+आमनोः+वर्त्मनः

२६. नियन्तुः तस्य नेमिवृत्तयः प्रजाः आमनोः क्षुण्णात् वर्त्मनः परं रेखामात्रम् अपि न व्यतीयुः।

### उत्तराणि-८

२७. दिलीपः प्रजानां भूत्यर्थं बलिम् अग्रहीत्।

२८. प्रस्तुते श्लोके दृष्टान्तालङ्कारः अस्ति।

२९. दिलीपस्य करग्रहणं सूर्यस्य रसग्रहणम् इव आसीत्। सूर्यः सम्पूर्णं वर्षं व्याप्य पृथिव्याः जलं शुष्यति। ग्रीष्मकाले पृथिवी जलाभावेन शुष्का भवति। तदा सूर्यः सहस्रगुणं जलं वर्षणरूपेण प्रददाति। एवं सूर्यः जलशोषणं स्वभोगाय न करोति। अपि तु अधिकं जलं प्रत्यर्पयितुम् एव स पृथिव्याः जलं स्वीकरोति। एवं दिलीपः अपि प्रजाकल्याणाय करं गृहीतवान्।

### उत्तराणि–९

३०. शास्त्रेषु अकुण्ठिता बुद्धिः धनुषि आरोपिता ज्या च दिलीपस्य अर्थसाधनद्वयम् आसीत्।

३१. दिलीपस्य सेना परिच्छदः आसीत्।

३२. शास्त्रेष्वकुण्ठिता

### उत्तराणि-१०

३३. दिलीपस्य प्रारम्भाः प्राक्तनैः संस्कारैः उपमिताः।

३४. आकारः च इङ्गितं च आकारेङ्गिते इति इतरेतरद्वन्द्वसमासः। गूढे आकारेङ्गिते यस्य स गूढाकारेङ्गितः इति बहुव्रीहिसमासः, तस्य गूढाकारेङ्गितस्य।

### उत्तराणि-११

३५. दिलीपः अनातुरः सन् धर्मं लोभरहितः सन् अर्थं अनासक्तः सन् कामं च सेवितवान्।

३६. पुरुषार्थानां प्रधानं साधनं शरीरम्।

३७. जुगोप+आत्मानम्+अत्रस्तः+भेजे

३८. ३

**उत्तराणि-१२**

३९. दिलीपस्य ज्ञानेन साकं मौनम् आसीत्।

४०. ज्ञानादयः गुणाः मौनादिभिः गुणैः सह सहोदराः इव आसन्।

४१. २

**उत्तराणि-१३**

४२. दिलीपस्य वृद्धत्वं ज्ञानेन आसीत्।

४३. विषयैः अनाकृष्टत्वं ,विद्यानां पारदृश्वत्वं, धर्मरतित्वम्- एतानि त्रीणि अस्मिन् श्लोके उल्लिखितानि विशेषणानि।

॥ इति पञ्चमः पाठः ॥

६

# रघुवंशम्- राज्ञो दिलीपस्य गुणवर्णनम् - २

## प्रस्तावना

अस्मिन् पाठे वयं तदनन्तरम् एकादश श्लोकान् पठामः। अत्र कविः प्रथमतः सूर्यवंशीयस्य महाराजदिलीपस्य प्रजावात्सल्यं वर्णयति। ततः च एकैकशः दिलीपे ये राजोचिताः गुणाः आसन् तान् गुणान् वर्णयति। ततः दिलीपस्य पत्न्याः नामोल्लेखं कृत्वा तस्याः गुणवर्णनं करोति। तयोः दिलीपसुदक्षिणयोः विवाहात् परं बहूनि वर्षाणि व्यतीतानि। तथापि दिलीपस्य सन्तानप्राप्तिः न अभवत्। अतः सन्तानाभावात् दिलीपः अतीव दुःखितः आसीत्। एवं सन्तानलाभाय शास्त्रविहितम् अनुष्ठानादिकं करणीयम् इति चिन्तयित्वा स समग्रस्य राज्यस्य भारं मन्त्रिभ्यः प्रदत्तवान्।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान्-

- दिलीपस्य प्रजावात्सल्यं जानीयात्।
- तस्य अपरान् च लोकोत्तरगुणान् अवगच्छेत्।
- दिलीपः कथं राज्यभारं मन्त्रिभ्यः प्रदत्तवान् इति बोद्धुं शक्नुयात्।
- दिलीपस्य पत्नीविषये ज्ञातुं पारयेत्।
- प्रत्येकं श्लोकानाम् अन्वयादिकं जानीयात्।
- समासादीन् व्याकरणविषयान् अपि बोद्धुं शक्नुयात्।

## ६.१) मूलपाठः -

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।**
**स पिता पितरस्तासां केवलं जन्महेतवः।।२४।।**

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः।।२५।।**

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।**
**संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम्।।२६।।**

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः।**

**व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता।।२७।।**

**द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम्।**

**त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता।।२८।।**

**तं वेधा विदधे नूनं महाभूतसमाधिना।**

**तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः।।२९।।**

**स वेलावप्रवलयां परिखीकृतसागराम्।**

**अनन्यशासनामूर्वीं शशासैकपुरीमिव।।३०।।**

**तस्य दाक्षिण्यरुढेन नाम्ना मगधवंशजा।**

**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।।३१।।**

**कलत्रवन्तमात्मानमवरोधे महत्यपि।**

**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः।।३२।।**

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।**

**विलम्बितफलैः कालं स निनाय मनोरथैः।।३३।।**

**सन्तानार्थाय विधये स्वभुजादवतारिता।**

**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे।।३४।।**

## ६.२) इदानीं मूलपाठम् अवगच्छाम -

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।**

**स पिता पितरस्तासां केवलं जन्महेतवः।।२४।।**

**अन्वयः** - प्रजानां विनयाधानात् रक्षणात् भरणात् अपि स पिता (आसीत्)। तासां पितरस्तु केवलं जन्महेतवः।

**अन्वयार्थः** - प्रजानां जनानां विनयाधानात् शिक्षाकारणात् रक्षणात् पालनात् भरणात् अपि पोषणात् अपि सः दिलीपः पिता पितृस्थानीयः आसीत्। तासां पितरः तु जनकाः तु जन्महेतवः जननकारणानि केवलम् एव।

**सरलार्थः** - प्रजाभ्यः शिक्षाप्रदानं तासां रक्षणभरणादिकं सर्वं दिलीपः एव करोति स्म। अतः पितृकार्यकरणात् स प्रजानां पिता सञ्जातः। तासां प्रकृताः जनकाः केवलं जन्मकारणानि आसन्।

**तात्पर्यार्थः** - यः पालयति स पिता भवति। स एव पुत्राय उपयुक्तां शिक्षां प्रदाय तं सन्मार्गे प्रवर्तयति। जनकः पुत्रस्य रक्षणं भरणं पोषणं च करोति। दिलीपस्य राज्ये जनानां जन्म प्रति एव तेषां

पितरः हेतवः आसन्। प्रकृतं पितृकार्यं तु दिलीपः करोति स्म। यतः स एव प्रजानां शिक्षाव्यवस्थां पश्यति स्म। जनाः विपद्ग्रस्ताः चेत् स एव तान् रक्षति स्म। अन्नपानादिभिः विषयैः स एव तान् यथार्थं पालयति स्म। वस्तुतः यः प्रकृतः राजा भवति स इत्थम् एव स्वराज्यं चालयति। अनेन दिलीपः यथार्थः प्रजापालकः राजा आसीत् इति सुष्ठु अवगम्यते। अतः दिलीपस्य राज्ये पितरः जननकारणमात्राणि आसन्। तेषां प्रकृतः जनकः तु स्वयं राजा दिलीपः एव आसीत्।

**व्याकरणविमर्शः -**

- विनयाधानात् - विनयस्य आधानं विनयाधानम् इति षष्ठीतत्पुरुषसमासः, तस्मात् विनयाधानात्।
- जन्महेतवः - जन्मनः हेतवः जन्महेतवः इति षष्ठीतत्पुरुषसमासः।

**सन्धिकार्याणि -**

- विनयाधानाद्रक्षणाद्भरणादपि - विनयाधानात्+रक्षणात्+भरणात्+अपि
- पितरस्तासाम् -पितरः+तासाम्
- **प्रयोगपरिवर्तनम् -** प्रजानां विनयाधानात् रक्षणात् भरणात् अपि तेन पित्रा अभूयत। तासां पितृभिः तु केवलं जन्महेतुभिः अभूयत।

## पाठगतप्रश्नाः -१

१. दिलीपः कथं प्रजानां पिता।

२. जनानां पितरः के आसन्.।

३. विनयाधानात् इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

४. प्रजानां पितरः के आसन् -

१) मृत्युहेतवः २) वृद्धिहेतवः ३) जन्महेतवः ४) दोषहेतवः

## ६.३) इदानीं मूलपाठम् अवगच्छाम -

**स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः।।२५।।**

**अन्वयः** - दण्ड्यान् स्थित्यै दण्डयतः प्रसूतये परिणेतुः मनीषिणः तस्य अर्थकामौ अपि धर्म एव आस्ताम्।

**अन्वयार्थः** - दण्ड्यान् दण्डनीयान् स्थित्यै लोकमर्यादायै दण्डयतः तेभ्यः दण्डं यच्छतः प्रसूतये सन्तानाय परिणेतुः विवाहं कुर्वतः तस्य दिलीपस्य अर्थकामौ एतन्नामकौ द्वौ पुरुषार्थौ अपि धर्म एव धर्मनामकपुरुषार्थ एव आस्ताम् अभवताम्।

**सरलार्थः** - लोककल्याणाय दिलीपः दण्डयोग्यान् अदण्डयत्। पुत्रोत्पादनाय स विवाहम् अकरोत्। एवं तस्य अर्थः कामः इति द्वौ पुरुषार्थौ धर्मस्वरूपौ एव आस्ताम्।

**तात्पर्यार्थः** - महाराजः दिलीपः जगतः हिताय दण्ड्यान् दण्डयति स्म। तत्र धनसंग्रहः तस्य उद्देश्यं न आसीत्। लोके प्रायः दण्डं धनसंग्रहाय प्रयुञ्जते जनाः। किन्तु दिलीपः तेन एव दण्डेन लोककल्याणरूपं धर्मं साधितवान्। अतः तस्य अर्थसाधनं धर्मम् एव साधयति इति प्राप्तम्। जगति प्रायः जनाः कामेन वशीभूताः भवन्ति। तस्य कामस्य शान्तये एव ते विवाहं कुर्वन्ति। किन्तु दिलीपः भोगाय विवाहं न कृतवान्। अपि तु सन्तानम् उत्पादयितुं परिणीतवान्। अनेन स पितृणम् अपि पूरितवान्। लोके भोगाय एव विवहन्ति जनाः। किन्तु अत्र तु परिणयेन पितृणपूरणरूपः धर्मः एव साधितः भवति। अतः दिलीपस्य कामसाधनम् अपि धर्मम् एव साधयति स्म। एवं दिलीपस्य अर्थकामौ अपि धर्मपरतां प्राप्तवन्तौ। अनेन तस्य सर्वं कार्यं धर्मपरकम् एव आसीत् इति वर्णयति कविः।

**व्याकरणविमर्शः -**

- दण्डयतः - दण्ड्धातोः णिचि निष्पन्नात् दण्डिधातोः शतृप्रत्यये दण्डयत् इति प्रातिपदिकं भवति। तस्य षष्ठ्येकवचनविवक्षायां दण्डयतः इति रूपम्।
- दण्ड्यान् - दण्डम् अर्हन्ति इति दण्ड्याः, तान् दण्ड्यान्। द्वितीयाबहुवचनान्तम् इदं पदम्।
- अर्थकामौ - अर्थः च कामः च अर्थकामौ इति इतरेतरयोगद्वन्द्वसमासः।

**सन्धिकार्यम्** -

- दण्डयतो दण्ड्यान् - दण्डयतः+दण्ड्यान्
- अप्यर्थकामौ - अपि+अर्थकामौ
- तस्यास्ताम् - तस्याः+ताम्
- धर्म एव - धर्मः+एव
- **प्रयोगपरिवर्तनम्** - दण्ड्यान् स्थित्यै दण्डयतः प्रसूतये परिणेतुः मनीषिणः तस्य अर्थकामाभ्यां अपि धर्मेण एव अभूयत।

## पाठगतप्रश्नाः -२

५. दिलीपः दण्ड्यान् कथं दण्डितवान्।

६. दिलीपस्य अर्थकामौ कः आसीत्।

७. दण्डयतः इति कस्य प्रातिपदिकस्य रूपम्। तत् कस्याः विभक्तेः कस्मिन् वचने भवति।



८. दिलीपस्य अर्थकामौ किम् आसीत् –

१) धर्मः २) अर्थः ३) कामः ४) मोक्षः

## ६.४) इदानीं मूलपाठम् अवगच्छाम -

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।**

**सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्।।२६।।**

**अन्वयः**- स यज्ञाय गां दुदोह, मघवा सस्याय दिवं दुदोह। (एवम्) उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः।

**अन्वयार्थः** - स राजा दिलीपः यज्ञाय यज्ञं कर्तुं गां पृथिवीं दुदोह दुग्धवान्। मघवा देवराजः इन्द्रः सस्याय धान्याय दिवं स्वर्गं दुदोह दुग्धवान्। उभौ दिलीपदेवेन्द्रौ सम्पद्विनिमयेन परस्परं सम्पत्त्याः विनिमयेन भुवनद्वयं लोकद्वयं दधतुः पोषितवन्तौ।

**सरलार्थः** - दिलीपः यज्ञेन स्वर्गस्थान् देवान् प्रसादयितुं प्रजाभ्यः करं स्वीकृतवान्। देवराजः इन्द्रः च स्वर्गलोकात् पृथिवीलोके वर्षणं कृतवान्। एवं परस्परं सम्पद्विनिमयेन उभौ लोकद्वयं पोषितवन्तौ।

**तात्पर्यार्थः** - दिलीपेन सह देवराजस्य इन्द्रस्य सख्यता आसीत्। अतः तयोः मध्ये सम्पद्विनिमयः अभवत्। दिलीपः देवानां प्रसादाय यज्ञादिकम् अकरोत्। तदर्थं स प्रजाभ्यः करं गृह्णाति स्म। कररूपेण यद् धनं संगृह्णाति स्म तेन एव देवयज्ञं करोति स्म। अतः दिलीपः यज्ञाय गां दुदोह इति वर्णयति कविः। तेन च यज्ञेन सन्तुष्टः भूत्वा इन्द्रः पृथिव्यां वर्षणम् अकरोत्। तेन धरणी सस्यायिता भवति स्म। तेभ्यः एव सस्येभ्यः जनाः धनार्जनं कृत्वा करं ददति स्म। एवं दिलीपः यज्ञादिना स्वर्गं पोषितवान्। देवराजः इन्द्रः वर्षणेन पृथिवीं पोषितवान्। एवम् उभौ परस्परं परिपोषकौ भूत्वा पृथिवीं स्वर्गं च पालितवन्तौ।

**व्याकरणविमर्शः -**

- दुदोह - दुह्-धातोः लिट्लकारे प्रथमपुरुषैकवचने दुदोह इति रूपम्। दुग्धवान् इत्यर्थः।
- सम्पद्विनिमयेन - सम्पदः विनिमयः सम्पद्विनिमयः इति षष्ठीतत्पुरुषसमासः, तेन सम्पद्विनिमयेन।
- दधतुः - धा-धातोः लिट्लकारे प्रथमपुरुषद्विवचने दधतुः इति रुपम्। पोषितवन्तौ इत्यर्थः।
- भुवनद्वयम् - भुवनयोः द्वयं भुवनद्वयम् इति षष्ठीतत्पुरुषसमासः।

**सन्धिकार्यम्** -

- सम्पद्विनिमयेनोभौ - सम्पद्विनिमयेन+उभौ
- दधतुर्भुवनद्वयम् - दधतुः+भुवनद्वयम्
- **प्रयोगपरिवर्तनम्** - तेन यज्ञाय गौः मघोना सस्याय द्यौः दुदुहे। (एवम्) उभाभ्यां सम्पद्विनिमयेन



भुवनद्वयं दधे।

## पाठगतप्रश्नाः -३

९. दिलीपः कथं पृथिवीं दुग्धवान्।

१०. भुवनद्वयं नाम किम्।

११. दुदोह इति रूपं कस्य धातोः कस्मिन् लकारे भवति।

१२. दिलीपः केन साकं सम्पद्विनिमयं कृतवान् –

१) बलिना २) वरुणेन ३) सूर्येण ४) इन्द्रेण

## ६.५) इदानीं मूलपाठम् अवगच्छाम -

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः।**
**व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता।।२७।।**

**अन्वयः** - राजानः रक्षितुः तस्य यशो न अनुययुः किल। यत् तस्करता परस्वेभ्यो व्यावृत्ता (सती) श्रुतौ स्थिता।

**अन्वयार्थः** - राजानः अन्ये नृपाः रक्षितुः रक्षकस्य तस्य दिलीपस्य यशः कीर्तिः न अनुययुः न अनुकृतवन्तः किल खलु। यत् यतः तस्करता चौर्यं परस्वेभ्यः अन्यद्रव्येभ्यः व्यावृत्ता निवृत्ता सती श्रुतौ शब्दे स्थिता आसीत्।

**सरलार्थः** - दिलीपस्य राज्ये कोपि तस्करः नासीत्। तस्करता केवलं शब्दरूपेण श्रूयते स्म। वास्तविकतया तस्करता तत्र नासीत्। अतः अन्ये राजानः दिलीपस्य यशः न अनुकृतवान्।

**तात्पर्यार्थः** - जगति अन्येषु नृपेषु दिलीपः विलक्षणः आसीत्। शासनकाले स प्रजानां मानसिकीं प्रवृत्तिम् एव परिवर्तितवान्। तस्मात् कारणात् दिलीपस्य राज्ये कोपि जनः चौरः नासीत्। न केवलम् एतत्, अपि तु तस्करता एव समाजे नासीत्। पूर्वकाले या तस्करता परधनेषु आसीत् इदानीं सा तत्र नास्ति। जनाः केवलं तस्करताशब्दं श्रुतवन्तः किन्तु कथं भवति सा इति कदापि न अनुभूतवन्तः। शशशृङ्गम् इव तत् अलीकम् आसीत्। अतः तस्करताशब्दमात्रं दिलीपस्य राज्ये आसीत् इति वर्णयति कविः। अतः एव पार्श्ववर्तिनः अन्ये नृपाः ईर्ष्यान्विताः भवन्ति स्म। ते तस्य यशः अनुकर्तुं प्रचेष्टाम् अपि कृतवन्तः। किन्तु दिलीपस्य तादृशीं कीर्तिम् अनुकर्तुं ते समर्थाः न अभवन्।

**व्याकरणविमर्शः -**

- अनुययुः - अनु-पूर्वकात् याधातोः लिटि प्रथमपुरुषबहुवचनविवक्षायां अनुययुः इति रुपम्।

अनुकृतवन्तः इत्यर्थः।

- व्यावृत्ता - विपूर्वकात् आङ्पूर्वकात् वृत्-धातोः क्तप्रत्यये व्यावृत्त इति रूपम्। ततः स्त्रियां टाप्प्रत्यये व्यावृत्ता इति रूपम्।
- परस्वेभ्यः - परेषां स्वानि परस्वानि इति षष्ठीतत्पुरुषसमासः, तेभ्यः परस्वेभ्यः।
- तस्करता - तस्करस्य भावः तस्करता। अत्र तस्करशब्दात् तल्प्रत्ययः कृतः।

**सन्धिकार्यम्-**

- किलानुययुस्तस्य - किल+अनुययुः+तस्य
- राजानो रक्षितुर्यशः - राजानः+रक्षितुः+यशः
- **प्रयोगपरिवर्तनम्** - राजभिः रक्षितुः तस्य यशः न अनुयये किल। यत् तस्करतया परस्वेभ्यः व्यावृत्तया (सत्या) श्रुतौ स्थितम्।

## पाठगतप्रश्नाः -४

१३. दिलीपस्य राज्ये तस्करता कुत्र आसीत्।

१४. अनुययुः इति कस्य धातोः कस्मिन् लकारे भवति। कः च तस्य अर्थः।

१५. किलानुययुस्तस्य इत्यत्र सन्धिविच्छेदं कुरुत।

## ६.६) इदानीं मूलपाठम् अवगच्छाम -

**द्वेष्योपि सम्मतः शिष्टस्तस्यार्तस्य यथौषधम्।**

**त्याज्यो दुष्टः प्रियोप्यासीदङ्गुलीवोरगक्षता।।२८।।**

**अन्वयः** - शिष्टः द्वेष्यः अपि आर्त्तस्य औषधं यथा तस्य सम्मतः (आसीत्)। दुष्टः प्रियः अपि उरगक्षता अङ्गुली इव तस्य त्याज्यः आसीत्।

**अन्वयार्थः** - शिष्टः सज्जनः द्वेष्यः अपि शत्रुः अपि आर्त्तस्य रोगिणः औषधं यथा भेषजम् इव तस्य दिलीपस्य सम्मतः अनुमतः आसीत्। दुष्टः दुर्जनः प्रियः अपि आत्मीयः अपि उरगक्षता सर्पेण दष्टा अङ्गुली इव अङ्गुलीवत् तस्य दिलीपस्य त्याज्यः त्यागयोग्यः आसीत् अभवत्।

**सरलार्थः** - सच्चरित्रशाली जनः शत्रुः अपि दिलीपेन ग्रहणीयः आसीत् यथा रोगिणा औषधं ग्रहणीयं भवति। दुर्जनः आत्मीयः अपि दिलीपेन त्याज्यः आसीत् यथा सर्पेण दष्टा अङ्गुली त्यक्तव्या भवति।

**तात्पर्यार्थः** - जगति स्थितानां सर्वेषाम् एव जनानां केचन शत्रवः भवन्ति, केचन च बन्धवः भवन्ति। जनाः कारणं विना एव शत्रुभिः साकं कलहायन्ते। किन्तु सुहृदः दुष्टम् आचरन्ति चेत् अपि तैः साकं मित्रत्वं स्थापयन्ति। किन्तु दिलीपस्य स्वभावः तथा नासीत्। औषधं सदा एव रुचिरहितं भवति। तथापि रोगिणा तत् ग्राह्यं भवति। अन्यथा रोगोपशमः न सम्भवति। एवं शत्रुः अपि सत्कार्यम् आचरति चेत् स दिलीपेन आद्रियते स्म। शत्रुत्वम् आश्रित्य दिलीपः तं न त्यजति स्म। सर्पेण दष्टा अङ्गुली प्रिया भवति। तथापि सा त्यक्तव्या भवति। अन्यथा जनस्य मरणम् एव सम्भवति। एवम् आत्मीयः अपि दुष्टाचरणम् अकरोत् चेत् दिलीपः तेन सह सम्बन्धं नाशयति स्म। एवं सच्चरित्रशाली एव दिलीपस्य मित्रम् आसीत्। दुश्चरित्रशाली च दिलीपस्य शत्रुः आसीत् इति आगच्छति। कारणान्तरेण जातस्य शत्रुत्वस्य कारणान्तरेण जातस्य मित्रत्वस्य च नासीत् किञ्चिद् अपि स्थानम्।

**व्याकरणविमर्शः -**

- द्वेष्यः - द्वेष्टुं योग्यः इत्यर्थे द्विष्-धातोः ण्यत्प्रत्यये द्वेष्यः इति रूपम्। द्वेषयोग्यः इत्यर्थः।
- सम्मतः - सम्पूर्वकात् मन्-धातोः क्तप्रत्यये सम्मतः इति रूपम्।
- त्याज्यः - त्यक्तुं योग्यः इत्यर्थे त्यज्-धातोः ण्यत्प्रत्यये त्याज्यः इति रूपम्।
- उरगक्षता - उरगेण क्षता उरगक्षता इति तृतीयातत्पुरुषसमासः। उरगः नाम सर्पः।

**सन्धिकार्यम्** -

- द्वेष्योपि - द्वेष्यः+अपि
- शिष्टस्तस्यार्त्तस्य – शिष्टः+तस्य+आर्त्तस्य
- यथौषधम् - यथा+औषधम्
- त्याज्यो दुष्टः - त्याज्यः+दुष्टः
- प्रियोप्यासीदङ्गुलीवोरगक्षता - प्रियः+अपि+आसीत्+अङ्गुली+इव+उरगक्षता
- **प्रयोगपरिवर्तनम्** - शिष्टेन द्वेष्येण अपि आर्त्तस्य औषधेन यथा तस्य सम्मतेन अभूयत। दुष्टेन प्रियेण अपि उरगक्षतया अङ्गुल्या इव तस्य त्याज्येन अभूयत।

**अलङ्कारालोचना** - अस्मिन् श्लोके शिष्टः शत्रुः औषधेन उपमितः। दुष्टः प्रियः च उरगक्षतया अङ्गुल्या उपमितः। अतः अत्र शिष्टः शत्रुः दुष्टः प्रियः च उपमेयवाचकौ। औषधः सर्पदष्टा अङ्गुली च उपमानवाचकौ। इव इति उपमावाचकः शब्दः च वर्तते। यथा औषधं ग्रहणीयं तथा शिष्टः शत्रुः ग्राह्यः। यथा सर्पदष्टा अङ्गुली त्याज्या तथा दुष्टः प्रियः अपि त्याज्यः इति सादृश्यम्। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -५

१६. दिलीपस्य शत्रुः अपि शिष्टः चेत् कथम् आसीत्।

१७. दिलीपस्य आत्मीयः अपि दुष्टः चेत् कथम् आसीत्।

१८. प्रियोप्यासीदङ्गुलीवोरगक्षता इत्यत्र सन्धिविच्छेदं कुरुत।

१९. उरगः नाम किम् -

१) पक्षी २) सर्पः ३) मार्जारः ४) इन्दुरः

## ६.७) इदानीं मूलपाठम् अवगच्छाम -

**तं वेधा विदधे नूनं महाभूतसमाधिना।**

**तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः।।२९।।**

**अन्वयः** - वेधाः तं महाभूतसमाधिना विदधे नूनम्। तथा हि तस्य सर्वे गुणाः परार्थैकफला आसन्।

**अन्वयार्थः** - वेधाः ब्रह्मा तं दिलीपं महाभूतसमाधिना पृथिव्यादिभिः महाभूतकारणसामग्रीभिः विदधे सृष्टवान् नूनम् अवश्यम्। तथा हि तस्य दिलीपस्य सर्वे सकलाः गुणाः परार्थैकफलाः अन्यस्य प्रयोजनं साधयन्तः आसन् अभवन्।

**सरलार्थः** - ब्रह्मा पञ्च महाभूतानि यैः उपकरणैः सृष्टवान् तैः एव उपकरणैः दिलीपम् अपि सृष्टवान्। अतः यथा पञ्च महाभूतानि परार्थं सन्ति तथा दिलीपस्य सर्वे गुणाः परार्थमेव आसन्।

**तात्पर्यार्थः** - अस्मिन् श्लोके कविः दिलीपस्य परोपकारितां वर्णयति। पृथिवी जलं तेजः वायुः आकाशम् इति पञ्च महाभूतानि भवन्ति। एतैः एव विधाता जगत् सृष्टवान्। एतेषां पञ्चमहाभूतानां यथाक्रमं गन्धः रसः रूपं स्पर्शः शब्दः एते पञ्च गुणाः सन्ति। गन्धः स्वयं गन्धं न स्वीकरोति। किन्तु गन्धेन अन्ये आनन्दिताः भवन्ति। रसः स्वयं रसं न गृह्णाति। किन्तु अन्ये रसं गृहीत्वा मोदिताः भवन्ति। एवम् एते गुणाः अन्येषां प्रयोजनम् एव साधयन्ति। एताभिः महाभूतानां सामग्रीभिः दिलीपम् अपि सृष्टवान् भगवान्। अतः यथा महाभूतानां कारणानि गन्धादीनि परार्थं साधयन्ति तथा दिलीपस्य प्रत्येकं कार्यं परार्थम् आसीत्। स सम्पूर्णम् अपि जीवनं परप्रयोजनसिद्धये एव नियुक्तवान्। तेन स यथार्थः परोपकारी सञ्जातः। तस्मादेव तस्य सर्वे गुणाः परार्थैकफला इति वर्णयति कविः।

**व्याकरणविमर्शः -**

- विदधे - विपूर्वकात् धाधातोः लिटि प्रथमपुरुषैकवचने विदधे इति रूपम्। विहितवान् इत्यर्थः।
- महाभूतसमाधिना - महान्ति च तानि भूतानि महाभूतानि इति कर्मधारयसमासः। महाभूतानां समाधिः महाभूतसमाधिः इति षष्ठीतत्पुरुषसमासः, तेन महाभूतसमाधिना। इदं तृतीयैकवचनान्तं रूपम्।
- परार्थैकफलाः - परस्य अर्थः परार्थः इति षष्ठीतत्पुरुषसमासः। परार्थ एव एकं फलं येषां ते परार्थैकफलाः इति बहुव्रीहिसमासः।

**सन्धिकार्यम् -**

- तस्यासन् - तस्य+आसन्
- परार्थैकफला गुणाः - परार्थैकफलाः+गुणाः
- **प्रयोगपरिवर्तनम्** - वेधसा स महाभूतसमाधिना विदधे नूनम्। तथा हि तस्य सर्वैः गुणैः परार्थैकफलैः अभूयत।

## पाठगतप्रश्नाः -६

२०. दिलीपस्य सर्वे गुणाः कथं परार्थैकफलाः।

२१. विदधे इति रूपं कस्य धातोः कस्मिन् लकारे भवति।

२२. महाभूतसमाधिना इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

## ६.८) इदानीं मूलपाठम् अवगच्छाम -

**स वेलावप्रवलयां परिखीकृतसागराम्।**
**अनन्यशासनामुर्वीं शशासैकपुरीमिव।।३०।।**

**अन्वयः** - स वेलावप्रवलयां परिखीकृतसागराम् अनन्यशासनाम् उर्वीम् एकपुरीम् इव शशास।

**अन्वयार्थः** - स राजा दिलीपः वेलावप्रवलयां समुद्रतटरूपेण प्राकारेण वेष्टितां परिखीकृतसागराम् खेयीकृतः सागरः यया ताम् अनन्यशासनाम् अपरनृपशासनरहिताम् उर्वीं पृथिवीम् एकपुरीम् इव एकनगरीम् इव शशास शासितवान्।

**सरलार्थः** - समुद्रतटं दिलीपस्य राज्यस्य प्राकारतुल्यम् आसीत्। समुद्रः च तस्य राज्यस्य परिखा आसीत्। पृथिव्याम् अन्यस्य कस्यापि शासनं नासीत्। एवं समग्रां पृथिवीं दिलीपः एकपूरीम् इव शासितवान्।

**तात्पर्यार्थः** - प्रत्येकराज्यस्य राजानः राज्यस्य रक्षणाय कांश्चन उपायान् करोति। यथा राज्यस्य सीमान्ते प्राकारं निर्मान्ति। प्राकारस्य बहिः परिखाः खनन्ति। किन्तु दिलीपः निजराज्यस्य रक्षणाय कमपि प्राकारं न निर्मीतवान्। सागरतटः स्वतः एव तस्य राज्यस्य प्राकारः सञ्जातः। एवमेव तेन परिखाः अपि न खनिताः। समुद्रः एव तस्य सुविशालस्य राज्यस्य परिखास्वरूपः आसीत्। एतेन एव अवगम्यते यद् दिलीपस्य राज्यम् समुद्रपर्यन्तम् आसीत्। अर्थात् सम्पूर्णा एव धरणी तस्य राज्ये अन्तर्भवति स्म। अतः दिलीपं विना अन्यस्य कस्य अपि नृपस्य शासनं पृथिव्यां नासीत् इति सुष्ठु

अवगम्यते। यथा एकः नृपः एकं नगरं शास्ति तथा दिलीपः सम्पूर्णाम् अपि पृथ्वीम् एकनगरीम् इव शासितवान्।

**व्याकरणविमर्शः -**

- वेलावप्रवलयाम् - वप्राणां वलयाः वप्रवलयाः इति षष्ठीतत्पुरुषसमासः। वेला एव वप्रवलयाः यस्याः सा वेलावप्रवलया इति बहुव्रीहिसमासः,तां वेलावप्रवलयाम्।
- परिखीकृतसागराम् - अपरिखाः परिखाः यथा सम्पद्यन्ते तथा कृताः इति विग्रहे च्विप्रत्यये परिखीकृताः इति रुपम्। परिखीकृताः सागराः यस्याः सा परिखीकृतसागराः इति बहुव्रीहिसमासः, तां परिखीकृतसागरम्।
- अनन्यशासनाम् - अन्यस्य शासनम् अन्यशासनम् इति षष्ठीतत्पुरुषसमासः। अविद्यमानम् अन्यशासनं यस्या सा अनन्यशासना इति नञ्बहुव्रीहिसमासः, ताम् अनन्यशासनाम्।
- शशास - शास्-धातोः लिटि प्रथमपुरुषैकवचने शशास इति रूपम्।
- एकपुरीम् - एका च असौ पुरी च एकपुरी इति कर्मधारयसमासः, ताम् एकपुरीम्।

**सन्धिकार्यम् -**

- अनन्यशासनामुर्वीम् - अनन्यशासनाम्+उर्वीम्
- शशासैकपुरीमिव - शशास+एकपुरीम्+इव
- **प्रयोगपरिवर्तनम्** - तेन वेलावप्रवलया परिखीकृतसागरा अनन्यशासना उर्वी एकपुरी इव शशासे।

**अलङ्कारालोचना** - अस्मिन् श्लोके दिलीपस्य राज्यम् अर्थात् समग्रा पृथिवी एकपुर्या उपमितम्। दिलीपराज्यम् अत्र उपमेयम् अस्ति। एकपुरी इति उपमानवाचकं पदम्। इव इति उपमावाचकः शब्दः। यथा नृपाः एकं नगरं शासति तथा दिलीपः सम्पूर्णां धरणीं शासितवान्। अतः अत्र उपमालङ्कारः अस्ति।

## पाठगतप्रश्नाः -७

२३. दिलीपः उर्वीं काम् इव शासितवान्।

२४. प्रस्तुते श्लोके उपमालङ्कारं साधयत।

२५. परिखीकृतसागराम् इति रूपं साधयत।

## ६.९) इदानीं मूलपाठम् अवगच्छाम -

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।**

**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।३१।।**

**अन्वयः** - तस्य मगधवंशजा दाक्षिण्यरूढेन नाम्ना अध्वरस्य दक्षिणा इव सुदक्षिणा इति पत्नी आसीत्।

**अन्वयार्थः** - तस्य राज्ञः दिलीपस्य मगधवंशजा मगधकुले उत्पन्नाः दाक्षिण्यरूढेन औदार्यप्रसिद्धेन नाम्ना अभिधानेन अध्वरस्य यज्ञस्य दक्षिणा दक्षिणानामधेया इव सुदक्षिणा इति सुदक्षिणा इति नाम्ना प्रसिद्धा पत्नी भार्या आसीत्।

**सरलार्थः** - दिलीपस्य पत्नी सुदक्षिणा मगधवंशे उत्पन्ना आसीत्। सा औदार्यकारणात् यज्ञस्य पत्नी दक्षिणा यथा सुलक्षणा अस्ति तथा आसीत् इति भावः।

**तात्पर्यार्थः** - अस्मिन् श्लोके दिलीपस्य पत्न्याः सुदक्षिणायाः वर्णनं करोति कालिदासः। अध्वरस्य अर्थात् यज्ञस्य पत्न्याः नाम भवति दक्षिणा। यज्ञस्य अन्ते दक्षिणा प्रदीयते। ताम् अपि यज्ञस्य अङ्गत्वेन कल्पयन्ति जनाः। तेन एव यज्ञः सम्पूर्णः भवति इति अपि अस्ति प्रसिद्धिः। एवं यज्ञस्य सम्पूर्णत्वं साधयति दक्षिणा। मगधवंशे उत्पन्ना सुदक्षिणा दिलीपस्य पत्नी आसीत्। सा च दाक्षिण्यकारणात् अत्यन्तं प्रसिद्धा आसीत्। यथा दक्षिणा यज्ञस्य सम्पूर्णतां साधयति तथा सुदक्षिणा अपि रघुकुलस्य सम्पूर्णतां साधितवती। यतः दिलीपः सुदक्षिणया एव पुत्रलाभं कृतवान्। तेन च पुत्रेण रघुकूलं सम्पूर्णतां प्राप्तवत्। अतः सुदक्षिणां यज्ञस्य सहधर्मिण्या सुदक्षिणया सह उपमाति कविः।

**व्याकरणविमर्शः-**

- दाक्षिण्यरूढेन - दक्षिणस्य भावः कर्म वा दाक्षिण्यं भवति। रुह्-धातोः क्तप्रत्यये रूढम् इति रूपं सिध्यति। दाक्षिण्येन रूढम् दाक्षिण्यरूढम् इति तृतीयातत्पुरुषसमासः।
- मगधवंशजा - मगधस्य वंशः मगधवंशः इति षष्ठीतत्पुरुषसमासः। मगधवंशे जाता इति अर्थे जन्धातोः डप्रत्यये मगधवंशज इति शब्दः निष्पद्यते। तस्मात् स्त्रीलिङ्गे टापि मगधवंशजा इति रूपम्।
- अध्वरस्य - अविद्यमानः ध्वरः यस्मिन् सः अध्वरः इति नञ्बहुव्रीहिसमासः, तस्य अध्वरस्य। यज्ञस्य इत्यर्थः।

**सन्धिकार्यम् -**

- सुदक्षिणेत्यासीदध्वरस्येव - सुदक्षिणा+इति+आसीत्+अध्वरस्य+इव
- **प्रयोगपरिवर्तनम्** - तस्य मगधवंशजया दाक्षिण्यरूढेन नाम्ना अध्वरस्य दक्षिणया इव सुदक्षिणया इति पत्न्या अभूयत।

**अलङ्कारालोचना** - अस्मिन् श्लोके तस्य इति सर्वनामवाचकं पदं दिलीपं बोधयति। स च दिलीपः अध्वरेण अर्थात् यज्ञेन उपमितः। दिलीपस्य पत्नी सुदक्षिणा च यज्ञस्य पत्न्या दक्षिणया उपमिता। इव इति उपमावाचकम् अव्ययं च अत्र वर्तते। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -८

२६. दिलीपपत्नी कस्मिन् वंशे अजायत।

२७. सुदक्षिणा अत्र केन उपमिता।

२८. अध्वरस्य इत्यस्य विग्रहवाक्यं समासनाम च लिखत। कः च अस्य अर्थः।

२९. सुदक्षिणा कस्मिन् देशे उत्पन्ना –

१) मालवे २) मगधे ३) अयोध्यायाम् ४) नन्दीग्रामे

---

## ६.१०) इदानीं मूलपाठम् अवगच्छाम -

**कलत्रवन्तमात्मानमवरोधे महत्यपि।**

**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः॥३२॥**

**अन्वयः** - वसुधाधिपः अवरोधे महति अपि मनस्विन्या तया लक्ष्म्या च आत्मानं कलत्रवन्तं मेने।

**अन्वयार्थः** - वसुधाधिपः पृथिव्याः ईश्वरः दिलीपः अवरोधे अन्तःपुरवर्गे महति अपि अधिके अपि मनस्विन्या दृढचित्तया तया सुदक्षिणया लक्ष्म्या च राजश्रिया च आत्मानं स्वं कलत्रवन्तं सभार्यं मेने ज्ञातवान्।

**सरलार्थः** - दिलीपस्य अन्तःपुरवर्गः महान् आसीत्। तथापि स्वपत्न्या सुदक्षिणया राजलक्ष्म्या च दिलीपः आत्मानं भार्यावन्तं ज्ञातवान्।

**तात्पर्यार्थः** - प्राचीनकाले प्रायः नृपाणाम् अन्तःपुरवर्गः विशालः भवति स्म। तस्मिन् च अन्तःपुरवर्गे बह्व्यः नार्यः अपि तिष्ठन्ति स्म। तासु च नारीषु काश्चन भार्याः भवन्ति स्म। काश्चन दास्यः अपि भवन्ति स्म। अर्थात् दास्यः अपि नृपस्य भोगवस्तुतुल्याः आसन्। दिलीपः सम्पूर्णस्य जगतः स्वामी आसीत्। अतः स बह्वीः नारीः निजान्तःपुरे स्थापयितुं समर्थः आसीत्। किन्तु धर्मभार्यां विहाय अन्यया नार्या सह सङ्गमः न धर्मसम्मतः। अतः दिलीपः सुदक्षिणा एव मम पत्नी इति चिन्तितवान्। एवं राजलक्ष्म्या सुदक्षिणया च दिलीपः कलत्रवान् आसीत् इति सूच्यते। अनेन तस्य भोगपराङ्मुखत्वं प्रकटीभवति।

**व्याकरणविमर्शः -**

- कलत्रवन्तम् - कलत्रम् अस्ति यस्य स कलत्रवान्, तं कलत्रवन्तम्। इदं द्वितीयैकवचनान्तं रूपम्।
- मेने - मन्-धातोः लिटि प्रथमपुरुषैकवचने मेने इति रूपं भवति।
- मनस्विन्या - प्रशस्तं मनः अस्ति यस्याः सा मनस्विनी, तया मनस्विन्या।

- वसुधाधिपः - अधिपाति इति अधिपः भवति। वसुधायाः अधिपः वसुधाधिपः इति षष्ठीतत्पुरुषसमासः।

**सन्धिकार्यम् -**

- कलत्रवन्तमात्मानमवरोधे - कलत्रवन्तम्+आत्मानम्+अवरोधे
- महत्यपि - महति+अपि
- **प्रयोगपरिवर्तनम्** - वसुधाधिपेन अवरोधे महति अपि मनस्विन्या तया लक्ष्म्या च आत्मा कलत्रवान् मेने।

## पाठगतप्रश्नाः -९

३०. दिलीपः काभ्यां कलत्रवान् आसीत्।

३१. अनेन श्लोकेन दिलीपस्य कः गुणः सूचितः भवति।

३२. कलत्रवन्तमात्मामवरोधे- इत्यत्र सन्धिविच्छेदं कुरुत।

## ६.११) इदानीं मूलपाठम् अवगच्छाम -

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।**
**विलम्बितफलैः कालं स निनाय मनोरथैः।।३३।।**

**अन्वयः** - स आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकः विलम्बितफलैः मनोरथैः कालं निनाय।

**अन्वयार्थः** - स राजा दिलीपः आत्मानुरूपायां आत्मसदृश्यां तस्यां सुदक्षिणायाम् आत्मजन्मसमुत्सुकः पुत्रप्राप्तये उत्कण्ठितः विलम्बितफलैः सविलम्बपरिणामैः मनोरथैः अभिलाषैः कालं समयं निनाय यापयामास।

**सरलार्थः** - दिलीपः आत्मसदृश्यां दक्षिणायां पुत्रलाभः भवतु इति इष्टवान्। किन्तु बहुकाले व्यतीते अपि तस्य पुत्रलाभः न भवति स्म इति विलम्बकारणात् स दुःखितः आसीत्।

**तात्पर्यार्थः** - सुदक्षिणा दिलीप इव क्षत्रियकुले उत्पन्ना आसीत्। दिलीप इव तस्याः बहवः गुणाः अपि आसन्। अतः यदि सुदक्षिणायाः गर्भे पुत्रोत्पत्तिः भवति तर्हि स पुत्रः यथार्थः रघुवंशीयः भविष्यति। तस्मिन् च तनये राजोचिताः गुणाः अवश्यं भविष्यन्ति। अतः सुदक्षिणायाम् पुत्रजन्म भवतु इति दिलीपस्य इच्छा आसीत्। किन्तु विवाहात् परं बहूनि वर्षाणि व्यतीतानि। तथापि दिलीपस्य पुत्रलाभः न

अभवत्। पुत्रः न जायते चेत् पितॄणं न पूर्यते। तेन पापम् एव सम्भविष्यति। अतः दिलीपः अतीव चिन्ताकुलः आसीत्। एवं पुत्रस्य अभावेन दिलीपः दुःखाक्रान्तः भूत्वा कालयापनम् अकरोत्।

**व्याकरणविमर्शः -**

- आत्मानुरूपायाम् - आत्मनः अनुरूपा आत्मानुरूपा इति षष्ठीतत्पुरुषसमासः, तस्याम् आत्मानुरूपायाम्।
- आत्मजन्मसमुत्सुकः - आत्मनो जन्म यस्य स आत्मजन्मा इति व्यधिकरणबहुव्रीहिसमासः। अथवा आत्मनः जन्म आत्मजन्मा इति षष्ठीतत्पुरुषसमासः। आत्मजन्मनि समुत्सुकः आत्मजन्मसमुत्सुकः इति सप्तमीतत्पुरुषसमासः।
- विलम्बितफलैः - विलम्बः सञ्जातः अस्य इत्यर्थे विलम्बितम् इति भवति। विलम्बितं फलं येषां ते विलम्बितफलाः इति बहुव्रीहिसमासः, तैः विलम्बितफलैः।
- निनाय - प्रापणार्थकस्य नीधातोः लिटि प्रथमपुरुषैकवचने निनाय इति रूपम्।

**सन्धिकार्यम् -**

- तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः - तस्याम्+आत्मानुरूपायाम्+आत्मजन्मसमुत्सुकः
- **प्रयोगपरिवर्तनम्** - तेन आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकेन विलम्बितफलैः मनोरथैः कालः निन्ये।

## पाठगतप्रश्नाः -१०

३३. दिलीपः कथं कालं यापितवान्।

३४. दिलीपः कस्याम् आत्मजन्मसमुत्सुकः आसीत्।

३५. आत्मजन्मसमुत्सुकः इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

## ६.१२) इदानीं मूलपाठम् अवगच्छाम -

**सन्तानार्थाय विधये स्वभुजादवतारिता।**
**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे।।३४।।**

**अन्वयः** - तेन सन्तानार्थाय विधये स्वभुजात् अवतारिता जगतो गुर्वी धूः सचिवेषु निचिक्षिपे।

**अन्वयार्थः** - तेन दिलीपेन सन्तानार्थाय सन्तानप्रयोजनाय विधये अनुष्ठानाय स्वभुजाद् निजहस्तात् अवतारिता अर्पिता जगतः लोकस्य गुर्वी दुर्वहा धूः भारः सचिवेषु मन्त्रिषु निचिक्षिपे निक्षिप्ता।

**सरलार्थः** - पुत्रप्राप्तये दिलीपः शास्त्रविहितम् अनुष्ठानादिकं कर्तुम् इष्टवान्। अतः स समग्रस्य जगतः भारं मन्त्रिभ्यः समर्पितवान्।

**तात्पर्यार्थः** - विवाहात् परं बहुवर्षाणि व्यतीतानि आसन्। तथापि दिलीपः सन्तानरहितः आसीत्। तस्मात् दैवम् एव आश्रयणीयम् इति विचिन्त्य शास्त्रविहितम् अनुष्ठानादिकं कर्तुम् इष्टवान्। किन्तु अनुष्ठानं क्रियते चेत् राज्यचालनं न भविष्यति। यतो हि अनुष्ठानादिकं विधातुं बहुकालः अपेक्षितः भवति। अतः दिलीपः समग्रस्य जगतः भारं मन्त्रिभ्यः अर्पितवान्। कारणं सम्पूर्णम् एव जगत् दिलीपस्य शासनाधीनम् आसीत्। यद्यपि प्रजापालनम् एव नृपस्य प्रमुखं कर्तव्यं भवति। तथापि दिलीपः सन्तानलाभाय तत् कर्तव्यं परित्यक्तवान्। यतो हि सन्तानेन एव पितृणं पूरयितुं शक्यते। एवं राज्यपरिचालनं परित्यज्य पुत्रलाभाकाङ्क्षी दिलीपः धर्माचरणं कर्तुम् उद्यतः आसीत्।

**व्याकरणविमर्शः -**

- सन्तानार्थाय - सन्तानः अर्थः यस्य स सन्तानार्थः इति बहुव्रीहिसमासः, तस्मै सन्तानार्थाय। अथवा सन्तानाय अयम् सन्तानार्थः इति चतुर्थीतत्पुरुषसमासः, तस्मै सन्तानार्थाय।
- विधये - विधीयते इति विधिः भवति। अनुष्ठानम् इत्यर्थः।
- स्वभुजाद् - स्वस्य भुजः स्वभुजः इति षष्ठीतत्पुरुषसमासः, तस्मात् स्वभुजात्।
- अवतारिता - अवपूर्वकात् तृधातोः णिचि क्तप्रत्यये स्त्रियां टापि च अवतारिता इति रूपम्।
- गुर्वी - गुरुशब्दस्य स्त्रियां ङीपि गुर्वी इति रूपम्।
- निचिक्षिपे - निपूर्वकस्य क्षिप्-धातोः लिटि कर्मणि प्रथमपुरुषैकवचने निचिक्षिपे इति रूपम्। निक्षिप्तवान् इति अर्थः।

**सन्धिकार्यम् -**

- स्वभुजादवतारिता - स्वभुजात्+अवतारिता
- धूर्जगतो गुर्वी - धूः+जगतः+गुर्वी
- **प्रयोगपरिवर्तनम्** - स सन्तानार्थाय विधये स्वभुजात् अवतारितां जगतः गुर्वीं धूं सचिवेषु निचिक्षेप।

## पाठगतप्रश्नाः -११

३६. जगतः धूः कथम् आसीत्।

३७. सन्तानार्थाय इत्यत्र अर्थशब्दस्य कः अर्थः।

३८. निचिक्षिपे इति रूपं कस्य धातोः कस्मिन् च लकारे।



## पाठसारः

महाराजः दिलीपः प्रजावत्सलः आसीत्। यतो हि प्रजानां शिक्षाव्यवस्थां रक्षणं पोषणम् इत्यादिकं सर्वं स पश्यति स्म। एवं पितृकार्यकरणात् दिलीपः एव प्रजानां पिता आसीत् इति कविः वर्णितवान्। तासां प्रकृतपितरः तु जन्मकारणानि एव आसन्। लोकहिताय स दण्डनीयान् दण्डयति स्म न तु धनसंग्रहाय। एवं सन्तानलाभाय स विवाहं कृतवान् न तु भोगाय। एवं तस्य अर्थकामसाधनं धर्ममेव असाधयत्। देवराजेन इन्द्रेण सह तस्य मित्रता आसीत्। दिलीपः पृथिव्याः करं संगृह्य यज्ञादिकं सम्पादितवान्। इन्द्रः च वर्षणेन धरणीं सस्यायितां कृतवान्। एवम् उभौ सम्पद्विनिमयेन भुवनद्वयं पोषितवन्तौ। अन्ये नृपाः महायशस्विनः तस्य कीर्तिम् न अनुकृतवन्तः। यतो हि दिलीपस्य राज्ये तस्करताशब्दः श्रुतौ एव आसीत्। तस्य शत्रुः अपि सच्चरित्रशाली चेत् तेन ग्राह्यः आसीत् यथा रोगिणा रुचिरहितम् अपि औषधं ग्राह्यं भवति। आत्मीयः अपि दुष्टः भवति चेत् तेन त्याज्यः आसीत् यथा सर्पदष्टा अङ्गुली अभीष्टा अपि त्यक्तव्या भवति। ब्रह्मा तं महाभूतकारणसामग्रीभिः निर्मीतवान्। अतः तस्य सर्वे गुणाः परार्थैकफलाः आसन्। समग्रा पृथिवी एव तस्य शासनाधीना आसीत्। अतः एव तस्य राज्यस्य परिखा समुद्रः आसीत्। समुद्रतटः च राज्यस्य प्राकारतुल्यः आसीत्। एवं स समग्रां पृथिवीम् एकनगरीम् इव शासितवान्। तस्य पत्नी आसीत् मगधकुले उत्पन्ना सुलक्षणा सुदक्षिणा। सा यज्ञस्य पत्नी दक्षिणा इव औदार्यकारणात् प्रसिद्धा आसीत्। स सम्पूर्णायाः पृथिव्याः स्वामी आसीत्। तथापि स धर्मभार्यया सुदक्षिणया राजलक्ष्म्या च आत्मानं कलत्रवन्तं ज्ञातवान्। तस्यां निजसदृश्यां सुदक्षिणायां पुत्रजन्म भवतु इति तस्य इच्छा आसीत्। यतो हि सुदक्षिणा अपि क्षत्रियोकुलोत्पन्ना आसीत्। अतः तस्याम् उत्पन्नः पुत्रः अवश्यं राजगुणोचितः भविष्यति इति स चिन्तितवान्। किन्तु विवाहात् परं बहुवर्षाणि व्यतीतानि। तथापि तयोः सन्तानलाभः न अभवत्। अतः दिलीपः दुःखाक्रान्तः आसीत्। तस्मात् सन्तानलाभाय शास्त्रनिर्दिष्टम् अनुष्ठानं विधातुं स राज्यभारं मन्त्रिभ्यः समर्पितवान्।

## पाठान्तप्रश्नाः

१. दिलीपस्य अर्थसाधनं कामसाधनं च धर्मम् एव साधयति - विचारयत।

२. द्वेष्योपि सम्मतः इत्यादिश्लोके उपमालङ्कारं साधयत।

३. कथं दिलीपः प्रजानां पिता अभवत्।

४. दिलीपदेवेन्द्रौ कथं लोकद्वयं पोषितवन्तौ।

५. दिलीपस्य सर्वे गुणाः कथं परार्थैकफलाः।

६. कलत्रवन्तम् इत्यादिश्लोकम् आश्रित्य दिलीपस्य भोगपराङ्मुखत्वं विचारयत।

७. दिलीपः कथं राज्यभारं मन्त्रिभ्यः समर्पितवान्।

८. समासेन पाठसारं लिखत।

९. स्तम्भयोः लिखितान् परस्परसम्बद्धान् मेलयत।

| स्तम्भः-क | स्तम्भः-ख |
|---|---|
| १. दुदोह | १. अनुकृतवन्तः |
| २. दधतुः | २. पृथिवी |
| ३. अनुययुः | ३. स्वर्गलोकम् |
| ४. तस्कर | ४. उरगक्षता अङ्गुली |
| ५. दिलीपः | ५. दुग्धवान् |
| ६. इन्द्रः | ६. औषधम् |
| ७. दुष्टः प्रि | ७. मगधवंशजा |
| ८. शिष्टः शत्रुः | ८. पुपुषतुः |
| ९. सुदक्षिणा | ९. चौर्यवृत्तिः |

उत्तरम् - १-५, २-८, ३-१, ४-९,५-२, ६-३, ७-६, ८-४, ९-७.

## पाठगतप्रश्नानाम् उत्तराणि-

### उत्तराणि-१

१. दिलीपः शिक्षाकारणात् रक्षणात् भरणात् च दिलीपः प्रजानां पिता।

२. जनानां पितरः जन्मकारणानि आसन्।

३. विनयस्य आधानं विनयाधानम् इति षष्ठीतत्पुरुषसमासः, तस्मात् विनयाधानात्।

४. ३

५. दिलीपः दण्ड्यान् स्थित्यै दण्डितवान्।

६. दिलीपस्य अर्थकामौ धर्म एव आसीत्।

### उत्तराणि-२

७. दण्डयत् इति अत्र प्रातिपदिकम्। इदं रूपं षष्ठीविभक्तेः एकवचने भवति।

८. १

### उत्तराणि-३

९. दिलीपः यज्ञाय पृथिवीं दुग्धवान्।

१०. भुवनद्वयं नाम स्वर्गलोकः पृथिवीलोकः च।

११. दुदोह इति रूपं दुह्-धातोः लिट्लकारे भवति।

१२. ४

**उत्तराणि-४**

१३. दिलीपस्य राज्ये तस्करता श्रुतौ आसीत्।

१४. अनु-पूर्वकात् याधातोः लिटि प्रथमपुरुषबहुवचनविवक्षायां अनुययुः इति रुपम्। अनुकृतवन्तः इत्यर्थः।

१५. किल+अनुययुः+तस्य

**उत्तराणि-५**

१६. दिलीपस्य शत्रुः अपि शिष्टः चेत् औषधवत् ग्राह्यम् आसीत्।

१७. दिलीपस्य आत्मीयः अपि दुष्टः चेत् उरगक्षता अङ्गुली इव त्याज्यः आसीत्।

१८. प्रियः+अपि+आसीत्+अङ्गुली+इव+उरगक्षता

१९. २

**उत्तराणि-६**

२०. ब्रह्मा दिलीपं पञ्चमहाभूतसामग्रीभिः सृष्टवान्। अतः दिलीपस्य सर्वे गुणाः परार्थैकफलाः।

२१. विपूर्वकात् धाधातोः लिटि प्रथमपुरुषैकवचने विदधे इति रूपम्।

२२. महान्ति च तानि भूतानि महाभूतानि इति कर्मधारयसमासः। महाभूतानां समाधिः महाभूतसमाधिः इति षष्ठीतत्पुरुषसमासः, तेन महाभूतसमाधिना।

**उत्तराणि-७**

२३. दिलीपः उर्वीम् एकपूरीम् इव शासितवान्।

२४. अस्मिन् श्लोके दिलीपस्य राज्यम् अर्थात् समग्रा पृथिवी एकपुर्या उपमितम्। दिलीपराज्यम् अत्र उपमेयम् अस्ति। एकपुरी इति उपमानवाचकं पदम्। इव इति उपमावाचकः शब्दः। यथा नृपाः एकं नगरं शासति तथा दिलीपः सम्पूर्णां धरणीं शासितवान्। अतः अत्र उपमालङ्कारः अस्ति।

२५. अपरिखाः परिखाः यथा सम्पद्यन्ते तथा कृताः इति विग्रहे च्विप्रत्यये परिखीकृताः इति रुपम्। परिखीकृताः सागराः यस्याः सा परिखीकृतसागराः इति बहुव्रीहिसमासः, तां परिखीकृतसागराम्।

**उत्तराणि-८**

२६. दिलीपपत्नी मगधवंशे अजायत।

२७. सुदक्षिणा अत्र दक्षिणया उपमिता।

२८. अविद्यमानः ध्वरः यस्मिन् सः अध्वरः इति नञ्बहुव्रीहिसमासः, तस्य अध्वरस्य। यज्ञस्य इत्यर्थः।

२९. २

**उत्तराणि-९**

३०. दिलीपः सुदक्षिणाराजलक्ष्मीभ्यां कलत्रवान् आसीत्।

३१. अनेन श्लोकेन दिलीपस्य भोगपराङ्मुखत्वं सूच्यते।

३२. कलत्रवन्तम्+आत्मानम्+अवरोधे

**उत्तराणि-१०**

३३. दिलीपः विलम्बितफलैः मनोरथैः कालं यापितवान्।

३४. दिलीपः आत्मानुरूपायां सुदक्षिणायाम् आत्मजन्मसमुत्सुकः आसीत्।

३५. आत्मनो जन्म यस्य स आत्मजन्मा इति व्यधिकरणबहुव्रीहिसमासः। अथवा आत्मनः जन्म आत्मजन्मा इति षष्ठीतत्पुरुषसमासः। आत्मजन्मनि समुत्सुकः आत्मजन्मसमुत्सुकः इति सप्तमीतत्पुरुषसमासः।

**उत्तराणि-११**

३६. जगतः धूः गुर्वी आसीत्।

३७. सन्तानार्थाय इत्यत्र अर्थशब्दस्य अर्थः प्रयोजनम्।

३८. निपूर्वकस्य क्षिप्-धातोः लिटि कर्मणि प्रथमपुरुषैकवचने निचिक्षिपे इति रूपम्।

॥ इति षष्ठः पाठः ॥

# ७

# रघुवंशम् - वशिष्ठाश्रमे गमनम्

## प्रस्तावना

अस्मिन् पाठे वयं तदनन्तरं चतुर्दश श्लोकान् पठामः। दिलीपः सन्तानं प्राप्तुकामः आसीत्। तदर्थं स शास्त्रविहितम् अनुष्ठानं कर्तुम् उद्यतः आसीत्। अतः स राज्यभारं मन्त्रिभ्यः प्रदत्तवान् इति वयं पूर्वस्मिन् पाठे पठितवन्तः। ततः च दिलीपः सुदक्षिणया सह एकस्मिन् रथे आरूढः भूत्वा सन्तानकाम्यया वसिष्ठाश्रमं प्रति गतवान्। वसिष्ठः आसीत् रघुवंशस्य कुलगुरुः। यदा एव रघुवंशीयाः नृपाः विपदि आपतन्ति स्म तदा महामुनिः वसिष्ठः तान् उपदिशति स्म। उपदेशपालनेन ते विपन्मुक्ताः अपि भवन्ति स्म। अतः दिलीपः अपि सन्तानकाम्यया वसिष्ठाश्रमं प्रति गतवान्। तयोः गमनकाले अतीव रमणीयतया मार्गपार्श्वस्थं प्रकृतिसौन्दर्यं रथारूढौ तौ दम्पती च वर्णयति कविः। अन्ते च तौ सायंकाले वसिष्ठतपोवनं प्राप्तवन्तौ।

## उद्देश्यानि -

अमुं पाठं पठित्वा भवान्-

- सुदक्षिणादिलीपयोः वसिष्ठाश्रमं प्रति गमनहेतुं जानीयात्।
- कालिदासस्य वर्णनशैलीं जानीयात्।
- श्लोकानाम् अन्वयः कथं भवति इति बोद्धुं शक्नुयात्।
- समासः सन्धिः इत्यादीन् व्याकरणविषयान् अवगच्छेत्।
- अलङ्काराणां समन्वयः कथं करणीयः इति ज्ञातुं पारयेत्।
- कठिनशब्दानाम् अर्थं ज्ञातुं समर्थो भवेत्।

## ७.१) मूलपाठः -

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।**
**तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम्।।३५।।**

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव।।३६।।**

मा भूदाश्रमपीडेति परिमेयपुरःसरौ।
अनुभावविशेषात्तु सेनापरिवृताविव।।३७।।
सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः।।३८।।
मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः।।३९।।
परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु।।४०।।
श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ।।४१।।
पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ।।४२।।
सरसीष्वरविन्दानां वीचिविक्षोभशीतलं।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम्।।४३।।
ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः।।४४।
हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्।।४५।।
काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव।।४६।।
तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः।।४७।।
स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः।।४८।।

## ७.२) इदानीं मूलपाठम् अवगच्छाम-

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम्।।३५।।

**अन्वयः** - अथ पुत्रकाम्यया तौ दम्पती प्रयतौ (सन्तौ) विधातारम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमं जग्मतुः।

**अन्वयार्थः** - अथ अनन्तरं पुत्रकाम्यया पुत्रस्य इच्छया तौ सुदक्षिणादिलीपौ दम्पती जायापती प्रयतौ पवित्रौ सन्तौ विधातारं ब्रह्माणम् अभ्यर्च्य पूजयित्वा गुरोः कुलगुरोः वसिष्ठस्य महर्षेः आश्रमं तपोवनं जग्मतुः गतौ।

**सरलार्थः** - तदनन्तरं पुत्रप्राप्तेः इच्छा सुदक्षिणां दिलीपं च प्रेरितवती। अतः तौ जगत्स्रष्टारं ब्रह्माणं पूजयित्वा कुलगुरोः वसिष्ठस्य आश्रमं गतवन्तौ।

**तात्पर्यार्थः** - अनन्तरं दिलीपः ब्रह्मणः पूजां विहितवान्। ततः स स्वभार्यया सुदक्षिणया सह कुलगुरोः वसिष्ठस्य आश्रमं प्रति निर्गतवान्। वसिष्ठः रघुवंशस्य कुलगुरुः वर्तते। प्रकृतः गुरुः स एव भवति यः शिष्यस्य विपदि तं यथोचितं मार्गं प्रदर्शयति। दिलीपस्य स्वगुरौ वसिष्ठे अपरिसीमः विश्वासः आसीत्। अतः सन्तानप्राप्तिं प्रति यानि प्रतिबन्धकानि सन्ति तानि निराकर्तुं स वसिष्ठसमीपं गतवान्। यतो हि स विश्वसिति स्म यद् वसिष्ठः तस्मै अवश्यं कञ्चित् उपदेशं दास्यति। तेन च उपदेशेन तस्य सन्तानलाभः निर्बाधः भविष्यति। अतः दिलीपः सन्तानप्राप्तिकामनया वसिष्ठाश्रमं प्रति निर्गतवान्।

**व्याकरणविमर्शः -**

- अभ्यर्च्य - अभिपूर्वकात् अर्च्-धातोः ल्यप्प्रत्यये अभ्यर्च्य इति रूपम्।
- विधातारम् - विदधाति इति विधाता भवति। विधातृशब्दस्य प्रथमाद्विवचने विधातारम् इति रूपं भवति।
- पुत्रकाम्यया - आत्मनः पुत्रेच्छा पुत्रकाम्या, तया पुत्रकाम्यया। अत्र काम्यच्प्रत्ययः विहितः अस्ति।
- दम्पती - जाया च पतिः च इति विग्रहे समासे कृते दम्पती इति रूपम्। अत्र एकशेषसमासः भवति। इदं नित्यद्विवचनान्तम्।
- जग्मतुः - गमनार्थकस्य गम्-धातोः लिटि प्रथमपुरुषद्विवचने जग्मतुः इति रूपम्। गतवन्तौ इत्यर्थः।

**सन्धिकार्यम् -**

- अथाभ्यर्च्य - अथ+अभ्यर्च्य
- गुरोर्जग्मतुराश्रमम् - गुरोः+जग्मतुः+आश्रमम्
- **प्रयोगपरिवर्तनम्** - अथ पुत्रकाम्यया ताभ्यां दम्पतिभ्यां प्रयताभ्यां विधातारम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमः जग्मे।

## पाठगतप्रश्नाः -१

१. सुदक्षिणादिलीपौ कथं वसिष्ठाश्रमं गतवन्तौ।

२. दम्पतीशब्दं साधयत।

३. वसिष्ठः दिलीपस्य कः आसीत्।

४. तौ दम्पती कम् अभ्यर्च्य वसिष्ठाश्रमं गतवन्तौ-

१) विष्णुम् २) शिवम् ३) सूर्यम् ४) ब्रह्माणम्

५. तौ दम्पती कस्य मुनेः आश्रमं गतवन्तौ-

१) वसिष्ठस्य २) विश्वामित्रस्य ३) दुर्वाससः ४) कण्वस्य

## ७.३) इदानीं मूलपाठम् अवगच्छाम -

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।**

**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव।।३६।।**

**अन्वयः**- स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनं प्रावृषेण्यं पयोवाहं विद्युदैरावतौ इव आस्थितौ (तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - स्निग्धगम्भीरनिर्घोषं मधुरगम्भीरशब्दम् एकं स्यन्दनम् एकं रथं प्रावृषेण्यं वर्षाकालजातं पयोवाहं मेघं विद्युदैरावतौ तडिदैरावतौ इव आस्थितौ आरूढौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - मधुरगम्भीरशब्दयुक्तं रथम् आरुह्य सुदक्षिणादिलीपौ गतवन्तौ। यथा वर्षाकाले विद्युत् ऐरावतः च मेघम् आश्रित्य तिष्ठतः।

**तात्पर्यार्थः** - दिलीपः भार्यया सुदक्षिणया सह रथेन वसिष्ठाश्रमम् अगच्छत्। येन रथेन तौ गतवन्तौ स रथः मधुरः तथा गम्भीरः- इति उभयविधशब्दयुक्तः आसीत्। वर्षाकाले इन्द्रस्य हस्ती ऐरावतः विद्युत् च मेघम् आश्रित्य तिष्ठतः। तेन ऐरावतस्य मेघारोहणं सम्भवति। अपि च विद्युत् अपि मेघे एव वर्तते। अतः ऐरावतस्य विद्युत्साहचर्यं सुष्ठु अवगम्यते। अत्र दिलीपः ऐरावतः इति कविः उपमाति। सुदक्षिणा च विद्युता उपमीयते। तौ च एकस्मिन् एव रथे समारूढौ स्तः। एवं यथा ऐरावतः मेघारूढः भूत्वा विद्युत्साहचर्यं लभते तथा दिलीपः अपि एकं रथम् आरुह्य सुदक्षिणासाहचर्यं लभते। यतो हि तौ एकस्मिन् एव रथे आरूढवन्तौ। अनेन तयोः दम्पत्योः समानमनस्कता सूच्यते येन च तेषां सन्तानलाभः भविता इति अपि स्पष्टं भवति।

**व्याकरणविमर्शः -**

- स्निग्धगम्भीरनिर्घोषम् - स्निग्धः गम्भीरः निर्घोषः यस्य स स्निग्धगम्भीरनिर्घोषः इति बहुव्रीहिसमासः, तं स्निग्धगम्भीरनिर्घोषम्।
- आस्थितौ - आङ्पूर्वकात् स्थाधातोः क्तप्रत्यये प्रथमाद्विवचने आस्थितौ इति रूपम्।
- प्रावृषेण्यम् - प्रावृषि भवः प्रावृषेण्यः, तं प्रावृषेण्यम्। वर्षर्तौ जातम् इत्यर्थः।

- विद्युदैरावतौ - विद्युत् च ऐरावतः च विद्युदैरावतौ इति इतरेतरयोगद्वन्द्वसमासः।

**सन्धिकार्यम् -**

- स्निग्धगम्भीरनिर्घोषमेकम् - स्निग्धगम्भीरनिर्घोषम्+एकम्
- स्यन्दनमास्थितौ - स्यन्दनम्+आस्थितौ
- विद्युदैरावताविव - विद्युदैरावतौ+इव
- **प्रयोगपरिवर्तनम्** - स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनं प्रावृषेण्यं पयोवाहं विद्युदैरावताभ्याम् इव आस्थिताभ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

**अलङ्कारोलोचना** - अत्र रथः मेघेन उपमीयते। दिलीपः इन्द्रगजेन ऐरावतेन सुदक्षिणा च विद्युता उपमीयते। एवम् अत्र त्रयः उपमेयवाचकाः शब्दाः वर्तन्ते, त्रयः च उपमानवाचकाः शब्दाः वर्तन्ते। इव इति उपमावाचकः शब्दः अपि अस्ति। यथा ऐरावतः मेघम् आरूढः विद्युत्साहचर्यं लभते तथा दिलीपः रथम् आरूढः सुदक्षिणासाहचर्यं लभते इति सादृश्यम्। अतः अत्र उपमालङ्कारः विद्यते।

## पाठगतप्रश्नाः -२

६. दिलीपस्य रथं कीदृशम् आसीत्।

७. सुदक्षिणादिलीपौ काभ्याम् उपमितौ।

८. प्रावृषेण्यशब्दं साधयत।

९. प्रावृट् नाम कः ऋतुः-

१) ग्रीष्मर्तुः २) वर्षर्तुः ३) वसन्तर्तुः ४) शरदृतुः

## ७.४) इदानीं मूलपाठम् अवगच्छाम -

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ।**
**अनुभावविशेषात्तु सेनापरिवृताविव।।३७।।**

**अन्वयः** - आश्रमपीडा मा भूत् इति परिमेयपुरःसरौ अनुभावविशेषात् तु सेनापरिवृतौ इव ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - आश्रमपीडा तपोवनक्लेशः मा भूत् न अस्तु इति अतः परिमेयपुरःसरौ अल्पपरिचारकसहितौ अनुभावविशेषात् तेजोविशेषात् तु सेनापरिवृतौ इव अनीकपरिवेष्टितौ इव ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - तपोवनस्य क्लेशादिकं मास्तु इति चिन्तयित्वा तौ दम्पती परिमितं परिचारकवर्गं स्वीकृत्य आश्रमं गतवन्तौ। किन्तु तयोः तेजःप्रभावात् तौ सेनापरिवृतौ इव प्रतीयेते स्म।

**तात्पर्यार्थः** - समग्रस्य धरातलस्य पतिः आसीत् दिलीपः। तस्मात् स कुत्रापि गच्छति चेत् सेनाभिः वेष्टितः भूत्वा एव गच्छति स्म। किन्तु यदा स पुत्रलाभाय स्वभार्यया सुदक्षिणया सह वसिष्ठाश्रमं गतवान् तदा अल्पसेनापरिवृतः एव गतवान्। यतो हि मुनीनाम् आश्रमः शान्तः कोलाहलशून्यः भवति। तत्र यदि दिलीपः अधिकं सैन्यं स्वीकृत्य गच्छति तर्हि शान्तिभङ्गः भवेत्। एतत् सर्वं विचिन्त्य दिलीपः अधिकसेनाः न नीतवान्। किन्तु तयोः मध्ये असामान्यं तेजः आसीत्। यदा तौ गतवन्तौ तदा ताभ्यां साकं अल्पाः एव सैनिकाः आसन्। किन्तु तेजःकारणात् तौ बहुसेनाभिः परिवृतौ आस्ताम् इति प्रतीयते स्म। एवं प्रस्तुतेन श्लोकेन सुदक्षिणायाः दिलीपस्य च तेजःप्रभावं वर्णयति कविः।

**व्याकरणविमर्शः -**

- आश्रमपीडा - आश्रमस्य पीडा आश्रमपीडा इति षष्ठीतत्पुरुषसमासः।
- परिमेयपुरःसरौ - परिमेयाः पुरःसराः ययोः तौ परिमेयपुरःसरौ इति बहुव्रीहिसमासः।
- अनुभावविशेषात् - अनुभावस्य विशेषः अनुभावविशेषः इति षष्ठीतत्पुरुषसमासः, तस्मात् अनुभावविशेषात्।
- सेनापरिवृतौ - सेनया परिवृतौ सेनापरिवृतौ इति तृतीयातत्पुरुषसमासः।
- मा भूत् - मा भूत् इत्यस्य मा अभूत् इत्येव प्रकृतं स्वरूपम्। अत्र माङ्योगात् न माङ्योगे इति सूत्रेणअडागमः न भवति। मा अस्तु इत्यर्थः।

**सन्धिकार्यम् -**

- भूदाश्रमपीडेति - भूत्+आश्रमपीडा+इति
- अनुभावविशेषात्तु - अनुभावविशेषाद्+तु
- सेनापरिवृताविव - सेनापरिवृतौ+इव
- **प्रयोगपरिवर्तनम्** - आश्रमपीडया मा भूयत इति परिमेयपुरःसराभ्याम् अनुभावविशेषात् तु सेनापरिवृताभ्याम् इव (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -३

१०. सुदक्षिणादिलीपौ कुतः सेनापरिवृतौ इव।

११. मा भूत् इति प्रयोगः कथं सिध्यति।

१२. तौ कथं परिमेयपुरःसरौः।



## ७.५) इदानीं मूलपाठम् अवगच्छाम -

**सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः।**

**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः।।३८।।**

**अन्वयः** - सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः वातैः सेव्यमानौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - सुखस्पर्शैः आनन्दजनकस्पर्शैः शालनिर्यासगन्धिभिः शालवृक्षजन्यगन्धयुक्तैः पुष्परेणूत्किरैः पुष्परेणुविक्षेपकैः आधूतवनराजिभिः वातैः पवनैः सेव्यमानौ परिचर्यमाणौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - दिलीपः सुदक्षिणा च यदा रथेन वसिष्ठाश्रमं प्रति गच्छतः स्म तदा मार्गे वायुः तौ सेवते स्म। स च शालवृक्षजन्यगन्धयुक्तः पुष्परेणुविक्षेपकः वायुः विपिनस्थवृक्षान् कम्पयति स्म।

**तात्पर्यार्थः** - दिलीपः पुत्रप्राप्त्युत्कण्ठितः आसीत्। अतः स पुत्रलाभाय वसिष्ठाश्रमं प्रति रथेन गतवान्। यदा स पत्न्या सह तपोवनं प्रति गच्छति स्म तदा मार्गस्थं वायुं वर्णयति कविः। शालवृक्षस्य रसात् एकः विशिष्टः गन्धः निष्पद्यते। पवनः तद्गन्धयुक्तः आसीत्। पुष्पेषु रेणवः तिष्ठन्ति। स वायुः तान् रेणून् इतस्ततः विक्षिपति स्म। अपि च स वायुः अतीव तीव्रवेगेन प्रवहति स्म। अतः तेन वायुना वने स्थिताः वृक्षाः अपि कम्पन्ते स्म। एतादृशेन मनोरमेन पवनेन तौ दम्पती सेव्यमानौ आस्ताम्। मन्यते यत् स्वयम् अरण्यपतिः एव तेन वायुना वनमार्गेन गच्छतोः सुदक्षिणादिलीपयोः सेवाम् अकरोत्।

**व्याकरणविमर्शः -**

- सेव्यमानौ - सेव्-धातोः कर्मणि शानच्प्रत्यये प्रथमाद्विवचने सेव्यमानौ इति रूपम्।
- सुखस्पर्शैः - सुखः स्पर्शः येषां ते सुखस्पर्शाः इति बहुव्रीहिसमासः, तैः सुखस्पर्शैः। इदं तृतीयाबहुवचनान्तं पदम्।
- शालनिर्यासगन्धिभिः - शालस्य निर्यासः शालनिर्यासः इति षष्ठीतत्पुरुषसमासः। शालनिर्यासस्य गन्धः शालनिर्यासगन्धः इति षष्ठीतत्पुरुषसमासः। शालनिर्यासगन्धः अस्ति येषां ते शालनिर्यासगन्धिनः, तैः शालनिर्यासगन्धिभिः।
- पुष्परेणूत्किरैः - पुष्पाणां रेणवः पुष्परेणवः इति षष्ठीतत्पुरुषसमासः। उत्किरन्ति इति उत्कीराः। पुष्परेणूनाम् उत्किराः पुष्परेणूत्किराः इति षष्ठीतत्पुरुषसमासः, तैः पुष्परेणूत्किरैः।
- आधूतवनराजिभिः - ईषत् धूता इत्यर्थे आधूता इति रूपं भवति। आधूता वनराजिः यैः ते आधूतवनराजयः इति बहुव्रीहिसमासः,तैः आधूतवनराजिभिः।

**सन्धिकार्यम् -**

- पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः - पुष्परेणूत्किरैः+वातैः+आधूतवनराजिभिः
- **प्रयोगपरिवर्तनम्** - सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः वातैः

सेव्यमानाभ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -४

१३. कीदृशैः पवनैः तौ सेव्यमानौ आस्ताम्।

१४. शालनिर्यासगन्धिभिः इति पदं साधयत।

१५. पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः इत्यत्र सन्धिविच्छेदं कुरुत।

१६. एतेषु किं वायोः विशेषणं नास्ति-

१) सुखस्पर्शैः २) शालनिर्यासगन्धिभिः ३) वृक्षरेणूत्किरैः ४) आधूतारण्यराजिभिः

१७. सेव्यमानौ इत्यत्र सेव्-धातोः कः प्रत्ययः-

१) शानच्प्रत्ययः २) कानच्प्रत्ययः ३) चानश्प्रत्ययः ४) अन्यः कोपि

## ७.६) इदानीं मूलपाठम् अवगच्छाम -

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः।।३९।।**

**अन्वयः** - रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधाः भिन्नाः षड्जसंवादिनीः मनोभिरामाः केकाः शृण्वन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - रथनेमिस्वनोन्मुखैः स्यन्दनजन्यशब्देन ऊर्ध्वमुखैः शिखण्डिभिः मयूरैः द्विधाः द्विविधाः भिन्नाः भेदयुक्ताः षड्जसंवादिनीः षड्जस्वरेण संवदतीः मनोभिरामाः चित्तप्रियाः केकाः मयूरवाणीः शृण्वन्तौ आकर्णयन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - यदा सुदक्षिणादिलीपौ रथेन वनमध्ये गतवन्तौ तदा रथचक्रजन्यशब्दं श्रुत्वा मयूराः मुखम् उन्नमितवन्तः। किञ्च ते षड्जस्वरेण केकारवम् अपि कृतवन्तः। एतत् सर्वं श्रावं श्रावं तौ दम्पती वसिष्ठाश्रमं गतवन्तौ।

**तात्पर्यार्थः** - वनमार्गेण सुदक्षिणादिलीपयोः रथः गच्छति स्म। अतः तयोः रथात् गम्भीरः ध्वनिः निर्गच्छति स्म। तस्मिन् काले मार्गपार्श्वे केचन मयूराः आसन्। ते च अयं ध्वनिः मेघध्वनिः अस्ति इति चिन्तितवन्तः। मेघः ध्वनिं करोति चेत् अवश्यं वृष्टिः भविष्यति इति चिन्तयित्वा वर्षाकाले मयूराः नृत्यन्ति गायन्ति च। अत्रापि वन्याः मयूराः मेघध्वनिम् आकर्ण्य नृत्यगीतादिकम् आरब्धवन्तः। अस्मिन् श्लोके ते मयूराः षड्जस्वरेण संवतन्ते स्म इति वर्णयति कालिदासः। षड्जध्वनिः शुद्धविकृतभेदेन द्विविधः भवति। अत्र मयूराणां ध्वनिः अपि शुद्धः विकृतः इति द्विविधः आसीत्। स च केकारवः तयोः मनांसि आह्लादयति स्म। एवं मनोरमाः केकाः श्रावं श्रावं तौ सुदक्षिणादिलीपौ वसिष्ठाश्रमं गतवन्तौ।

**व्याकरणविमर्शः -**

- मनोभिरामाः - मनसः अभिरामाः मनोभिरामाः इति षष्ठीतत्पुरुषसमासः। इदं द्वितीयाबहुवचनान्तं रूपम्।
- शृण्वन्तौ - श्रुधातोः शतृप्रत्यये प्रथमाद्विवचने शृण्वन्तौ इति रूपम्।
- रथनेमिस्वनोन्मुखैः - रथस्य नेमयः रथनेमयः इति षष्ठीतत्पुरुषसमासः। रथनेमीनां स्वनाः रथनेमिस्वनाः इति षष्ठीतत्पुरुषसमासः। ऊर्ध्वं मुखं येषां ते उन्मुखाः इति बहुव्रीहिसमासः। रथनेमिस्वनैः उन्मुखाः रथनेमिस्वनोन्मुखाः इति तृतीयातत्पुरुषसमासः, तैः रथनेमिस्वनोन्मुखैः।
- षड्जसंवादिनीः - षड्भ्यः जायते इति षड्जः। षड्जेन संवदन्ति इति षड्जसंवादिन्यः, ताः षड्जसंवादिनीः। इदं द्वितीयाबहुवचनान्तं पदम्।
- **प्रयोगपरिवर्तनम्** - रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधाः भिन्नाः षड्जसंवादिनीः मनोभिरामाः केकाः शृण्वद्भ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -५

१८. मयूराः केन स्वरेण संवदन्ते स्म।

१९. ते कथम् मुखम् उन्नमितवन्तः।

२०. रथनेमिस्वनोन्मुखैः इत्यस्य विग्रहवाक्यं समासनाम च लिखत।

२१. मयूराः केन स्वरेण केकारवं कुर्वन्ति

१) षड्जस्वरेण २) मध्यमस्वरेण ३) पञ्चमस्वरेण ४) सप्तमस्वरेण

२२. धनिः कतिविधः भवति-

१) त्रिविधः २) चतुर्विधः ३) पञ्चविधः ४) द्विविधः

## ७.७) इदानीं मूलपाठम् अवगच्छाम -

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु।।४०।।**

**अन्वयः** - अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - अदूरोज्झितवर्त्मसु समीपात् त्यक्तमार्गेषु स्यन्दनाबद्धदृष्टिषु रथे आबद्धदृष्टिषु मृगद्वन्द्वेषु हरिणयुगलेषु परस्पराक्षिसादृश्यम् परस्परनयनसमानतां पश्यन्तौ अवलोकयन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - यदा वनमार्गे सुदक्षिणादिलीपयोः रथः गच्छति स्म तदा मार्गस्थाः मृगाः तमेव रथं पश्यन्ति स्म। रथः यदा समीपम् उपागतः तदा एव ते मार्गं त्यजन्ति स्म। तेषु च मृगद्वन्द्वेषु तौ परस्परं नेत्रसादृश्यं दृष्टवन्तौ।

**तात्पर्यार्थः** - सुदक्षिणादिलीपौ पुत्रलाभाय वनमार्गेण वसिष्ठस्य आश्रमं गतवन्तौ। वनमार्गे प्रायः मृगाः विहरन्ति। यदा तयोः रथः आगतः तदापि मृगाः मार्गमध्ये एव आसन्। किन्तु रथं दृष्ट्वा अपि ते मृगाः मार्गं न त्यक्तवन्तः। यदा रथः तेषां समीपम् आगतः तदा एव ते मार्गं त्यक्तवन्तः। एतेन ज्ञायते यत् तेषां हरिणानां मनुष्येषु विश्वासः आसीत्। यतो हि तपस्विभिः सह एव निवसन्ति स्म। किञ्च ते रथमेव पश्यन्ति स्म। यतो हि वनमार्गे रथाः प्रायः न आगच्छन्ति। अतः रथागमः विशेषः - इति कारणात् ते रथं पश्यन्ति स्म। तादृशेषु मृगयुगलेषु तौ राजराज्ञ्यौ परस्परं नेत्रसादृश्यं दृष्टवन्तौ। अर्थात् दिलीपः मृगेषु सुदक्षिणायाः नेत्रसादृश्यं दृष्टवान्। सुदक्षिणा च मृगेषु दिलीपस्य नेत्रसादृश्यं दृष्टवान्।

**व्याकरणविमर्शः -**

- परस्पराक्षिसादृश्यम् - अक्ष्णोः सादृश्यम् अक्षिसादृश्यम् इति षष्ठीतत्पुरुषसमासः। परस्परम् च तत् अक्षिसादृश्यम् परस्पराक्षिसादृश्यम् इति कर्मधारयसमासः। इदं द्वितीयैकवचनान्तं रूपम्।
- अदूरोज्झितवर्त्मसु - न दूरम् अदूरम् इति नञ्तत्पुरुषसमासः। उज्झितं वर्त्म यैः तानि उज्झितवर्त्मानि इति बहुव्रीहिसमासः। अदूरं यथा तथा उज्झितवर्त्मानि अदूरोज्झितवर्त्मानि इति सुप्सुपासमासः, तेषु अदूरोज्झितवर्त्मसु।
- मृगद्वन्द्वेषु - मृगाणां द्वन्द्वानि मृगद्वन्द्वानि इति षष्ठीतत्पुरुषसमासः, तेषु मृगद्वन्द्वेषु।
- पश्यन्तौ - दृश्-धातोः शतृप्रत्यये प्रथमाद्विवचने पश्यन्तौ इति रूपम्।
- स्यन्दनाबद्धदृष्टिषु - आबद्धा दृष्टिः यैः तानि आबद्धदृष्टीनि इति बहुव्रीहिसमासः। स्यन्दने आबद्धदृष्टीनि स्यन्दनाबद्धदृष्टीनि इति सप्तमीतत्पुरुषसमासः, तेषु स्यन्दनाबद्धदृष्टिषु।

**सन्धिकार्यम् -**

- परस्पराक्षसादृश्यमदूरोज्झितवर्त्मसु - परस्पराक्षिसादृश्यम्+अदूरोज्झितवर्त्मसु
- **प्रयोगपरिवर्तनम्** - अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यद्भ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -६

२३. मृगाः कथं मार्गं त्यजन्ति स्म।

२४. तौ परस्परलोचनसादृश्यं कुत्र अवलोकितवन्तौ।

२५. अदूरोज्झितवर्त्मसु इत्यत्र समासनाम विग्रहवाक्यं च लिखत।

२६. सुदक्षिणादिलीपौ मृगद्वन्द्वेषु किम् अवलोकितवन्तौ-



१) प्रेमप्राचुर्यम् २) मित्रता ३) नेत्रसादृश्यम् ४) मुखसादृश्यम्

## ७.८) इदानीं मूलपाठम् अवगच्छाम -

**श्रेणीबन्धाद् वितन्वद्भिरस्तम्भां तोरणस्रजम्।**

**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ।।४१।।**

**अन्वयः** - श्रेणीबन्धात् अस्तम्भां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचित् उन्नमिताननौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - श्रेणीबन्धात् पङ्क्तिबन्धात् अस्तम्भां स्तम्भरहितां तोरणस्रजं बहिद्वरि स्थितां पुष्पमालां वितन्वद्भिः कुर्वद्भिः कलनिर्ह्रादैः मधुरध्वनिना सारसैः तन्नामकैः पक्षिभिः क्वचित् कुत्रचित् उन्नमिताननौ ऊर्ध्वीकृतमुखौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - यदा दिलीपसुदक्षिणे वनमार्गेण गच्छतः स्म तदा आकाशे मधुरध्वनिं कुर्वद्भिः सारसैः स्तम्भरहिता तोरणमाला गगने निर्मिता। तां मालां दर्शं दर्शं ऊर्ध्वीकृतमुखौ तौ दम्पती वसिष्ठतपोवनं गतवन्तौ।

**तात्पर्यार्थः** - कोपि माननीयः जनः गृहं प्रति आगच्छति चेत् गृहस्य बहिर्द्वारि पुष्पमालां स्थापयन्ति गृहस्थाः। अनेन आगतस्य जनस्य अभ्यर्थनं क्रियते। दिलीपः सुदक्षिणा च पुत्रप्राप्तिकामनया तपोवनं प्राप्तवन्तौ। अतः आगतयोः तयोः दम्पत्योः कृते आकाशे सारसपक्षिणः तोरणमालां निर्मीतवन्तः। किन्तु एषा माला सामान्या न भवति। यतः हि सामान्यमाला कमपि स्तम्भम् आधाय तिष्ठति। सारसैः गगने या माला कृता तस्याः कोपि स्तम्भः नासीत्। अतः एव अस्तम्भा तोरणस्रक् इति वर्णयति कविः। तेषां सारसानां ध्वनिः अपि सुमधुरः आसीत्। एतं सुमधुरं ध्वनिं श्रावं श्रावं गगने च सारसपक्षिणां मनोरमां मालां दर्शं दर्शं दिलीपः सुदक्षिणा च तपोवनं गतवन्तौ।

**व्याकरणविमर्शः -**

- श्रेणीबन्धात् - श्रेण्याः बन्धः श्रेणीबन्धः इति षष्ठीतत्पुरुषसमासः, तस्मात् श्रेणीबन्धात्।
- वितन्वद्भिः - विपूर्वकात् तन्-धातोः शतृप्रत्यये वितन्वत् इति प्रातिपदिकं निष्पद्यते। तस्य तृतीयाबहुवचने वितन्वद्भिः इति रूपम्।
- अस्तम्भाम् - अविद्यमानः स्तम्भः यस्याः सा अस्तम्भा इति नञ्बहुव्रीहिसमासः, ताम् अस्तम्भाम्।
- तोरणस्रजम् - तोरणे स्रक् तोरणस्रक् इति सप्तमीतत्पुरुषसमासः, तां तोरणस्रजम्। तोरणं नाम बहिर्द्वारम्।
- कलनिर्ह्रादैः - कलः निर्ह्रादः येषां ते कलनिर्ह्रादाः इति बहुव्रीहिसमासः,तैः कलनिर्ह्रादैः।
- उन्नमिताननौ - उत्पूर्वकात् नम्-धातोः णिचि क्तप्रत्यये उन्नमितम् इति रूपम्। उन्नमितम् आननं ययोः तौ उन्नमिताननौ इति बहुव्रीहिसमासः।

**सन्धिकार्यम् -**

- वितन्वद्भिरस्तम्भाम् - वितन्वद्भिः+अस्तम्भाम्
- क्वचिदुन्नमिताननौ - क्वचित्+उन्नमिताननौ
- **प्रयोगपरिवर्तनम्** - श्रेणीबन्धात् अस्तभां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचित् उन्नमिताननाभ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -७

२७. सारसैः कथं तोरणस्रक् कृता।

२८. तोरणस्रक् कीदृशी आसीत्।

२९. उन्नमिताननौ इति साधयत।

## ७.९) इदानीं मूलपाठम् अवगच्छाम -

**पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ।।४२।।**

**अन्वयः** - प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात् तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - प्रार्थनासिद्धिशंसिनः मनोरथसाफल्यसूचकस्य पवनस्य वायोः अनुकूलत्वात् आनुकूल्यात् तुरगोत्कीर्णैः अश्वखुरेण उक्षिप्तैः रजोभिः धूलिभिः अस्पृष्टालकवेष्टनौ अस्पृष्टौ केशोष्णीषौ ययोः ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - सुदक्षिणादिलीपयोः गमनकाले मनोवासनासिद्धेः सूचकः वायुः अनुकूलतया प्रवहति स्म। अतः एव अश्वखुरैः उक्षिप्ताः धूलयः दिलीपस्य उष्णीषं सुदक्षिणायाः अलकं च न स्पृष्टवन्तः।

**तात्पर्यार्थः** - महाराजः दिलीपः भार्यया सुदक्षिणया सह महर्षेः वसिष्ठस्य तपोवनं गच्छति स्म। महर्षेः उपदेशेन पुत्रलाभः भविष्यति इति आसीत् तस्य मनोवासना। यदा तौ रथेन गतवन्तौ तदा मार्गस्थः वायुः अनुकूलेन प्रवहति स्म। अर्थात् रथः यस्यां दिशि गच्छति स्म तस्याम् एव दिशि वायुः अपि प्रवहति स्म। एवम् अनुकूलवायुप्रवाहः तयोः मनोरथसिद्धिज्ञापकः आसीत् इति कवेः आशयः। अपि च रथवाहकानाम् अश्वानां खुरैः धूलिकणाः उक्षिप्ताः भवन्ति स्म। किन्तु ताः धूलिकणाः दिलीपस्य

उष्णीषं सुदक्षिणायाः अलकं च न स्पृष्टवन्तः। एवं अनुकूलपवनस्य सहायतया तौ निर्मलौ सन्तौ वसिष्ठाश्रमं प्रति गतवन्तौ।

**व्याकरणविमर्शः -**

- अनुकूलत्वात् - अनुकूलस्य भावः अनुकूलत्वम्, तस्मात् अनुकूलत्वात्।
- प्रार्थनासिद्धिशंसिनः - प्रार्थनायाः सिद्धिः प्रार्थनासिद्धिः इति षष्ठीतत्पुरुषसमासः। प्रार्थनासिद्धिं शंसति इति प्रार्थनासिद्धिशंसी, तस्य प्रार्थनासिद्धिशंसिनः।
- तुरगोत्कीर्णैः - तुरगैः उत्कीर्णानि तुरगोत्कीर्णानि इति तृतीयातत्पुरुषसमासः, तैः तुरगोत्कीर्णैः। इदं तृतीयाबहुवचनान्तं रूपम्।
- अस्पृष्टालकवेष्टनौ - न स्पृष्टानि अस्पृष्टानि इति नञ्तत्पुरुषसमासः। अलकाः च वेष्टनं च अलकवेष्टनानि इति इतरेतरद्वन्द्वसमासः। अस्पृष्टानि अलकवेष्टनानि ययोः तौ अस्पृष्टालकवेष्टनौ इति बहुव्रीहिसमासः।

**सन्धिकार्याणि** -

- पवनस्यानुकूलत्वात् - पवनस्य+अनुकूलत्वात्
- रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ - रजोभिः+तुरगोत्कीर्णैः+अस्पृष्टालकवेष्टनौ
- **प्रयोगपरिवर्तनम् -** प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात् तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनाभ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -८

३०. पवनः कीदृशः आसीत्।

३१. पवनेन कीदृशं कार्यद्वयं कृतम्।

३२. रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ इत्यत्र सन्धिविच्छेदं कुरुत।

## ७.१०) इदानीं मूलपाठम् अवगच्छाम -

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।**

**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम्।।४३।।**

**अन्वयः** - सरसीषु वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणम् अरविन्दानाम् आमोदम् उपजिघ्रन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - सरसीषु सरोवरेषु वीचिविक्षोभशीतलं तरङ्गसञ्चलेन शीतलीभूतं स्वनिःश्वासानुकारिणं निजनिःश्वासस्य अनुकरणं कुर्वन्तम् अरविन्दानां पद्मानां आमोदं सौरभम् उपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - सरोवरेषु तरङ्गसम्पर्कात् पद्मानां सौरभं शीतलम् आसीत्। सुदक्षिणादिलीपौ निजनिःश्वासम् अनुकुर्वन्तं तमेव सौरभं घ्राणेन गृह्णन्तौ सन्तौ वसिष्ठाश्रमं प्रति गतवन्तौ।

**तात्पर्यार्थः** - येन वनमार्गेण सुदक्षिणादिलीपौ वसिष्ठाश्रमं गतवन्तौ तस्य मार्गस्य पार्श्वे सरोवराः आसन्। तेषां सरोवराणां तरङ्गाः शीतलाः आसन्। तेषु च सरोवरेषु प्रसूनानि प्रस्फुटितानि आसन्। यदा वायुः सरोवरस्य उपरि प्रवहति स्म तदा पद्मसौरभयुक्तः भवति स्म। किञ्च शीतलतरङ्गसम्पर्कात् वायुः शीतलः अपि भवति स्म। गमनवेलायाम् एतादृशं शीतलं सुरभिं च पवनं तौ घ्रातवन्तौ। स च वायुः तयोः अर्थात् दिलीपस्य सुदक्षिणायाः च निःश्वासम् अनुकरोति स्म। एतेन तयोः निश्वासः अरविन्दात् अपि परिमलभरित आसीत् इति अवगम्यते। एवं प्रस्तुतेन श्लोकेन तयोः निःश्वासं वर्णयति कविः।

**व्याकरणविमर्शः -**

- वीचिविक्षोभशीतलम् - वीचीनां विक्षोभः वीचिविक्षोभः इति षष्ठीतत्पुरुषसमासः। वीचिविक्षोभेण शीतलं वीचिविक्षोभशीतलम् इति तृतीयातत्पुरुषसमासः।
- उपजिघ्रन्तौ - उपपूर्वकात् घ्राधातोः शतृप्रत्यये प्रथमाद्विवचने उपजिघ्रन्तौ इति रूपम्।
- स्वनिःश्वासानुकारिणम् - स्वस्य निःश्वासः स्वनिःश्वासः इति षष्ठीतत्पुरुषसमासः। स्वनिःश्वासम् अनुकरोति इत्यर्थे स्वनिःश्वासानुकारी इति रूपम्, तं स्वनिःश्वासानुकारिणम्।

**सन्धिकार्यम् -**

- सरसीष्वरविन्दानाम् - सरसीषु+अरविन्दानाम्
- आमोदमुपजिघ्रन्तौ - आमोदम्+उपजिघ्रन्तौ
- **प्रयोगपरिवर्तनम्** - सरसीषु अरविन्दानां वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणम् अरविन्दानाम् आमोदः उपजिघ्रद्भ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -९

३३. अरविन्दानां परिमलः कथं शीतलः जातः।

३४. आमोदः कम् अनुकृतवान्।

३५. दम्पत्योः निःश्वासः कीदृशः इति सिध्यति।

## ७.११) इदानीं मूलपाठम् अवगच्छाम -

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।**

**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः।।४४।।**

**अन्वयः** - आत्मविसृष्टेषु यूपचिह्नेषु ग्रामेषु यज्वनाम् अर्घ्यानुपदम् अमोघा आशिषः प्रतिगृह्णन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - आत्मविसृष्टेषु स्वदत्तेषु यूपचिह्नेषु यूपचिह्नयुक्तेषु ग्रामेषु यज्वनां यज्ञं कुर्वतां याज्ञिकानाम् अर्घ्यानुपदम् अर्घ्यग्रहणानन्तरं अमोघाः सफला आशिषः आशीर्वादान् प्रतिगृह्णन्तौ स्वीकुर्वन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - गमनकाले ग्रामेषु याज्ञिकानाम् सफलान् आशीर्वादान् तौ स्वीकृतवन्तौ। ते च ग्रामाः दिलीपेन एव प्रदत्ताः अपि तु यूपचिह्नयुक्ताः आसन्।

**तात्पर्यार्थः** - दिलीपः महान् दाता आसीत्। अतः यज्ञसम्पादनात् परं स याज्ञिकेभ्यः सम्पूर्णं ग्रामम् अपि ददाति स्म। यतो हि सम्पूर्णा अपि धरणी तदधीना आसीत्। तेषु ग्रामेषु यज्ञसमये पशुबलिः भवति। बलेः पूर्वं पशवः यस्मिन् दारुणि बद्धीकृत्य संस्थाप्यन्ते तद् दारु यूपदारु इति प्रसिद्धम्। तेषु ग्रामेषु च प्रायः यज्ञादिकं भवति स्म। अतः बहुत्र यूपदारूणि दृश्यन्ते स्म। तेषु च ग्रामेषु याज्ञिकाः निवसन्ति स्म। दिलीपः गच्छति इति ज्ञात्वा ते मार्गपार्श्वम् आगताः। ते पण्डिताः दम्पतिभ्यां आशीर्वादान् अपि प्रदत्तवन्तः। ते च आशीर्वादाः दिलीपसुदक्षिणयोः अभीष्टसाधकाः आसन्। अतः तौ तान् आशीर्वादान् गृहीत्वा वसिष्ठाश्रमं प्रति गतवन्तौ।

### व्याकरणविमर्शः -

- आत्मविसृष्टेषु - आत्मना विसृष्टाः आत्मविसृष्टाः इति तृतीयातत्पुरुषसमासः, तेषु आत्मविसृष्टेषु।
- यूपचिह्नेषु - यूपाः एव चिह्नानि येषां ते यूपचिह्नाः इति बहुव्रीहिसमासः, तेषु यूपचिह्नेषु।
- यज्वनाम् - अयजन्त इति यज्वानः, तेषां यज्वनाम्। इदं षष्ठीबहुवचनान्तं रूपम्।
- अमोघाः - न मोघाः अमोघाः इति नञ्तत्पुरुषसमासः। इदं द्वितीयैकवचनान्तं पदम्।
- प्रतिगृह्णन्तौ - प्रतिपूर्वकात् ग्रह्-धातोः शतृप्रत्यये प्रथमाद्विवचने प्रतिगृह्णन्तौ इति रूपम्।
- अर्घ्यानुपदम् - अर्घाय इदम् इति अर्थे यत्प्रत्यये अर्घ्यशब्दः निष्पद्यते। पदस्य पश्चात् अनुपदम् इति अव्ययीभावसमासः। अर्घ्यस्य अनुपदम् अर्घ्यानुपदम् इति षष्ठीतत्पुरुषसमासः।
- आशिषः - आशिष्-शब्दस्य द्वितीयाबहुवचने आशिषः इति रूपम्।

### सन्धिकार्यम् -

- ग्रामेष्वात्मविसृष्टेषु - ग्रामेषु+आत्मविसृष्टेषु
- प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः - प्रतिगृह्णन्तौ+अर्घ्यानुपदम्+आशिषः
- **प्रयोगपरिवर्तनम्** - आत्मविसृष्टेषु यूपचिह्नेषु ग्रामेषु यज्वनाम् अर्घ्यानुपदम् अमोघाः आशिषः



प्रतिगृह्णद्भ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -१०

३६. ग्रामाः केन केभ्यः दत्ताः।

३७. यज्वनाम् आशिषः कीदृश्यः आसन्।

३८. प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः इत्यस्य सन्धिविच्छेदं कुरुत।

## ७.१२) इदानीं मूलपाठम् अवगच्छाम -

**हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।**

**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्।।४५।।**

**अन्वयः** - हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**अन्वयार्थः** - हैयङ्गवीनं ह्यस्तनेन गोदोहनेन उत्पन्नं घृतम् आदाय गृहीत्वा उपस्थितान् समीपस्थितान् घोषवृद्धान् आभीरपल्लीवृद्धजनान् वन्यानाम् अरण्ये जातानां मार्गशाखिनां मार्गस्थवृक्षाणां नामधेयानि नामानि पृच्छन्तौ जिज्ञासमानौ ( तौ दम्पती गुरोः वसिष्ठस्य आश्रमं जग्मतुः)।

**सरलार्थः** - दिलीपः सुदक्षिणा च मार्गे बहून् वृक्षान् दृष्टवान् येषां नामानि तैः न ज्ञायते। यदा घोषवृद्धाः सद्योजातं घृतं स्वीकृत्य दिलीपस्य समीपम् आगतवन्तः तदा दिलीपःतेषां वृक्षाणां नामानि तान् पृष्टवान्।

**तात्पर्यार्थः** - राजा वृद्धानां सेवकः भवेत् इति मनुः उक्तवान्। अतः दिलीपः अपि आभीरपल्ल्यां वसतः वृद्धान् प्रति अत्यन्तं श्रद्धाशीलः आसीत्। राजा वनम् अतिक्रम्य घोषपल्लीं प्रविष्टवान्। महाराजः क्षितीश्वरः दिलीपः आगतः इति अवलोक्य घोषपल्लीस्थाः वृक्षाः हैयङ्गवीनं स्वीकृत्य समुपस्थिताः आसन्। ह्यः गोदोहनेन यद् दुग्धम् उत्पन्नम् तेन दुग्धेन निर्मितं घृतं हैयङ्गवीनम् इति कथ्यते। दिलीपः समुपस्थितान् तान् अवलोक्य अतीव प्रसन्नः जातः। मार्गे स कांश्चन वृक्षान् दृष्टवान् येषां नामानि स न जानन्ति। घोषवृद्धाः अस्मिन् विषये अधिकज्ञानसम्पन्नः आसीत् इति दिलीपः ज्ञातवान्। अतः दिलीपः वृक्षनामानि तेभ्यः ज्ञात्वा वसिष्ठाश्रमं प्रति निर्गतवान् इति तात्पर्यम्।

**व्याकरणविमर्शः -**

- आदाय - आङ्पूर्वकात् दाधातोः ल्यप्प्रत्यये आदाय इति रूपम्।
- घोषवृद्धान् - घोषे वृद्धाः घोषवृद्धाः इति सप्तमीतत्पुरुषसमासः, तान् घोषवृद्धान्।
- उपस्थितान् - उपपूर्वकात् स्थाधातोः क्तप्रत्यये उपस्थित इति प्रातिपदिकं निष्पद्यते। तस्य

द्वितीयाबहुवचने उपस्थितान् इति रूपम्।

- नामधेयानि - नामानि एव तानि इति अर्थे नामशब्दात् धेयप्रत्यये नामधेयानि इति रूपम्। इदं द्वितीयाबहुवचनान्तं पदम्।
- पृच्छन्तौ - प्रच्छ्-धातोः शतृप्रत्यये प्रथमाद्विवचने पृच्छन्तौ इति रूपम्।
- वन्यानाम् - वने भवाः वन्याः, तेषां वन्यानाम्।
- मार्गशाखिनाम् - मार्गे शाखिनः मार्गशाखिनः इति सप्तमीतत्पुरुषसमासः, तेषां मार्गशाखिनाम्।

**सन्धिकार्याणि** -

- हैयङ्गवीनमादाय - हैयङ्गवीनम्+आदाय
- घोषवृद्धानुपस्थितान् - घोषवृद्धान्+उपस्थितान्
- **प्रयोगपरिवर्तनम्** - हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छद्भ्यां (ताभ्यां दम्पतीभ्यां गुरोः वसिष्ठस्य आश्रमः जग्मे)।

## पाठगतप्रश्नाः -११

३९. किं नाम हैयङ्गवीनम्।

४०. तौ मार्गवृक्षाणां नामानि के उक्तवन्तः।

४१. घोषवृद्धाः किम् आदाय समुपस्थिताः आसन्।

४२. सुदक्षिणादिलीपौ कुत्र आगतवन्तौ-

१) ब्राह्मणग्रामम् २) जलाशयम् ३) यज्ञस्थानम् ४) आभीरग्रामम्

## ७.१३) इदानीं मूलपाठम् अवगच्छाम -

**काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव।।४६।।**

**अन्वयः** - व्रजतोः शुद्धवेषयोः तयोः हिमनिर्मुक्तयोः चित्राचन्द्रमसोः इव योगे (सति) कापि अभिख्या आसीत्।

**अन्वयार्थः** - व्रजतोः गच्छतोः शुद्धवेषयोः पवित्रवस्त्रयोः तयोः सुदक्षिणादिलीपयोः हिमनिर्मुक्तयोः तुषाररहितयोः चित्राचन्द्रमसोः इव चित्रानामकनक्षत्रचन्द्रयोः इव योगे संयोगे सति कापि काचित् अभिख्या शोभा आसीत् अभवत्।

**सरलार्थः** - वसिष्ठाश्रमं गच्छन्तौ पवित्रवस्त्रधारिणौ सुदक्षिणादिलीपौ शोभायुक्तौ आस्ताम्। यथा संयोगे सति चित्रानक्षत्रचन्द्रौ च शोभायुक्तौ भवतः।

**तात्पर्यार्थः** - दिलीपः सुदक्षिणा च पवित्रवस्त्रं धृत्वा वसिष्ठाश्रमं प्रति गतवन्तौ। अत्र गच्छतोः तयोः वर्णनाय कविः एकम् उपमानम् अपि प्रदत्तवान्। चैत्रमासस्य पूर्णिमायां चित्रानक्षत्रं चन्द्रेण सह मिलति। यदा चित्राचन्द्रौ मिलतः तदा तौ अपूर्वशोभायुक्तौ दृश्येते। अत्र सुदक्षिणां चित्रानक्षत्रेण दिलीपं च चन्द्रेण सह उपमाति कविः। सुदक्षिणा दिलीपः च एकं रथम् आरुह्य तपोवनं प्रति गतवन्तौ। अतः तयोः योगे अपि अपूर्वा शोभा आसीत्। यथा चित्राचन्द्रमसोः योगे शोभा तिष्ठति। एवं संयुक्तयोः तयोः वर्णनेन सन्तानलाभे तयोः अनुकूलता एव प्रदर्शिता कविना। अर्थात् येन कारणेन ते तपोवनं गतवन्तौ तत् अवश्यं सिद्धं भविष्यति इति अभिप्रायः। अनेन श्लोकेन कालिदासस्य ज्योतिश्शास्त्रज्ञानं सम्यक् आसीत् इति स्पष्टं भवति।

**व्याकरणविमर्शः -**

व्रजतोः - व्रज्-धातोः शतृप्रत्यये व्रजत् इति प्रातिपदिकं निष्पद्यते। तस्य षष्ठीद्विवचने व्रजतोः इति रूपम्। इदं षष्ठीद्विवचनान्तं पदम्।

शुद्धवेषयोः - शुद्धः वेषः ययोः तौ शुद्धवेषौ इति बहुव्रीहिसमासः, तयोः शुद्धवेषयोः।

हिमनिर्मुक्तयोः - हिमात् निर्मुक्तौ हिमनिर्मुक्तौ इति पञ्चमीतत्पुरुषसमासः, तयोः हिमनिर्मुक्तयोः।

चित्राचन्द्रमसोः - चित्रा च चन्द्रमाः च चित्राचन्द्रमसौ इति इतरेतरद्वन्द्वसमासः, तयोः चित्राचन्द्रमसोः।

**सन्धिकार्यम्** -

- काप्यभिख्या - कापि+अभिख्या
- तयोरासीद् - तयोः+आसीद्
- हिमनिर्मुक्तयोर्योगे - हिमनिर्मुक्तयोः+योगे
- चित्राचन्द्रमसोरिव - चित्राचन्द्रमसोः+इव
- **प्रयोगपरिवर्तनम्** - व्रजतोः शुद्धवेषयोः तयोः हिमनिर्मुक्तयोः चित्राचन्द्रमसोः इव योगे (सति) कया अपि अभिख्यया अभूयत।

**अलङ्कारालोचना**- अत्र दिलीपः चन्द्रेण उपमितः। राज्ञी सुदक्षिणा चित्रानक्षत्रेण उपमिता। इव इति उपमावाचकः शब्दः वर्तते। यथा चित्राचन्द्रमसोः योगे अपूर्वा शोभा तिष्ठति तथा शोभा सुदक्षिणादिलीपयोः योगे अपि आसीत् इति सादृश्यम्। अतः अत्र उपमालङ्कारः अस्ति।

## पाठगतप्रश्नाः -१२

४३. चित्राचन्द्रमसोः योगः कदा भवति।

४४. अभिख्या नाम किम्।

४५. अत्र सुदक्षिणादिलीपौ काभ्याम् उपमितौ।

४६. अत्र दिलीपः केन उपमितः-

१) चन्द्रेण २) चित्रानक्षत्रेण ३) नक्षत्रेण ४) सूर्येण

४७. हिमनिर्मुक्तयोः इत्यत्र कः समासः-

१) तृतीयातत्पुरुषः २) चतुर्थीतत्पुरुषः ३) पञ्चमीतत्पुरुषः ४) सप्तमीतत्पुरुषः

## ७.१४) इदानीं मूलपाठम् अवगच्छाम -

**तत्तद् भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः।**

**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः।।४७।।**

**अन्वयः** - प्रियदर्शनः बुधोपमो भूमिपतिः पत्न्यै तत्तद् दर्शयन् लङ्घितम् अपि अध्वानं न बुबुधे।

**अन्वयार्थः** - प्रियदर्शनः अभीष्टदर्शनः बुधोपमः पण्डितसदृशः भूमिपतिः राजा दिलीपः पत्न्यै भार्यायै सुदक्षिणायै तत्तद् अद्भूतं वस्तु दर्शयन् अवलोकयन् लङ्घितम् अपि अतिवाहितम् अपि अध्वानं मार्गं न बुबुधे न ज्ञातवान्।

**सरलार्थः** - प्रियदर्शनः बुधसदृशः राजा दिलीपः यदा वसिष्ठाश्रमं प्रति गच्छति स्म तदा राज्यस्य कुत्र किम् अस्ति इत्यादिकं सर्वं भार्यां सुदक्षिणां दर्शितवान्। तेन सः अतिक्रान्तं मार्गम् अपि न ज्ञातवान्।

**तात्पर्यार्थः** - दिलीपः सुदर्शनः पुरुषः आसीत्। अतः सर्वे एव तं द्रष्टुम् इच्छन्ति स्म। अतः स प्रियदर्शनः इति कविः वर्णयति। चन्द्रस्य पुत्रः भवति बुधः। राजा दिलीपः बुधग्रहसदृशः आसीत्। अथवा बुधः इत्यस्य अर्थः पण्डितः भवति। तेन दिलीपः पण्डितः आसीत् इति सूच्यते। दिलीपः स्वराज्यस्य विषये सर्वं जानाति स्म। अत एव स यदा वसिष्ठाश्रमं गतवान् तदा राज्ये किं कुत्र अस्ति इत्येतत् सर्वं सुदक्षिणायाः सविधे वर्णितवान्। एवं वर्णयन् स बहुमार्गम् अतिक्रान्तवान्। किन्तु स एतावदेकाग्रतया वर्णयति स्म यत् कियान् मार्गः अतिक्रान्तः इति न ज्ञातवान्। एतेन दिलीपः समीचीनः वक्ता आसीत् इति अपि ज्ञायते।

**व्याकरणविमर्शः -**

- भूमिपतिः - भूमेः पतिः भूमिपतिः इति षष्ठीतत्पुरुषसमासः।
- दर्शयन् - दृश्धातोः णिच्प्रत्यये दृशिधातुः निष्पद्यते। ततः शतृप्रत्यये प्रथमैकवचने दर्शयन् इति रूपम्।
- प्रियदर्शनः - प्रियं दर्शनं यस्य सः प्रियदर्शनः इति बहुव्रीहिसमासः।
- अध्वानम् - अध्वन्-शब्दस्य द्वितीयैकवचने अध्वानम् इति रूपम्।
- बुबुधे - बुध्-धातोः लिटि प्रथमपुरुषैकवचने बुबुधे इति रूपम्।
- बुधोपमः - बुधः उपमा यस्य स बुधोपमः इति बहुव्रीहिसमासः।

**सन्धिकार्यम् -**

- लङ्घितमध्वानम् - लङ्घितम्+अध्वानम्
- **प्रयोगपरिवर्तनम्** - प्रियदर्शनेन बुधोपमेन भूमिपतिना पत्न्यै तत्तद् दर्शयता लङ्घितः अपि अध्वा न बुबुधे।

## पाठगतप्रश्नाः -१३

४८. दिलीपः अतिक्रान्तं मार्गं कथं न ज्ञातवान्।

४९. बुबुधे इति रूपं कस्य धातोः कस्मिन् लकारे भवति।

५०. बुधः कस्य पुत्रः-

१) सूर्यस्य २) भूमेः ३) चन्द्रस्य ४) शुक्रस्य

## ७.१५) इदानीं मूलपाठम् अवगच्छाम -

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।**

**सायं संयमिनस्तस्य महर्षेर्महिषीसखः।।४८।।**

**अन्वयः** - दुष्प्रापयशाः श्रान्तवाहनः महिषीसखः स सायं संयमिनः तस्य महर्षेः आश्रमं प्रापत्।

**अन्वयार्थः** - दुष्प्रापयशाः दुर्लभकीर्तिमान् श्रान्तवाहनः क्लान्ततुरङ्गः महिषीसखः सुदक्षिणासहचरः सः दिलीपः सायं सन्ध्याकाले संयमिनः नियमं पालयतः तस्य महर्षेः वसिष्ठस्य आश्रमं तपोवनं प्रापत् प्राप्तवान्।

**सरलार्थः** - दुर्लभयशसः अधिकारी राजा दिलीपः पुत्रप्राप्तिकाम्यया वसिष्ठाश्रमं प्रति निर्गतवान्। अन्तिमे च स यदा सन्ध्याकाले संयमिमहर्षेः वसिष्ठस्य आश्रमं प्राप्तवान् तदा तस्य रथवाहकाः अश्वाः अपि श्रान्ताः आसन्।

**तात्पर्यार्थः** - इतः पूर्वं कविः सन्तानप्राप्तये दिलीपस्य वसिष्ठाश्रमं प्रति आगमनं मार्गे ताभ्यां दृष्टं प्रकृतिसौन्दर्यम् इत्यादिकं सर्वं वर्णितवान्। एवं बहुकालात् परं यदा तौ वसिष्ठाश्रमं प्राप्तवन्तौ तदा सन्ध्याकालः आसीत्। मार्गश्रमकारणात् स्यन्दनवाहकाः अश्वाः अपि अतीव क्लान्ताः आसन्। वसिष्ठः संयमी आसीत्। संयमिनः एव ध्यानयोगेन कालत्रयं द्रष्टुं समर्थाः भवन्ति। अतः एव दिलीपः पुत्रलाभाय तस्य तपोवनम् आगतवान्। यतो हि दिलीपः जानाति स्म यत् कुलगुरुः वसिष्ठः ध्यानयोगेन सन्तानप्राप्तिप्रतिबन्धकं ज्ञास्यति। किञ्च तत् निराकर्तुं अवश्यं कञ्चित् उपायं वदिष्यति। अतः एव दिलीपस्य भार्यया सुदक्षिणया सह वसिष्ठतपोवनं प्रति आगमनम्।



**व्याकरणविमर्शः -**

- दुष्प्रापयशाः - दुष्प्रापं यशः यस्य स दुष्प्रापयशाः इति बहुव्रीहिसमासः।
- प्रापत् - प्रपूर्वकात् आप्-धातोः लुङि प्रथमपुरुषैकवचने प्रापत् इति रूपम्।
- श्रान्तवाहनः - श्रान्तानि वाहनानि यस्य सः श्रान्तवाहनः इति बहुव्रीहिसमासः।
- संयमिनः - संयमः अस्ति यस्य स संयमी, तस्य संयमिनः।
- महिषीसखः - महिष्याः सखा महिषीसखः इति षष्ठीतत्पुरुषसमासः।
- महर्षेः- महान् चासौ ऋषिः च महर्षिः इति कर्मधारयसमासः, तस्य महर्षेः। इदं षष्ठ्येकवचनान्तं रूपम्।

**सन्धिकार्यम् -**

- प्रापदाश्रमम् - प्रापत्+आश्रमम्
- संयमिनस्तस्य - संयमिनः+तस्य
- महर्षेर्महिषीसखः - महर्षेः+महिषीसखः
- **प्रयोगपरिवर्तनम्** - दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन सायं संयमिनः तस्य महर्षेः आश्रमः प्रापि।

## पाठगतप्रश्नाः -१४

५१. दिलीपः कदा वसिष्ठाश्रमं प्राप्तवान्।

५२. महिषीसखः इत्यस्य किं विग्रहवाक्यं समासनाम च किम्।

## पाठसारः

तदनन्तरं दिलीपः ब्रह्माणं पूजयित्वा कुलगुरोः वसिष्ठस्य आश्रमं रथेन गतवान्। यथा वर्षाकाले मेघारूढः ऐरावतः विद्युत्साहचर्यं लभते तथा रथारूढः दिलीपः सुदक्षिणासाहचर्यं लब्धवान्। आश्रमपरिसरः शान्तः भवति। यदि तत्र अधिकाः जनाः गच्छन्ति तर्हि आश्रमे शान्तिभङ्गः स्यात्। अतः तौ अल्पसेनापरिवृतौ एव गतवन्तौ। यदा तौ वनमार्गेण गतवन्तौ तदा वायुः तौ सेवते स्म। स वायुः शालवृक्षरसजन्येन गन्धेन युक्तः पुष्परेणूनां विक्षेपकः विपिनस्थवृक्षान् कम्पयति स्म। मयूराः रथध्वनिं श्रुत्वा मुखम् उन्नमितवन्तः। रथध्वनिं मेघध्वनिं मत्वा ते षड्जस्वरेण केकारवम् अकुर्वन्। ताः केकाः श्रावं श्रावं तौ दम्पती वसिष्ठाश्रमं गतवन्तौ। यदा रथः वनमार्गेण गच्छति स्म तदा मार्गस्थमृगाः समीपात् मार्गं त्यजन्ति स्म। तेषु मृगद्वन्द्वेषु तौ दम्पती परस्परं नेत्रसादृश्यं दृष्टवन्तौ। गगने सारसाः पङ्क्तिबद्धाः सन्तः स्तम्भरहितां तोरणमालां निर्मीतवन्तः। तां तोरणमालां तौ दम्पती दृष्टवन्तौ। यस्यां दिशि रथः गच्छति स्म तस्याम् एव दिशि वायुः प्रवहति स्म। एवम् अनुकूलः पवनः तयोः मनोरथः अवश्यं सफलः भविष्यति

इति सूचयति स्म। रथवाहकानाम् अश्वानां खुरैः उक्षिप्ताः धूलिकणाः तौ न स्पृष्टवन्तौ। सरोवरेषु उत्पन्नानाम् अरविन्दानां परिमलः तरङ्गसञ्चलेन शीतलः आसीत्। तादृशः आमोदः सुदक्षिणादिलीपयोः निःश्वासम् अनुकृतवान्। तेन तयोः निःश्वासः अरविन्दाद् अपि परिमलभरितः आसीत् इति सूच्यते। ततः दिलीपदत्तेषु यूपचिह्नयुक्तेषु ग्रामेषु प्रविष्टवन्तौ। तत्र च यज्वनां सफलान् आशीर्वादान् तौ गृहीतवन्तौ। आभीरपल्लीषु घोषवृद्धाः हैयङ्गवीनम् आदाय समुपस्थिताः आसन्। तेभ्यः च वन्यानां मार्गवृक्षाणां नामानि ज्ञातवान् दिलीपः। चैत्रमासस्य पूर्णिमायां चित्रानक्षत्रचन्द्रौ च संयुक्तौ भवतः। तदा तयोः योगे यथा शोभा तिष्ठति तथा शोभा सुदक्षिणादिलीपयोः योगे अपि आसीत्। गमनकाले दिलीपः मार्गदृश्यानि पत्नीं सुदक्षिणां दर्शितवान्। एवं कुर्वन् सः अतिवाहितम् अपि मार्गं न ज्ञातवान्। अन्ते च सायंकाले तौ दम्पती सुदक्षिणादिलीपौ यदा महर्षेः वसिष्ठस्य आश्रमं प्राप्तवन्तौ तदा रथवाहकाः अश्वाः अपि श्रान्ताः आसन्।

## पाठान्तप्रश्नाः -

१. समासेन पाठसारं वर्णयत।

२. एकं रथं समारूढौ सुदक्षिणादिलीपौ कथं वर्णितौ कविना।

३. प्रकृतिवर्णने पवनं कथं वर्णितवान् कविः।

४. मयूराणां विषये कविः किम् उक्तवान्।

५. परस्पराक्षसादृश्यम् इत्यादिश्लोकं वर्णयत।

६. आमोदः तयोः निश्वासम् अनुकृतवान् इति कथनेन कविः किं प्रतिपादयितुम् इच्छति।

७. दिलीपेन दत्ताः ग्रामाः कीदृशाः आसन्- सविस्तारं वर्णयत।

८. सुदक्षिणादिलीपयोः वसिष्ठाश्रमगमनं वर्णयत।

९. स्तम्भयोः लिखितान् परस्परसम्बद्धान् मेलयत।

| **स्तम्भः-क** | **स्तम्भः-ख** |
|---|---|
| १. बुबुधे | १. सुदक्षिणादिलीपौ |
| २. सुखस्पर्शैः | २. केकाः |
| ३. मार्गशाखिनाम् | ३. मृगद्वन्द्वम् |
| ४. षड्जसंवादिनीः | ४. पवनैः |
| ५. शोभा | ५. अवगतवान् |
| ६. महर्षिः | ६. वन्यानाम् |
| ७. परस्पराक्षिसादृश्यम् | ७. अभिख्या |
| ८. चित्राचन्द्रमसौ | ८. वसिष्ठः |

उत्तरम् - १-५,२-४,३-६,४-२,५-७,६-८,७-३,८-१.

## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. सुदक्षिणादिलीपौ पुत्रकाम्यया वसिष्ठाश्रमं गतवन्तौ।

२. जाया च पतिः च इति विग्रहे समासे कृते दम्पती इति रूपम्। अत्र एकशेषसमासः भवति। इदं नित्यद्विवचनान्तम्।

३. वसिष्ठः दिलीपस्य कुलगुरुः आसीत्।

४. ४

५. १

### उत्तराणि-२

६. दिलीपस्य रथः स्निग्धगम्भीरनिर्घोषः आसीत्।

७. सुदक्षिणादिलीपौ विद्युदैरावताभ्याम् उपमितौ।

८. प्रावृषि भवः प्रावृषेण्यः, तं प्रावृषेण्यम्। इदं द्वितीयैकवचनान्तं रूपम्। वर्षर्तौ जातम् इत्यर्थः।

९. २

### उत्तराणि-३

१०. सुदक्षिणादिलीपौ अनुभावविशेषात् सेनापरिवृतौ इव।

११. मा भूत् इत्यस्य मा अभूत् इत्येव प्रकृतं स्वरूपम्। अत्र माङ्योगात् न माङ्योगे इति सूत्रेण अडागमः न भवति। मा अस्तु इत्यर्थः।

१२. आश्रमपीडा मा भूत् इति तौ परिमेयपुरःसरौ।

### उत्तराणि-४

१३. सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः पवनैः तौ सेव्यमानौ आस्ताम्।

१४. शालस्य निर्यासः शालनिर्यासः इति षष्ठीतत्पुरुषसमासः। शालनिर्यासस्य गन्धः शालनिर्यासगन्धः इति षष्ठीतत्पुरुषसमासः। शालनिर्यासगन्धः अस्ति येषां ते शालनिर्यासगन्धिनः, तैः शालनिर्यासगन्धिभिः।

१५. पुष्परेणूत्किरैः+वातैः+आधूतवनराजिभिः

१६. ३

१७. १

### उत्तराणि-५

१८. मयूराः षड्जस्वरेण संवदन्ते स्म।

१९. ते रथचक्रजन्यशब्दं श्रुत्वा मुखम् उन्नमितवन्तः।

२०. रथस्य नेमयः रथनेमयः इति षष्ठीतत्पुरुषसमासः। रथनेमीनां स्वनाः रथनेमिस्वनाः इति षष्ठीतत्पुरुषसमासः। ऊर्ध्वं मुखं येषां ते उन्मुखाः इति बहुव्रीहिसमासः। रथनेमिस्वनैः उन्मुखाः रथनेमिस्वनोन्मुखाः इति तृतीयातत्पुरुषसमासः, तैः रथनेमिस्वनोन्मुखैः।

२१. १

२२. २

### उत्तराणि-६

२३. मृगाः रथे समीपम् आगते सति मार्गं त्यजन्ति स्म।

२४. तौ परस्परलोचनसादृश्यं मृगद्वन्द्वेषु अवलोकितवन्तौ।

२५. न दूरम् अदूरम् इति नञ्तत्पुरुषसमासः। उज्झितं वर्त्म यैः तानि उज्झितवर्त्मानि इति बहुव्रीहिसमासः। अदूरं यथा तथा उज्झितवर्त्मानि अदूरोज्झितवर्त्मानि इति सुप्सुपासमासः, तेषु अदूरोज्झितवर्त्मसु।

२६. ३

### उत्तराणि-७

२७. सारसैः पङ्क्तिबन्धात् तोरणस्रक् कृता।

२८. तोरणस्रक् स्तम्भरहिता आसीत्।

२९. उत्पूर्वकात् नम्-धातोः णिचि क्तप्रत्यये उन्नमितम् इति रूपम्। उन्नमितम् आननं ययोः तौ उन्नमिताननौ इति बहुव्रीहिसमासः।

### उत्तराणि-८

३०. पवनः अनुकूलः आसीत्।

३१. पवनेन मनोरथसाफल्यस्य सूचनं तुरगोत्कीर्णानां धूलीनाम् अपसारणं च इति कार्यद्वयं कृतम्।

३२. रजोभिः+तुरगोत्कीर्णैः+अस्पृष्टालकवेष्टनौ

### उत्तराणि-९

३३. अरविन्दानां परिमलः तरङ्गसञ्चलेन शीतलः जातः।

३४. आमोदः सुदक्षिणादिलीपयोः निःश्वासम् अनुकृतवान्।

३५. दम्पत्योः निःश्वासः अरविन्दाद् अपि परिमलभरितः इति सिध्यति।

### उत्तराणि-१०

३६. ग्रामाः दिलीपेन याज्ञिकब्राह्मणेभ्यः दत्ताः।

३७. यज्वनाम् आशिषः अमोघाः आसन्।

३८. प्रतिगृह्णन्तौ+अर्घ्यानुपदम्+आशिषः



### उत्तराणि-११

३९. ह्यः गोदोहनेन यद् दुग्धम् उत्पन्नम् तेन दुग्धेन निर्मितं घृतं हैयङ्गवीनम् इति कथ्यते।

४०. तौ मार्गवृक्षाणां नामानि घोषवृद्धाः उक्तवन्तः।

४१. घोषवृद्धाः हैयङ्गवीनम् आदाय समुपस्थिताः आसन्।

४२. ४

### उत्तराणि-१२

४३. चित्राचन्द्रमसोः योगे चैत्रमासस्य पूर्णिमायां भवति।

४४. अभिख्या नाम शोभा।

४५. अत्र सुदक्षिणादिलीपौ चित्राचन्द्राभ्याम् उपमितौ।

४६. १

४७. ३

### उत्तराणि-१३

४८. दिलीपः पत्न्यै सुदक्षिणायै मार्गदृश्यानि दर्शयन् अतिक्रान्तं मार्गं न ज्ञातवान्।

४९. बुध्-धातोः लिटि प्रथमपुरुषैकवचने बुबुधे इति रूपम्।

५०. ३

### उत्तराणि-१४

५१. दिलीपः सायंकाले वसिष्ठाश्रमं प्राप्तवान्।

५२. महिष्याः सखा महिषीसखः इति षष्ठीतत्पुरुषसमासः।



## सन्दर्भग्रन्थसूचिः -


- कालिदासः। रघुवंशम्(चन्द्रकलाख्यया व्याख्यया हिन्द्यनुवादेन च विभूषितम्)। रेग्मी-आचार्यशेषराजशर्मा(व्याख्याकारः)। २००९। चौखम्बा-सुरभारती-प्रकाशन। वाराणसी।
- कालिदासः। रघुवंशम्। वन्द्योपाध्याय-उदयचन्द्रः, वन्द्योपाध्याय-अनिता( व्याख्याकर्तारौ)। २००३। संस्कृत-वुक-डिपो। कलिकाता।


॥ इति सप्तमः पाठः ॥

## ८

# मोहमुद्गरः रामगुणकीर्तनं च

## प्रस्तावना

सर्वेषु दर्शनेषु अत्यन्तं प्रसिद्धम् उत्कृष्टतमं च अद्वैतदर्शनम्। दर्शनं नाम किमिति प्रश्नस्य उत्तरं तावद् दृश्यते अनेन इति दर्शनम् इति। दृश्यते साक्षात्क्रियते अनुभूयते मूलतत्त्वम् अनेन इति दर्शनमिति दृश्-धातोः करणार्थे ल्युट्प्रत्यये दर्शनशब्दो निष्पन्नः। अद्वैतदर्शनस्य मूलं तत्त्वं भवति "सर्वं खल्विदं ब्रह्म" इति। अर्थाद् यत्किञ्चित्सर्वमेव ब्रह्म। इदं हि जगत् ब्रह्मणः विवर्तभूतं यथा रज्ज्वां सर्पभ्रमे सर्पः रज्जोः विवर्तभूतः भवति। वस्तुतः तत्र रज्जुरेवास्ति किन्तु सर्पः दृश्यते, एवमेव वस्तुतः सर्वं ब्रह्मैव। जीवस्तु अज्ञानोपहितं ब्रह्म। जीवब्रह्मणोरैक्यस्य अपरोक्षानुभूतिः एवास्य अद्वैतदर्शनस्य मूलम्। अद्वैतदर्शनस्य आचार्येषु मूर्धन्यतां भजन्ते परमपूज्यचरणाः श्रीशङ्कराचार्याः। ते भाष्यग्रन्थानां प्रणयनेन अद्वैतसिद्धान्तान् प्रतिष्ठापितवन्तः। तद्विरचितम् उपनिषद्भाष्यं ब्रह्मसूत्रभाष्यं गीताभाष्यं च अद्वैतवेदान्तस्य स्तम्भरूपम्। ते न केवलं भाष्यविरचनेन अपि तु स्तोत्रमाध्यमेन अपि अद्वैतवेदान्तम् उपदिष्टवन्तः। तद्विरचितेषु स्तोत्रेषु अन्यतमं भवति द्वादशपञ्जरिकास्तोत्रम्। तस्यैव मोहमुद्गरः इत्यभिधानम्। अत्र आचार्याणां श्लोकसंरचने अतीव सुललिता सरला च शैली दृश्यते। एतादृश्या सरलया सुललितया शैल्या एव ते अद्वैतसिद्धान्तान् स्त्रोत्रे अस्मिन् प्रतिपादितवन्तः। अस्य स्तोत्रस्य श्लोकानाम् सरलवाक्यैः अन्वयार्थज्ञानम् अस्मिन् पाठे भविष्यति।

यस्य जनस्य कृत्याकृत्यविवकः अस्ति स एव संसारे परां प्रतिष्ठां प्राप्नोति। कृत्याकृत्यविवेकवत्सु सदाचारपरायणेषु सत्यनिष्ठेषु जनेषु मूर्धन्यतां भजते पुरुषोत्तमः श्रीरामचन्द्रः। तस्य जीवनं यद्यपि विपन्मुक्तं नासीत् परन्तु स कदापि सत्यवादितां न त्यक्तवान्। कथं जीवने स्थेयम् इत्यस्मिन् विषये तस्य आचरणमेव प्रमाणम्। तस्मात् तस्य अमरं चरितम् आश्रित्य महाकविः बाल्मीकिः रामायणम् इति महाकाव्यं विरचितवान्। आदिकविः बाल्मीकिः, अतः रामायणम् आदिकाव्यम् इति प्रसिद्धम्। रामायणस्य सप्त काण्डानि भवन्ति - बालकाण्डम्, अयोध्याकाण्डम्, अरण्यकाण्डम्, किष्किन्धाकाण्डम्, सुन्दरकाण्डम्, युद्धकाण्डम् उत्तरकाण्डं चेति। तेषु काण्डेषु अरण्यकाण्डे श्रीरामचन्द्रस्य गुणवर्णना बाल्मीकिना विहिताः। येषु श्लोकेषु श्रीरामचन्द्रगुणवर्णना संवृत्ता तेषु केचन चिताः श्लोकाः अस्मिन् पाठे स्वीकृताः। तेषे श्लोकेषु वर्णितां श्रीरामचन्द्रगुणवर्णनाम् अस्मिन् पाठे पश्यामः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- स्तोत्रसाहित्यं जानीयात्।
- मोहमुद्गरः इति स्त्रोत्रमाध्यमेन अद्वैतवेदान्ततत्त्वानि जानीयात्।
- श्रीरामगुणवर्णना इत्यंशस्य अध्ययनेन रामचन्द्रस्य गुणान् जानीयात्।
- श्लोकानाम् अन्वयार्थः समासं च ज्ञातुं शक्नुयात्।
- विविधान् नूतनान् शब्दान् जानीयात्।
- विविधशब्दानाम् प्रयोगस्थलानि ज्ञात्वा स्वयं भाषाव्यवहारे तेषां शब्दानाम् उचितं प्रयोगं कर्तुं शक्नुयात्।

# मोहमुद्गरस्तोत्रम्

## ८.१) सम्पूर्णः मूलपाठः - मोहमुद्गरस्तोत्रम्

**भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते।**
**सम्प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे।। १।।**
**मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।**
**यल्लभसे निजकर्मोत्पात्तं वित्तं तेन विनोदय चित्तम्।। २।।**
**अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।**
**पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः।। ३।।**
**का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः।**
**कस्य त्वं कः कुतः आयातस्तत्त्वं चिन्तय यदिदं भ्रातः।। ४।।**
**मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम्।**
**मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा।। ५।।**
**कामं क्रोधं लोभं मोहं त्यक्त्वात्मानं भावय कोऽहम्।**
**आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः।। ६।।**
**सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः।**
**सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः।। ७।।**
**शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ।**
**भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम्।। ८।।**

त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः।
सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम्।। ९।।
प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम्।
जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम्।। १०।।
नलिनीदलगतसलिलं तरलं तद्वज्जीवितमतिशयचपलम्।
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम्।। ११।।
का तेऽष्टादशदेशे चिन्ता वातुल तव किं नास्ति नियन्ता।
यस्त्वां हस्ते सुदृढनिबद्धं बोधयति प्रभवादिविरुद्धम्।। १२।।
गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद् भव मुक्तः।
सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम्।। १३।।
द्वादशपञ्जरिकामय एष शिष्याणां कथितो ह्युपदेशः।
येषां चित्ते नैव विवेकस्ते पच्यन्ते नरकमनेकम्।। १४।।

## ८.२) साम्प्रतं मूलपाठमवगच्छाम (मोहमुद्गरः) - १

भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते।
सम्प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे।। १।।
मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।
यल्लभसे निजकर्मोत्पात्तं वित्तं तेन विनोदय चित्तम्।। २।।
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः।। ३।।
का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः।
कस्य त्वं कः कुतः आयातस्तत्त्वं चिन्तय यदिदं भ्रातः।। ४।।

**अन्वयार्थः -**

सन्निहिते समीपे मरणे मृत्यौ सम्प्राप्ते प्राप्तौ अपि नहि नहि नैव केनापि प्रकारेण डुकृञ् करणे व्याकरणादिशास्त्रज्ञानं रक्षति परमपदं प्रापयति। तस्मात् हे मूढमते मूढा मतिर्यस्य स मूढमतिः, तस्य सम्बोधने मूढमते विवेकविहीने गोविन्दं परमेश्वरं भज आराधय, गोविन्दं परमेश्वरं भज आराधय, गोविन्दं परमेश्वरं भज आराधय।१।

मूढ हे विवेकहीन, धनागमतृष्णां धनस्य अर्थस्य आगमरूपां तृष्णाम् आशां जहीहि परित्यज। सद्बुद्धिं सच्चिन्तनं कुरु सम्पादय, मनसि मानसे वितृष्णां विषयेभ्यः वैराग्यं कुरु सम्पादय। यत् यथावत् निजकर्मोत्पात्तं निजकर्मणा स्वबलेन उपात्तम् उपार्जितं वित्तं धनं लभसे प्राप्नोषि तेन तावता एव चित्तं मनः विनोदय आनन्दय।२।

अर्थं वित्तम् अनर्थं विपदः कारणम् इति नित्यं सर्वदा भावय चिन्तय। यतो यस्मात् कारणात् ततः तस्माद् वित्तात् सुखलेशः अपि सुखस्य आभासः अपि नास्ति न भवति इति सत्यं यथार्थमेव। तत्र कारणं कथयति - पुत्राद् अपि आत्मजाद् अपि धनभाजां धनिकानां भीतिः "अयं पुत्रः मे मम सर्वस्वम् अपहरेत्" इत्यादिभयं भवति। सर्वत्र सर्वस्मिन् स्थले एषा नीतिः अयम् आचारः विहिता आचारः ज्ञायते। ३।

ते तव का कान्ता भार्या का। ते तव कः पुत्रः सुतः। अयं संसारः दृश्यमानः क्षणस्थायी प्रपञ्चः अतीव अत्यन्तं विचित्रः अद्भूतः। त्वं कस्य कः। कुतः कस्मात् स्थानात् आयातः आगतवान् (इति ज्ञातुं शक्नोषि) यद् इदं तत्त्वं यथार्थभूतं तद् भ्रातः हे सखे चिन्तय विचारय।४।

**व्याख्यानम् -**

अस्मिन् स्तोत्रे प्रथमः श्लोकः ध्रुवपदम्। अर्थात् प्रत्येकात् श्लोकात् परम् अस्य श्लोकस्यावृत्तिः भवति। अत्र शङ्करभगवत्पादाः कथयन्ति यत् - यदा मरणं समीपम् आगच्छति तदा न्यायव्याकरणादीनां संसारिकतत्त्वपूर्णशास्त्रानां ज्ञानेन मुक्तिः नैव भवति। यतो हि एतेषां ज्ञानेन केवलं कुतर्काय मतिः भवति। एतेन परमप्रियः मोक्षः नैव जायते। एतादृशशास्त्रेषु अनित्यपदार्थानां विषये एव चर्चा विहिता। तस्मात् हे अज्ञानिमनुष्य, यदि त्वं संसारिकदुःखात् मुक्तिं प्राप्तुम् इच्छसि तर्हि गोविन्दस्य परमेश्वरस्य भजनं कीर्तनं वा कुरु।१।

धनं कामं च न हि उपभोगेन समाप्तिं गच्छति, परन्तु उत्तरोत्तरं वर्धते एव। अत एव महाभारते प्रसिद्धोक्तिः -

“न जातु कामः कामानामुपभोगेन शाम्यति।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।” इति।

तस्मात् धनागमस्य तृष्णा परित्यज्या। यतो हि धनस्य तृष्णा विषयेभ्यः मनः परमात्मनि स्थापयितुम् अवकाशं न ददाति। सच्चिन्तनेन मनसः मालिन्यं क्षीयते। तस्मात् सद्बुद्धिः करणीया। किञ्च मनसि विषयेषु वैराग्यं सम्पादनीयम्। यतो हि विषयवैराग्यं विना मुक्तिः न भवति। वस्तुतः अत्र शमस्य प्रतिपादनं विहितम्। शमः नाम ज्ञानसाधनानि यानि श्रवणमनननिदिध्यासनानि तेभ्यः भिन्नविषयेभ्यः अन्तरिन्द्रियस्य मनसः निग्रहः।

अपि च स्वयं सत्कर्मणा यत् प्राप्नोति तेनैव धनेन यावत् चित्तविनोदनं नाम स्वकीयाभिलाषपूरणं करणीयम्। अपरस्य धनं दृष्ट्वा ईर्ष्या न करणीया। अथवा अपरस्य धनम् ऋणरूपेण स्वीकृत्य भोगादिकं नैव कर्तव्यम् इति तात्पर्यम्। अतः गोविन्दं भज इति।२।

अर्थः सर्वदा अनिष्टमेव सम्पादयति। अत एवोच्यते सुभाषितम् -

"अर्थस्यार्जने दुःखमर्जितानां च रक्षणे।

आये दुःखं व्यये दुःखं कथमर्थः सुखावहः।।" इति।

अर्थात् सुखं न भवति। यतो हि अर्थस्य प्राचुर्यं यदा भवति तदा मनसि शान्तिः न भवति। लोके एवं दृश्यते यत् यः अधिकधनवान् तस्य स्वस्य पुत्रे भार्यायां वा विश्वासं न करोति। स बिभेति यत् तस्य पुत्रः भार्या वा सर्वस्वम् अपहरेत् इति। तस्मात् अर्थेन सुखं नास्त्येव। अतः गोविन्दं भज इति।३।

जगति विद्यमानः सम्बन्धः क्षणिक एव। इयं मे कान्ता अयं मे पुत्रः इत्यादिकं सर्वविधं सम्बन्धज्ञानं मिथ्याभूतम् एव। अयं दृश्यमानः संसारः अतीव विचित्रः भवति। यतो हि इयं मे कान्ता पुत्र इत्यादिकं ज्ञानं यद्यपि मिथ्याभूतं तथापि अयं संसारः सत्यत्वेन एतत्सर्वम् अस्माकं पुरतः समुपस्थापयति। अतः अहं कः अस्मि, अहं कस्माद् आगतः एतत्सर्वं यदि ज्ञातव्यं तर्हि गोविन्दं भज इति।४।

## पाठगतप्रश्नाः-१

१. सन्निहिते मरणे किं न रक्षति।

२. मूढेन किं त्यक्तव्यम्।

३. कथमर्थः अनर्थः भवति।

४. केन चित्तं विनोदनीयम्।

५. सर्वत्र का नीतिःविहिता।

६. संसारः विचित्रः कथम्।

## ८.३) साम्प्रतं मूलपाठमवगच्छाम (मोहमुद्गरः) - २

**मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम्।**
**मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा।। ५।।**
**कामं क्रोधं लोभं मोहं त्यक्त्वात्मानं भावय कोऽहम्।**
**आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः।। ६।।**
**सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः।**
**सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः।। ७।।**
**शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ।**
**भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम्।। ८।।**

### अन्वयार्थः -

धनजनयौवनगर्वं धनेषु मनुष्येषु स्वस्य यौवनावस्थायाम् अपि गर्वम् अहङ्कारं मा नैव कुरु विधेहि। यतो हि कालः महाकालः निमेषात् हठात् एव सर्वं समस्तं हरति अपहरति विनाशयति वा। त्वं सखे इदं व्यापृतम् अखिलं समस्तं मायामयं जगत् हित्वा त्यक्त्वा विदित्वा आत्मज्ञानं प्राप्य "अहं ब्रह्मास्मि" इति अनुभूय ब्रह्मपदं ब्रह्मस्वरूपं प्रविश मोक्षाख्यं परमपुरुषार्थं प्राप्य मुक्तः भव। तत्साधनाय त्वं गोविन्दं भज इति।५।

कामं वासनां क्रोधं द्वेषं लोभम् अभिलाषां मोहं प्रीतिं त्यक्त्वा वर्जयित्वा अहं कः इति आत्मानं स्वं भावय चिन्तय। ये आत्मज्ञानविहीनाः आत्मनः ज्ञानं येषां न वर्तते ते मूढाः अविवेकिनः नरकनिगूढाः नरके बद्धाः सन्तः पच्यन्ते अहरहः दुःखं प्राप्नुवन्ति इति। अतः दुःखात् मुक्तये गोविन्दं भज।६।

सुरमन्दिरतरुमूलनिवासः सुरमन्दिरे देवालये वा तरुमूले वृक्षस्य अधः वा निवासः अवस्थानम्, भूतलं पृथिवी शय्या शयनस्थानम्, अजिनं मृगचर्म वासः वस्त्रम्। सर्वपरिग्रहभोगत्यागः सर्वेषां परिग्रहाणां विषयाणां भोगस्य त्यागः। तेषु विरागः वैराग्यं कस्य मनुष्यस्य सुखम् आनन्दम् न करोति, सर्वस्यैव मनुष्यस्य सुखं करोति एव इत्यर्थः।७।

यदि अचिराद् शीघ्रमेव विष्णुत्वं सर्वव्यापित्वं ब्रह्मस्वरूपं वाञ्छसि प्राप्तुम् इच्छसि तर्हि शत्रौ अरौ, मित्रे सुहृदि, पुत्रे सुते बन्धौ स्वजने च विग्रहसन्धौ युद्धमेलने च यत्नं प्रयत्नं मा नैव कुरु विधेहि। सर्वत्र त्वं समचित्तः समानमनस्कः भव तथाभूतः भूत्वा तिष्ठ इति।८।

### व्याख्यानम् -

धनम् अनुचराः स्वस्य यौवनावस्था च पद्मपत्रे स्थितं पयः इव क्षणस्थायि। तस्मात् एषु विषयेषु कदापि गर्वः नाम आत्मत्वबुद्धिः दम्भश्च न करणीयः। यतो हि सर्वं कालस्य अधीने एव वर्तते। कालः स्वेच्छया एकस्मिन् क्षणे सृजति परस्मिन् क्षणे एव नाशयति च। तस्मात् सखे, मिथ्यामायावृतम् इदम् अखिलं जगत् त्यक्त्वा ब्रह्मानन्दं प्राप्तुम् आत्मज्ञानं लभस्व। तत्प्राप्त्यर्थं त्वं गोविन्दं भज इत्यर्थः।५।

सम्पूर्णः अयं संसारः कामक्रोधादिपरिपूर्णः। कामो नाम स्त्रीधनादीनाम् उपभोगेच्छा, विद्वेषः अभिलाषः, लोभः मोहः इत्येतत्सर्वम् अनित्यम् एव। तस्मात् एतत् सर्वं त्यक्त्वा सर्वदा विचारणीयं यत् अहं कः नाम मम स्वरूपं किम् इति। यतो हि ये आत्मानं न जानन्ति ते प्रत्यहं नरके यथा दुःखं भवति तथा दुःखं प्राप्नुवन्ति। तस्मात् दुःखात् परित्राणं प्राप्तुं गोविन्दं भज इत्यर्थः।६।

भोगवासनादिकं त्यक्त्वा धनादौ लोभं च परित्यज्य मन्दिरे वृक्षस्य अधः वा शयने भूमौ अवस्थाने किञ्च मृगचर्मणः परिधाने वित्तलोभादीनां कष्टं नैव सोढव्यं भवति। एवमेव यः किमपि न स्वीकरोति भोगादिकं त्यजति किञ्च तस्य भोगविषयेषु वैराग्यं भवति स एव वस्तुतः सुखी। तस्मात् सुखं प्राप्तुं गोविन्दं भज इत्यर्थः।७।

शत्रुमित्रादयः मिथ्याभूताः एव। शत्रुणा सह युद्धेन, मित्रेण सह सख्येन, पुत्रे वात्सल्येन, तथा बन्धुना सह आलापेन समयः नष्टः भवति। तस्मात् तत्र यत्नः समयव्ययः न करणीयः। सर्वत्र सुखे दुःखे

द्वन्द्वे अनुरागे यः समानरूपेण तिष्ठति स एव विष्णुत्वम् अर्थात् मोक्षं प्राप्नोति। एतस्मिन्नेव प्रसङ्गे गीतायां भगवता कृष्णेन स्थितधीलक्षणं प्रोक्तम् -

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।। इति।

स्थितधिया एव मोक्षः प्राप्यते। तादृशस्य मोक्षस्य लाभाय परमेश्वराराधनं कार्यम् इत्यर्थः।८।

## पाठगतप्रश्नाः-२

७. कस्य गर्वः कथं नैव करणीयः।

८. किं किं त्यक्त्वा आत्मनः चिन्ता कर्तव्या।

९. कथं तिष्ठति चेत् जनः विरागसुखं लभते।

१०. किं सर्वस्य सुखं करोति।

११. कुत्र यत्नः न करणीयः।

१२. विष्णुत्वप्राप्तये किं कार्यम्।

---

## ८.४) साम्प्रतं मूलपाठमवगच्छाम (मोहमुद्गरः) - ३

**त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः।**
**सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम्।। ९।।**
**प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम्।**
**जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम्।। १०।।**
**नलिनीदलगतसलिलं तरलं तद्वज्जीवितमतिशयचपलम्।**
**विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम्।। ११।।**

**अन्वयार्थः -**

हे सखे त्वयि तव अन्तः, मयि मम अन्तश्च अन्यत्र सर्वत्रैव एकः विष्णुः एकं ब्रह्म वर्तते। ततः व्यर्थम् अकारणं त्वम् असहिष्णुः असहमानः सन् मयि कुप्यसि मयि कोपं करोषि। सर्वस्मिन् अपि सर्वलोकेषु इतरजन्तुषु अपि आत्मानं स्वकीयं ब्रह्मस्वरूपं पश्य अवलोकय। सर्वत्र सर्वविधसंसारव्यवहारेषु भेदज्ञानम् इदं मम इदं तव इत्यादिभेदबुद्धिम् उत्सृज परित्यज।९।

प्राणायामम् अनुलोमविलोमादिव्यापारं प्रत्याहारम् चक्षुः-श्रोत्र-त्वग्-जिह्वा-घ्राणेन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं नित्यानित्यविवेकविचारं ब्रह्म एव नित्यं वस्तु ततः अन्यद् अखिलम् अनित्यम् इति विचारं जाप्यसमेतसमाधिविधानम् जाप्येन श्रीभगवन्नामस्मरणादिना सह ध्यानादिकम् अवधानं निश्चयज्ञानं महदवधानं महता यत्नेन कुरु सम्पादय।१०।

यथा नलिनीदलगतसलिलं नलिनीदले पद्मपत्रे गतं स्थितं सलिलं जलं तरलं क्षणस्थायि भवति तद्वत् तथैव जीवितं जीवनम् अतिशयचपलम् अत्यन्तं चञ्चलम्। व्याध्यभिमानग्रस्तं व्याधिना कफवित्तादिरोगेण अभिमानेन स्वयशसा च ग्रस्तम् आच्छन्नं शोकगतं दुःखभरितं समस्तम् अखिलं लोकं विश्वं विद्धि जानीहि।११।

**व्याख्यानम् -**

सर्वं खलु इदं ब्रह्म। सर्वस्मिन् शरीरिणि एकं ब्रह्मैव वर्तते। तेन कस्यचिद् उपरि क्रोधः नाम स्वस्य उपरि एव क्रोधः। क्रोधेन पुनः आत्मज्ञानं भवति विस्मृतम्। तथाह्युच्यते भगवता श्रीकृष्णेन गीतायां-

काम एष क्रोध एष रजोगुणसमुद्भवः।

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्।। इति।

क्रोधादयः अनर्थकाः। किञ्च सर्वत्र आत्मनः अर्थाद् ब्रह्मत्वेन दर्शनं कार्यम्। ब्रह्मज्ञानेन भेदज्ञानम् इदं मम कृते, इयं मम, इयं तव इत्यादिकं नश्यति। सर्वत्र आत्मोपलब्धये गोविन्दं भज इत्यर्थः। ९।

प्राणायामप्रत्याहारादीनाम् अभ्यासः करणीयः। अर्थात् अद्वैतवेदान्तानाम् अष्टाङ्गानां विधिवद् अभ्यासः अपेक्षितः। किञ्च चित्तशुद्ध्यादिकरणाय जपः करणीयः। तेन सह श्रीभगवतः नामस्मरणादिकम् अपि करणीयम्। तेन भगवतः गुणकीर्तनेन मनसि शान्तिः आगच्छति। एतेन महान् यः ब्रह्मप्राप्तिरूपः निश्चयः सः सुतरां भवति। एतादृशं महदवधानं कुरु। अस्य उपलब्धये गोविन्दं भज इति।१०।

पद्मपत्रे जलं क्षणिकं यावत् न तिष्ठति। एवमेव मनुष्याणां जीवनम् अपि अत्यन्तं चञ्चलं नाम अधुना अस्ति परन्तु श्वः नापि स्थातुम् अर्हति। समस्तः अयं संसारः रोगादिना व्यस्तः किञ्च अभिमानप्रीतिद्वेषादिव्याप्तः। अपि च अयं शोकेन परिपूर्णः। अत्र संसारे दुःखमेव सर्वदा लभ्यते, यत्किञ्चित् सुखं प्राप्यते तदपि परं दुःखमेव दास्यति। तस्मात् एतत् सर्वं जानीहि। किञ्च अस्मात् मुक्तिं चिरसुखं प्राप्तुं च त्वं गोविन्दं भज इत्यर्थः।११।

## पाठगतप्रश्नाः-३

१३. विष्णुः कुत्र कुत्र अस्ति।

१४. सर्वत्र किम् उत्सृज।

१५. किं किम् अवधानं कार्यम्।

१६. जीवनं कीदृशं भवति।

१७. समस्तः लोकः कीदृशः।

## ८.५) साम्प्रतं मूलपाठमवगच्छाम (मोहमुद्गरः) - ४

**का तेऽष्टादशदेशे चिन्ता वातुल तव किं नास्ति नियन्ता।**
**यस्त्वां हस्ते सुदृढनिबद्धं बोधयति प्रभवादिविरुद्धम्।। १२**
**गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद् भव मुक्तः।**
**सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम्।। १३।।**
**द्वादशपञ्जरिकामय एष शिष्याणां कथितो ह्युपदेशः।**
**येषां चित्ते नैव विवेकस्ते पच्यन्ते नरकमनेकम्।। १४।।**

### अन्वयार्थः -

वातुल उन्मत्त जीव, ते तव अष्टादशदेशे बहुषु विषयेषु का कीदृशी चिन्ता व्याकुलता। तव ते नियन्ता प्रभुः किं नास्ति न वर्तते। यः हस्ते पाणिद्वये सुदृढनिबद्धं सम्यक्तया बद्धं त्वां प्रभवादिविरुद्धं प्रभवादिभ्यः जननमरणादिविकारेभ्यः विरुद्धं पृथक् आत्मतत्त्वं बोधयति ज्ञापयिष्यति इति तात्पर्यम्। १२।

गुरुचरणाम्बुजनिर्भरभक्तः गुरुचरणाम्बुजयोः निर्भरः यः भक्तः अर्थाद् गुरुपादपद्मयोः आश्रितः भक्तिमान् यः जनः। अथवा गुरुचरणाम्बुजयोः निर्भरभक्तः निर्भरभक्तियुक्तः परिपूर्णभक्तियुक्तः यः सः अचिरात् शीघ्रमेव संसारात् मायावृतात् मुक्तः पाशरहितः भव। एवं क्रमेण सेन्द्रियमानसनियमात् इन्द्रियैः सह सेन्द्रियस्य मनसः नियमात् संयमात् निजहृदयस्थं स्वस्मिन् अवस्थितम् देवं परमेश्वरं ब्रह्मस्वरूपं द्रक्ष्यसि साक्षात्कर्तुं शक्नोषि।१३।

एषः श्लोकबद्धः द्वादशपञ्जरिकामयः द्वादशपञ्जरिकास्तोत्ररूपः हि निश्चयेन, शिष्याणाम् अन्तेवासिनां कृते कथितः उक्तः उपदेशः कृत्याकृत्यविवेकबोधः। येषां नराणां चित्ते मनसि विवेकः सदसद्विचारः नास्ति नैव कदाचित् भवति ते मूढाः नरकम् अत्यन्तदुःखमूलम् अनेकं बहुवारं पच्यन्ते संसारं प्रविशन्ति।१४।

### व्याख्यानम् -

वातुल उन्मत्त जीव, ते तव अष्टादशदेशे बहुषु विषयेषु का कीदृशी चिन्ता व्याकुलता। तव ते नियन्ता प्रभुः किं नास्ति न वर्तते। यः हस्ते पाणिद्वये सुदृढनिबद्धं सम्यक्तया बद्धं त्वां प्रभवादिविरुद्धं प्रभवादिभ्यः जननमरणादिविकारेभ्यः विरुद्धं पृथक् आत्मतत्त्वं बोधयति ज्ञापयिष्यति इति तात्पर्यम्। १२।

वस्तुतस्तु बहुषु विषयेषु चिन्ता व्यर्था एव। अतः अविवेकिनं प्रति इयमुक्तिः- हे मूढ, तव नियन्ता किं नास्ति। यः त्वां हस्तयोः सुदृढं गृहीत्वा जननमरणादिभ्यः विकारेभ्यः पृथग्भूतं भवति ब्रह्मज्ञानं तदेव आत्यन्तिकदुःखनाशकम् इति बोधयिष्यति। तादृशं ब्रह्मज्ञानं प्राप्तव्यं चेद् गोविन्दभजनं कार्यम्।

"गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं

ततः किं ततः किं ततः किं ततः किम्।।" इति शङ्कराचार्यवचनादेव ज्ञायते यद् गुरोः पादपद्मयोः भक्तिमान् यः स एव संसारार्णवतरणे सक्षमो भवति। स एव आत्मज्ञानं प्राप्नोति। आत्मज्ञानलाभाय गुरौ सम्पूर्णा भक्तिः गुरुवचस्सु श्रद्धा विश्वासश्च अपेक्षते। अत एव अद्वैतवेदान्ते ब्रह्मज्ञाने अधिकारिणः शमादिषट्कसम्पत्तिः भवेत्। शमादयस्तावत् शमः दमः उपरतिः तितिक्षा समाधानं श्रद्धा च। तत्र श्रद्धा नाम गुरूपदिष्टवेदान्तवाक्येषु विश्वासः। एवं गुरौ श्रद्धावान् भक्तिमान् च संसारात् मायावृतात् जगतः शीघ्रमेव मुक्तिं प्राप्नोति। तस्मात् त्वं तादृशः भूत्वा शीघ्रमेव मोक्षं लभस्व। किञ्च इन्द्रियैः सह मनसः संगमनं नाम निग्रहः अपेक्षते। अर्थात् शमादिसम्पन्नः भव। तेन त्वं स्वस्मिन् स्थितं परमात्मानं द्रष्टुं शक्नोषि। तत्प्राप्त्यर्थं त्वं गोविन्दं भज इति अविवेकिनं प्रति उपदेशः।१३।

इदं स्तोत्रं भगवच्चरणैः श्रीशङ्कराचार्यैः शिष्याणां नाम तेषां साक्षात् शिष्याणां किञ्च परम्परया अस्माकं कृते कृत्याकृत्यविवेकविषये उपदेशमुखेन उक्तम्। ये श्रद्धान्विताः भूत्वा विश्वासं कृत्वा आत्मज्ञानलाभाय यत्नं करिष्यन्ति ते अवश्यं मुक्ताः भविष्यन्ति। परन्तु येषां चित्ते ज्ञानोदयः न भविष्यति ते जननमरणादिचक्रैः बद्धाः सन्तः पुनः पुनः दुःखमूलं संसारम् आगमिष्यन्ति। तस्माद् एतस्मात् संसारदुःखात् मुक्तिं प्राप्तुं त्वं गोविन्दं भज इत्यर्थः।

## पाठगतप्रश्नाः-४

१८. कीदृशः नियन्ता अपेक्षते।

१९. कथं जनः संसारात् मुक्तो भवति।

२०. निजहृदयस्थस्य देवस्य दर्शनं कथं लभ्यते।

२१. इदं मोहमुद्गरस्तोत्रं कीदृशम्।

२२. के नरके पच्यन्ते।



## श्रीरामगुणवर्णना

### ८.६) सम्पूर्णः मूलपाठः (श्रीरामगुणवर्णना)

स च नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते।। १।।
कदाचिदुपकारेण कृतेनैकेन तुष्यति।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया।। २।।
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि।। ३।।
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः।। ४।।
न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते।। ५।।
कुलोचितमतिः क्षात्रं स्वधर्मं बहु मन्यते।
मन्यते परया प्रीत्या महत्स्वर्गफलं ततः।। ६।।
नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः।
उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा।। ७।।
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित्।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः।। ८।।
धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान्।
लौकिके समयाचारे कृतकल्पो विशारदः।। ९।।
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान्।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित्।। १०।।
रामः सत्पुरुषो लोके सत्यः सत्यपरायणः।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह।। ११।।

### ८.७) साम्प्रतं मूलपाठमवगच्छाम - (श्रीरामगुणवर्णना-१)

स च नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते।। १।।
कदाचिदुपकारेण कृतेनैकेन तुष्यति।

**न स्मरत्यपकाराणां शतमप्यात्मवत्तया।। २।।**
**शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः।**
**कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि।। ३।।**
**बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः।**
**वीर्यवान्न च वीर्येण महता स्वेन विस्मितः।। ४।।**

### अन्वयार्थः -

स श्रीरामचन्द्रः च नित्यं सततं प्रशान्तात्मा अक्रोधनस्वभावः मृदुपूर्वं मृदुक्तिपूर्वं च भाषते वक्ति। परुषम् रूक्षम् उच्यमानः कोऽपि कटुक्तिं करोति चेदपि स न नैव परुषम् उत्तरं रूक्षस्वरेण प्रत्युत्तरं प्रतिपद्यते प्रयच्छति इत्यर्थः।१।

एकेन केनापि पुरुषेण कदाचित् कुत्रापि केनापि प्रकारेण उपकारेण सौकर्यविधानेन कृतेन कुर्वता अपि तुष्यति आत्मवत्तया स्वदिव्यदेहवत्तया स्वीकरोति। सः अपकाराणां दुःखं दत्तवतां शतम् अपि बहु अपराधम् अपि आत्मवत्तया स्वदेहवत्तया न स्मरति विस्मरति इत्यर्थः।२।

नित्यं सर्वदा शीलवृद्धैः सदाचारसम्पन्नैः ज्ञानवृद्धैः विद्या येषां परिपक्वाः सम्पन्नाः तादृशैः, वयोवृद्धैः ज्येष्ठैः, सज्जनैः सत्पुरुषैः, अस्त्रयोग्यान्तरेषु अस्त्रयोग्यस्य अन्तरेषु मध्यकालेषु अस्त्रविद्याभ्याससमये अपि वै निश्चयेन कथयन् आस्त वदति स्म इत्यर्थः।३।

स रामचन्द्रः बुद्धिमान् सर्वविधवचनविषयेषु प्रशस्तबुद्धिविशिष्टः, मधुराभाषी मधुरं मनोहरम् आभाषितुं शीलम् अस्य मधुरवचनशाली, पूर्वभाषी प्रथमभाषणेन स्वाभिमुख्यप्रदर्शकः, प्रियंवदः सत्यभाषी परन्तु प्रियवाक्यस्य वक्ता, वीर्यवान् बलशाली, परन्तु स्वेन स्वकीयेन महता प्रबलेन वीर्येण पराक्रमेण न विस्मितः आत्मबोधविहीनः न इत्यर्थः।४।

### व्याख्यानम् -

अत्र श्रीरामचन्द्रस्य गुणवर्णना क्रियते। स श्रीरामः सर्वदा शान्तमनस्कः भूत्वा एव तिष्ठति। किञ्च कदापि किमपि वक्तव्यं चेत् क्रोधादिकम् अकृत्वा कोमलस्वरेण सम्भाषते। यदि कदापि कश्चन तेन सह कठोरवचनेन भाषणं करोति तदापि स तेन सह कोमलशब्दैः ललितवाक्यैः भाषते। एवं श्रीरामः स्वभावेन शान्तः मृदुभाषी च।१।

कश्चन सामान्यजनः अपि यदि तस्य कमपि उपकारं कदापि कुत्रापि करोति तर्हि स श्रीरामः तं कदापि न विस्मरति। किन्तु बहवः यदि तस्य अपकारं कुर्वन्ति, तस्य दुःखं जनयन्ति, तथापि स कृपासिन्धुः स्वस्य माहात्म्येन तान् प्रति कदापि क्रोधं न करोति। तेषाम् अपकारान् अपि विस्मरति। अत्र भगवतः श्रीरामचन्द्रस्य उदारतायाः परिचयः प्राप्यते।२।

रामचन्द्रः सर्वदा सदाचारसम्पन्नैः पूज्यैः सह वार्तालापेन तेभ्यः सदाचारज्ञानम् अलभत। एवमेव येषां विद्याः परिपक्वाः तादृशैः सह वार्तालापेन तेभ्यः विविधशास्त्राणां ज्ञानम् अलभत। ये वयसा ज्येष्ठः अर्थाद् जीवने विविधविषये अभिज्ञतां ये लब्धवन्तः तेभ्यः कस्मिन् परिस्थितौ कथं स्थेयम् इत्यादिविषये



ज्ञानम् अलभत। किञ्च, ये सत्पुरुषाः तेभ्यः नीत्युपदेशान् लब्धवान्। स श्रीरामः एतैः सह अस्त्राभ्यासकाले अपि वार्तालापं कुर्वन्ति स्म। एवं सर्वान् प्रति तस्य श्रद्धा परिस्फुटा भवति।३।

रामचन्द्रस्य कथं कदा किं वक्तव्यम् इत्यस्मिन् विषये विशिष्टबुद्धिः आसीत्। अतः स व्यवहारेषु प्रशस्तबुद्धिविशिष्टः। तस्य मधुरभाषणमेव स्वभावः अतः स मधुराभाषी। अपि च, प्रियवाक्कथने निपुणः स यदा अतिनीचेन सहापि वार्ताम् आलपति स्म तदा आदौ सम्भाष्य सः अपरस्य आभिमुख्यं सम्पादयति स्म। सः अत्यन्तबलशाली भूत्वा अपि स्वकीयेन महता बलेन आत्मबोधविहीनः अन्धः न आसीत्। अत्र श्रीरामस्य महत्त्वं ज्ञायते।।४।

## पाठगतप्रश्नाः-५

२३. स रामचन्द्रः कथं भाषते।

२४. रामचन्द्रं प्रति परुषवचः उच्यते चेत्स किं करोति।

२५. श्रीरामचन्द्रः किं न स्मरति।

२६. श्रीरामचन्द्रः कथं न स्मरति।

२७. श्रीरामः कथं तुष्यति।

२८. श्रीरामः कैः सह अस्त्राभ्यासकाले अपि कथयन्नास्त।

## ८.८) साम्प्रतं मूलपाठमवगच्छाम (श्रीरामगुणवर्णना-२)

**न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः।**
**अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते।। ५।।**
**कुलोचितमतिः क्षात्रं स्वधर्मं बहु मन्यते।**
**मन्यते परया प्रीत्या महत्स्वर्गफलं ततः।। ६।।**
**नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः।**
**उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा।। ७।।**
**अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित्।**
**लोके पुरुषसारज्ञः साधुरेको विनिर्मितः।। ८।।**

**अन्वयार्थः -**

न च अनृतकथः अनृता मृषा कथा कथनं यस्य स श्रीरामचन्द्रः अनृतकथः मिथ्यावादी कदापि मिथ्याभाषणं न करोति। विद्वान् सकलज्ञानविशिष्टः स वृद्धानां ज्ञानादिभिः वृद्धिं गतानां प्रतिपूजकः पूजादानादिभिः सम्मानकर्ता। स प्रजाभिः देशस्थैः जनैः अनुरक्तः अनुरागविषयीभूतः। कुत इति चेत्- प्रजाः च अपि प्रजाजनान् अपि स श्रीरामः अनुरञ्जते अनुरञ्जयति।५।

कुलोचितमतिः कुलोचिता इक्ष्वाकुकुलयोग्या मतिः बुद्धिः यस्य सः स्वकुलयोग्यबुद्धिसम्पन्नः श्रीरामचन्द्रः क्षात्रं क्षत्रियपालनीयं प्रजापालनादिकं स्वधर्मं स्वकर्तव्यं बहु अधिकं मन्यते पालयति। तत्र आधिक्ये हेतुः तावत् - ततः प्रजापालनादिरूपात् क्षात्रधर्मात् परया प्रीत्या महत्या श्रद्धया महद् अत्युत्कृष्टं स्वर्गफलं देवलोकप्राप्तिरूपफलं मन्यते निश्चिनोति।६।

यः श्रीरामचन्द्रः अश्रेयसि निष्फले अकल्याणे कर्मणि न रतः आसक्तः, न च विरुद्धकथारुचिः विरुद्धकथासु धर्मविरुद्धग्राम्यालापादिषु प्रीतिरहितः स उत्तरोत्तरयुक्तीनां वादादिषु स्वपक्षनिर्वाहकोत्तरोत्तरयत्ने वाचस्पतिर्यथा वाचस्पतिरिव वक्ता अप्रतिहतवक्ता।७।

स श्रीरामचन्द्रः अरोगः रोगादिसंसर्गरहितः, तरुणः नित्यतारुण्यविशिष्टः, वाग्मी प्रशस्तवचनवान्, वपुष्मान् प्रशस्तशरीरः, देशकालवित् लौकिकवैदिककर्मोचित-देशकालयोः ज्ञाता, लोके पुरुषसारज्ञः पुरुषसारान् पुरुषस्य अन्तर्गूहितं तत्त्वं जानाति इति पुरुषसारज्ञः, साधुः परकार्यसाधनशीलः, विनिर्मितः विशेषेण विलक्षणत्वेन निर्मितः अर्थाद् अघटितघटनापटीयान्।८।

**व्याख्यानम् -**

अत्रापि भगवतः श्रीरामचन्द्रस्य महिमाकथनं क्रियते। स कदापि मिथ्याभाषणं न करोति। सर्वविधज्ञानसम्पन्नः स परन्तु ये वयोज्येष्ठाः किञ्च ज्ञानज्येष्ठाः आचारज्येष्ठाश्च तेषां सम्मानं सेवादिकं च करोति। स सर्वेषां प्रजानाम् अनुरागविषयीभूतः भवति। कुतः इति चेदुच्यते यत् सः प्रजाजनान् अनुरञ्जयति। स स्वयं पूर्वं प्रजानामनुरञ्जनं करोति। ततः अनुरञ्जिताभिः प्रजाभिः अनुरक्तः भवति।५।

स श्रीरामः स्वस्य इक्ष्वाकुकुलस्य विषये ज्ञानसम्पन्नः आसीत्। तस्य मतिः सूक्ष्मविचारसहिता इक्ष्वाकुकुलयोग्या। स स्वस्य प्रजापालनादिरूपं क्षत्रियधर्मं अत्यन्तं श्रद्धया पालयति। यतो हि क्षत्रियधर्मस्य श्रद्धया पालनेन महत्स्वर्गफलं लभ्यते इति स चिन्तयति।६।

द्युतक्रीडादेः यस्य कर्मणः किमपि महत् फलं नास्ति तादृशं कर्म श्रीरामः न कदापि आचरति। धर्मप्रसङ्गं त्यक्त्वा ग्रामालापादिकं स न कदापि करोति। यदा विविधशास्त्राणि आधारीकृत्य वादः प्रचलति तदा तत्र स वाचस्पति इव अप्रतिहतवक्ता। अर्थाद् वादादिषु न कश्चित् तं पराजेतुं शक्नोति।७।

तस्य श्रीरामस्य शरीरं सर्वदा ज्वरादिरोगरहितं भवति। सर्वदा तारुण्यं तस्य अङ्गेषु प्रतिभाति। तस्य देहः सुदृढः। अपि च लौकिकवैदिककर्माणि कस्मिन् काले कथं करणीयानि इति विषये सम्यक्तया जानाति स्म। कश्चन पुरुषः अन्तः किं चिन्तयति इति स एकवारं तं पुरुषं दृष्ट्वा ज्ञातुं शक्नोति। तस्मात् स साधुः इव अन्तर्यामी इति ज्ञायते।८।

## पाठगतप्रश्नाः-६

२९. श्रीरामः केषां प्रतिपूजकः - क) प्रजानाम्, ख) अमात्यानाम्, ग) वृद्धानाम्, घ) योगिनाम्

३०. रामचन्द्रः कथं प्रजाभिः अनुरक्तो भवति।

३१. रामचन्द्रः कान् अनुरञ्जते।



३२. रामचन्द्रः किं बहु मन्यते।

३३. रामचन्द्रः कस्मिन् न रतः।

३४. रामचन्द्रः कीदृशः वक्ता आसीत्।

३५. रामचन्द्रः लोके कीदृशः अस्ति।

३६. पुरुषसारज्ञः इत्यस्य किं तात्पर्यम्।

## ८.९) साम्प्रतं मूलपाठमवगच्छाम (श्रीरामगुणवर्णना-३)

**धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान्।**
**लौकिके समयाचारे कृतकल्पो विशारदः।। ९।।**
**निभृतः संवृताकारो गुप्तमन्त्रः सहायवान्।**
**अमोघक्रोधहर्षश्च त्यागसंयमकालवित्।। १०।।**
**रामः सत्पुरुषो लोके सत्यः सत्यपरायणः।**
**साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह।। ११।।**

### अन्वयार्थः -

स श्रीरामचन्द्रः धर्मकामार्थतत्त्वज्ञः धर्मकामार्थानां तत्त्वं जानाति पुरुषार्थतत्त्वविद् इत्यर्थः। स स्मृतिमान् ज्ञातार्थविषये विस्मरणरहितः, प्रतिभावान् प्रतिभानं प्रतिवस्तुप्रकाशनं तद्वान्, लौकिके लोकिकप्रमाणे समयाचारे साङ्केतिकाचारे च कृतकल्पः कृतसंस्थापनः विशारदः आचरणसमर्थः।९।

निभृतः विनीतः, संवृताकारः संवृतः आकारो यस्य स कर्तव्यार्थव्यञ्जकेङ्गिताकारगोपनचतुरः, गुप्तमन्त्रः फलपर्यन्तम् अन्यैः अविदितमन्त्रः, सहायवान् प्रशस्तमन्त्रयुक्तः, अमोघक्रोधहर्षः अमोघौ निष्फलौ क्रोधहर्षौ यस्य स फलपर्यवसायिकोपप्रसादः, त्यागसंयमकालवित् त्यागसंयमयोः दानग्रहणयोः कालं वेत्ति जानातीति त्यागसंयमकालविद् वस्तुत्यागग्रहणकालवेत्ता भवति।१०।

रामः दाशरथिः लोके जगति सत्पुरुषः सज्जनः सत्यः सत्यवान् सत्यपरायणः सत्यधर्मैकनिष्ठः। धर्मः क्षात्रधर्मः श्रिया सह तत्फलभूतया सम्पदा सह रामात् श्रीरामचन्द्रात् साक्षात् अव्यवधानेन विनिर्वृत्तः निष्पन्नः धर्मार्थयोः इतरनिरपेक्षतया निर्वाहकः स इत्यर्थः।११।

### व्याख्यानम् -

धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः। तेषां विषये श्रीरामस्य ज्ञानमतीव गभीरम्। स यद् एकवारम् अवगच्छति तत् न कदापि विस्मरति। कस्यापि वस्तुनः प्रकाशने तस्य अभिनवसामर्थ्यं वर्तते। किञ्च यथासमयं वैदिकलौकिककर्मादीनाम् आचरणे तस्य सामर्थ्यम् अनुपमम्। अर्थात् स वैदिकलौकिककर्मादीनाम् आचरणे अतीव निपुणः। एवमत्र श्रीरामचन्द्रस्य सर्वेषु कार्येषु सामर्थ्यमस्तीति स्फुटम्।९।

स श्रीरामः विनयसम्पन्नः। कस्यापि कार्यस्य सिद्ध्यर्थम् इङ्गितादिकम् अपेक्षते, अन्यथा तस्य कार्यस्य विघ्नः सम्भवेत्। स तादृशेङ्गितस्य गोपने दक्षः। किञ्च, कस्यापि कर्मणः यावत् फलं न भवति तावत् तस्य मन्त्रणादिकं तं परित्यज्य अन्यः कश्चिद् अपि ज्ञातुं नैव शक्नोति। अपि च तस्य मन्त्रणम् अतीवयुक्तिसम्मतं भवति। न केवलम् एतदेव, स क्रोधं वा हर्षं वा करोति चेत् स कदापि निष्फलः न भवति। अपि च स कदा कस्य त्यागः कदा कस्य ग्रहणं वा कर्तव्यम् इत्यस्मिन् विषये विलक्षणबुद्धिसम्पन्नः अस्ति।१०।

स श्रीरामचन्द्रः लोके अत्यन्तः सज्जनः। अर्थात् तस्य स्वशत्रौ अपि स्नेहः अस्ति। सः सत्यस्वरूपः सत्यपरायणश्च। सत्यधर्मस्य परिपालनं स सर्वदा करोति। किञ्च स राजश्रिया सह स्वधर्मस्य निर्वहनं सम्यक्तया करोति।११।

## पाठगतप्रश्नाः-७

३७. धर्मकामार्थतत्त्वज्ञः इत्यस्य किं तात्पर्यम्।

३८. रामचन्द्रः कुत्र कृतकल्पः।

३९. रामचन्द्रः लोके कीदृशः

४०. श्रीरामः किंपरायणः- क) धर्मपरायणः, ख) ध्यानपरायणः, ग) सत्यपरायणः, घ) प्रजाकल्याणपरायणः।

४१. श्रीरामस्य धर्मः केन सह विनिर्वृत्तः - क) पत्न्या सह, ख) मन्त्रिभिः सह, ग) श्रिया सह, घ) भुवा सह।

## पाठसारः

परमकारुणिकाः भगवन्तः श्रीशङ्कराचार्याः सर्वेषां कृते ज्ञानोदयार्थम् इदं द्वादशपञ्जरिकास्तोत्रं रचितवन्तः। अस्मिन् स्तोत्रे प्रतिपदं ते संसारस्य अनित्यता, तत्र दुःखमेव मूलम्, एतस्मात् मुक्तये गोविन्दस्य अर्थात् परब्रह्मणः भजनं कार्यम् इत्युपदेशं दत्तवन्तः। स्त्रोत्रात् साररूपेण एवं ज्ञायते यत् - धनजनस्त्रीपुत्रादिषु आत्मबुद्धिः नैव करणीया। यतो हि केनापि सह कस्यापि सम्बन्धः क्षणिक आभासश्च। तस्मात् संसारविषयेषु अहम्भावः न स्यात्। किञ्च यावत् सत्कर्मणा उपार्जनं क्रियते तेन स्वस्य जीवनयापनं कर्तव्यम्। ये खलु कामक्रोधादिभिः मत्ताः, ते चिन्तयन्ति यत् जगत् तेषाम् अधीने वर्तते इति। एवंविधाः अज्ञानिनः प्रत्यहं दुःखैः बहुधा दुःखिताः सन्तः नरककष्टम् अनुभवन्ति। सर्वदा समचित्तो भवेत्। अर्थात् सुखे दुःखे कदापि लिप्तेन न भवितव्यम् इति। किञ्च, जीवनमिदं पद्मपत्रे स्थितं जलमिव। कदा गमिष्यति किं वा भविष्यति इति न कश्चन वक्तुं शक्नोति। तस्मात् शीघ्रमेव

आत्मचिन्तनेन ब्रह्मस्वरूपावाप्तिरूपः मोक्षः साधनीयः। इदं स्तोत्रं पठित्वा यः गुरौ श्रद्धावान् भूत्वा ब्रह्मज्ञानलाभाय प्रयत्नं कुर्यात् तस्य अनन्तसुखप्राप्तिः मुक्तिश्च भवेद् इति भगवतां शङ्कराचार्यपादानामाशयः।

पाठस्यास्य द्वितीयः भागः श्रीरामगुणवर्णना महामुनिना वाल्मीकिमहर्षिणा विरचिते रामायणाख्ये महाकाव्ये अस्ति। तत्र दशरथपुत्रस्य श्रीरामचन्द्रस्य गुणवर्णना क्रियते। तत्र चितांशस्य सारः तावत् - स श्रीरामः सर्वदा प्रशान्तचित्तः भवति। स कदापि केनापि सह कठोरभाषणं न करोति। स सर्वदा मधुरं प्रियं च वाक्यं व्यवहरति। नीचजनेषु अपि तस्य समानप्रीतिः वर्तते। कदापि कश्चित् तस्य किमपि उपकारं करोति चेत् स सर्वदा तं स्मरति। किञ्च बहवः तस्य अपकारान् कुर्वन्ति चेदपि सः तान् न स्मरति। सर्वान् प्रति तस्य श्रद्धा अस्ति। स वृद्धानां वाक्यं श्रुत्वा जीवनं परिपालयति। तस्य महान् पराक्रमः वर्तते परन्तु निष्प्रयोजनं तस्य पराक्रमस्य प्रकाशं न करोति। स्वस्य धर्मस्य परिपालनम् अपि स सम्यक्तया करोति। द्युतादिक्रीडया स कालव्ययं न करोति। स यदि वादेषु प्रवृत्तः भवति तदा तस्य पराजयः असम्भवः अस्ति। किञ्च स एवं शुद्धचित्तः यत् यः कश्चित् पुरुषः मनसि यत् किमपि चिन्तयति, स तत् ज्ञातुं शक्नोति। राज्यपरिपालनस्य कौशलम् अपि स सम्यक्तया वेत्ति। तस्य मन्त्रणं यावत् कर्मणः फलं न आयाति तावत् नैव ज्ञातुं शक्यते। अपि च सर्वदा सत्यस्य पालनं करोति। शत्रुं प्रति अपि तस्य द्वेषः नास्ति, अपि तु स्नेहः एव अस्ति। स सम्पदा सह धर्मस्य निर्वाहकः। एवमेव भगवतः श्रीरामस्य माहात्म्यं प्रतिपादितम्।

## पाठान्तप्रश्नाः

४२. "मूढ जहीहि धनागमतृष्णाम्" इति श्लोकं प्रपूर्य व्याख्यात।

४३. "कामं क्रोधं लोभं मोहम्" इति श्लोकं प्रपूर्य व्याख्यात।

४४. "मा कुरु धनजनयौवनगर्वम्" इति श्लोकं प्रपूर्य व्याख्यात।

४५. "सुरमन्दिरतरुमूलनिवासः" इति श्लोकं प्रपूर्य व्याख्यात।

४६. "गुरुचरणाम्बुजनिर्भरभक्तः" इति श्लोकं प्रपूर्य व्याख्यात।

४७. मोहमुद्गरः इति स्तोत्रस्य सारं प्रतिपादयत।

४८. "शीलवृद्धैर्ज्ञानवृद्धैः" इति श्लोकं प्रपूर्य व्याख्यात।

४९. "बुद्धिमान् मधुराभाषी" इति श्लोकं प्रपूर्य व्याख्यात।

५०. "कुलोचितमतिः" इति श्लोकं प्रपूर्य व्याख्यात।

५१. "अरोगस्तरुणो" इति श्लोकं प्रपूर्य व्याख्यात।

५२. "धर्मकामार्थतत्त्वज्ञः" इति श्लोकं प्रपूर्य व्याख्यात।

५३. "श्रीरामगुणवर्णना" इति पाठ्यांशस्य सारं प्रतिपादयत।

## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. सन्निहिते मरणे डुकृञ् करणे इत्यादिव्याकरणशास्त्रादिकं न रक्षति।

२. मूढेन धनागमतृष्णा त्यक्तव्या।

३. अर्थात् सुखलेशः अपि न प्राप्यते। अर्थः यदा तिष्ठति स्वपुत्रादपि अपहरणादिभीतिः उत्पद्यते। अतः अर्थः अनर्थः भवति।

४. स्वकर्मणा उपार्जितेन धनेन चित्तं विनोदनीयम्।

५. सर्वत्र एषा नीतिःविहिता यद् धनिकानां पुत्रादेः "अयं मम सर्वस्वम् अपहरेत्" इत्यादिभीतिः भवति।

६. कान्ता पुत्रः इत्यादिसम्बन्धः सर्वः अनित्यः एव। परन्तु संसारे तादृश-सम्बन्धः नित्यत्वेन भासमानः, अतः मायावृतः संसारः विचित्रः।

### उत्तराणि-२

७. धनजनयौवनानां गर्वः न करणीयः। यतो हि कालः निमिषेण धनजनयौवनानि हर्तुं समर्थः।

८. कामं क्रोधं लोभं मोहं त्यक्त्वा आत्मनः चिन्ता कर्तव्या।

९. सुरमन्दिरे तरुमूले वा निवासः, भूतलं शय्या, मृगचर्म, विषयभोगे वितृष्णा यदा भवति तदा एव जनः विरागसुखं लभते।

१०. विरागः सर्वस्य सुखं करोति।

११. शत्रौ मित्रे पुत्रे बन्धौ च विग्रहसन्धौ यत्नः न करणीयः।

१२. विष्णुत्वप्राप्तये अरौ मित्रे सुते स्वजने च विग्रहसन्धौ च प्रयत्नः नैव करणीयः। सर्वत्र समचित्तः भूत्वा विष्णुत्वप्राप्तये स्थेयः।

### उत्तराणि-३

१३. त्वयि मयि चान्यत्र अर्थात् सर्वत्र विष्णुः अस्ति।

१४. सर्वत्र इदं मम इदं तव इत्यादिभेदबुद्धिम् उत्सृज।

१५. प्राणायामः, प्रत्याहारः, ब्रह्म एव नित्यं वस्तु ततः अन्यद् अखिलम् अनित्यम् इति नित्यानित्यविवेकविचारः, जाप्यसमेतसमाधिविधानं च जाप्य महदवधानं कार्यम्।

१६. यथा पद्मपत्रे स्थितं सलिलं क्षणस्थायि भवति तद्वत् तथैव जीवनम् अत्यन्तं चञ्चलम्।

१७. व्याध्यभिमानग्रस्तः दुःखभरितः अखिलः लोकः।

### उत्तराणि-४

१८. यः पाणिद्वयं गृहीत्वा जननमरणादिविकारेभ्यः विरुद्धं पृथक् आत्मतत्त्वं बोधयिष्यति।

१९. गुरुचरणाम्बुजनिर्भरभक्तः जनः संसारात् मुक्तो भवति।

२०. इन्द्रियैः सह मनसः संयमात् निजहृदयस्थस्य देवस्य दर्शनं भविष्यति।

२१. इदं मोहमुद्गरस्तोत्रं शिष्याणां कृते उपदेशरूपम्।

२२. येषां चित्ते विवेको नास्ति ते नरके पच्यन्ते।

### उत्तराणि-५

२३. स रामचन्द्रः मृदुपूर्वं भाषते।

२४. रामचन्द्रं प्रति परुषवचः उच्यते चेदपि स पुरुषतया उत्तरं न प्रयच्छति।

२५. श्रीरामचन्द्रः शतमपि अपकारान् न स्मरति।

२६. श्रीरामचन्द्रः आत्मवत्तया अपकारान् न स्मरति।

२७. श्रीरामः एकेनापि उपकारेण तुष्यति।

२८. श्रीरामः शीलवृद्धैः ज्ञानवृद्धैः वयोवृद्धैः सज्जनैः सह अस्त्राभ्यासकाले अपि कथयन्नास्त।

### उत्तराणि-६

२९. ग) वृद्धानाम्।

३०. रामचन्द्रः प्रजाः अनुरञ्जयति अतः स प्रजाभिः अनुरक्तो भवति।

३१. रामचन्द्रः प्रजाजनान् अनुरञ्जते।

३२. रामचन्द्रः स्वधर्मं क्षात्रं बहु मन्यते।

३३. रामचन्द्रः निष्फले कर्मणि न रतः।

३४. रामचन्द्रः वाचस्पतिरिव वक्ता आसीत्।

३५. रामचन्द्रः लोके पुरुषसारज्ञः अस्ति।

३६. पुरुषसारज्ञः पुरुषस्य सारं जानाति यः स पुरुषसारज्ञः। अर्थात् पुरुषस्य हृदयस्थं भावं जानाति इति।

### उत्तराणि-७

३७. धर्मकामार्थतत्त्वज्ञः नाम धर्मार्थकामानां तत्त्वं यः जानाति। पुरुषार्थविद् इति तात्पर्यम्।

३८. रामचन्द्रः लौकिके समायाचारे च कृतकल्पः।

३९. रामचन्द्रः लोके सत्पुरुषः।

४०. ग) सत्यपरायणः।

४१. ग) श्रिया सह।

---

॥ इति अष्टमः पाठः ॥

---

९

# शिवराजविजयः - बटुसंवादः

## प्रस्तावना

कवेः भावयित्रीप्रतिभया समुद्भूतं कर्म भवति काव्यम्। तच्च काव्यं ध्वनिकाव्यं गुणीभूतव्यङ्ग्यं चेति द्वैविध्यं गतम्। तत्र पुनः दृश्यं श्रव्यं चेति भेदद्वयम्। तत्र श्रव्यकाव्यं पुनः गद्यं पद्यं चेति द्विविधम्। तत्र निखिलसंस्कृतसाहित्ये छन्दोमयात् पद्यादनन्तरमेव गद्यकाव्यस्याभ्युदयः। गद्यं प्रथमं कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायां दृश्यते इति बलदेवोपाध्यायमहाभागस्याशयः। कविप्रतिभायाः परीक्षणस्थलं भवति गद्यकाव्यम्, यथा सुवर्णपरीक्षणस्थलं भवति निकषम्। निकषे कषिता सुवर्णस्य रेखा एव सुवर्णस्य वैशिष्ट्यं सूचयति एवमेव गद्यस्य एका पङ्क्तिरेव केवः रससिद्धतां वचनवक्रतां चिन्तनपद्धतिं चारुतया सूचयति। अतः प्रसिद्धा इयं भणितिः – "गद्यं कवीनां निकषं वदन्ति" इति।। पद्यकाव्ये तु आदौ छन्दसि दृष्टिपातो भवति। परन्तु गद्यकाव्ये प्रथमदृष्टिपातः पदसन्निवेशे भवति।

बाणभट्टाद् आरभ्य गद्यकाव्यसंरचनपरम्परायां विद्यमानेषु कविषु अम्बिकादत्तव्यासः अन्यतमः प्रसिद्धश्च। अयं जयपुरनिवासी कविः पुराणकर्तुः व्यासस्य द्विरवतारः इति प्रसिद्धिः। अनेन बहवः संस्कृतभाषया हिन्दीभाषया च ग्रन्था विरचिताः। तद्विरचितेषु ग्रन्थेषु शिवराजविजयः इति ऐतिहासिकं गद्यकाव्यं महत्स्थानं बिभर्ति। काव्यमिदं महाराष्ट्राधीशं शिवराजमाश्रित्य लिखितम्। ऐतिहासिक–वृत्तान्तसमाश्रयणेन काव्यस्यास्य लेखनाद् इयम् आख्यायिका इति वक्तुं शक्यते।

अधर्मस्य मूलविग्रहाः यवनाः यदा अस्माकम् उपरि शासनं कृतवन्तः, अस्माकं परम्परायाः नीतेश्च नाशं कृतवन्तः, तदा दक्षिणदेशे सनातनधर्मस्य रक्षणे नियुक्तः आसीद् एकः वीरः। स एव शिवराजः। शिवराजस्य जननी जीजाबाई जनकश्च शाहजी भोसले आसीत्। एतस्य सनातनपरम्परासंरक्षकस्य शिवराजस्य विजययात्रामाश्रित्य एव अस्य काव्यस्य विकाशः।

अस्य प्रथमविरामस्य प्रथमनिःश्वासस्य प्रथमतः केचन परिच्छेदाः अध्येयत्वेन चिताः। अस्मिन् पाठे सूर्योदयस्य, गौरवटोः श्यामवटोः स्वरूपं वार्तालापः, योगिराजस्य समाधित उत्थानम् इत्येते विषयाः क्रमशः वर्णिताः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- हिन्दुपरम्परायां भगवतः सूर्यस्य महिमानं जानीयात्।
- गौरवटोः स्वरूपं जानीयात्।
- श्यामवटोः स्वरूपं जानीयात्।
- तयोः वार्तालापप्रसङ्गं जानीयात्।
- योगिराजप्रसङ्गं जानीयात्।
- पाठ्यांशस्य अन्वयार्थसङ्गमनं जानीयात्।
- पाठ्यांशस्थानां पदानां व्याकरणविमर्शं पर्यायशब्दान् च जानीयात्।

## ९.१) सम्पूर्णः मूलपाठः

"विष्णोर्माया भगवती यया सम्मोहितं जगत्।"(भागवतम्१०।१।२५)

"हिंस्रः स्वपापेन विहिंसितः खलः

साधु समत्वेन भयाद् विमुच्यते।" (भागवतम्, १०।७।३१)

"अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः। एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य , शोकविमोकः कोकलोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य, इनश्च दिनस्य। अयमेव अहोरात्रं जनयति, अयमेव वत्सरं द्वादशसु भागेषु विभनक्ति, अयमेव कारणं षण्णामृतूनाम्, एष एवाङ्गीकरोति उत्तरं दक्षिणं चायनम्, एनेनैव सम्पादिता युगभेदाः, एनेनैव कृताः कल्पभेदाः, एनमेवाश्रित्य भवति परमेष्ठिनः परार्धसङ्ख्या, असावेव चर्कर्ति बर्भर्ति जर्हर्ति च जगत्, वेदा एतस्यैव वन्दिनः, गायत्री अमुमेव गायति, ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहरहरुपतिष्ठन्ते। धन्य एष कुलमूलं श्रीरामचन्द्रस्य, प्रणम्य एष विश्वेषामि"ति उदेष्यन्तं भास्वन्तं प्रणमन् निजपर्णकुटिरात् निश्चक्राम कश्चित् गुरुसेवनपटुर्विप्रवटुः।

"अहो चिररात्राय प्रसुप्तोऽहम्, स्वप्नजालपरतन्त्रेणैव महान् पुण्यमयः समयोऽतिवाहितः, सन्ध्योपासनसमयोऽयमस्मद्गुरुचरणानाम्, तत् सपदि अवचिनोमि कुसुमानि।" इति चिन्तयन् कदलीदलमेकमाकुञ्च्य, तृणशकलैः सन्धाय, पुटकं विधाय, पुष्पावचयं कर्तुमारेभे।

वटुरसौ आकृत्या सुन्दरः, वर्णेन गौरः, जटाभिर्ब्रह्मचारी, वयसा षोडशवर्षदेशीयः, कम्बुकण्ठः, आयतललाटः, सुबाहुर्विशाललोचनश्चासीत्।

कदलीदलकुञ्जायितस्य एतत्कुटीरस्य समन्तात् पुष्पवाटिका, पूर्वतः परम-पवित्र-पानीयं परस्सहस्र-पुण्डरीक-पटल-परिलसितं पतत्रिकुल-कूजितपूजितं पयःपूरितं सर आसीत्। दक्षिणतश्चैको निर्झर-झर्झर-ध्वनित-दिगन्तरः, फल-पटलाऽऽस्वाद-चपलित-

चञ्चु–पतङ्गकुलाऽऽ–क्रमणाधिक–विनत–शाख–शाखि समूह–व्याप्तः सुन्दरकन्दरः पर्वतखण्ड आसीत्।

यावदेष ब्रह्मचारी वटुरलिपुञ्जमुद्धूय कुसुमकोरकानवचिनोति, तावत् तस्यैव सतीर्थ्योऽपरस्तत्समानवयाः कस्तूरिका-रेणुरूषित इव श्यामः, चन्दनचर्चित-भालः कर्पूरागुरु-क्षोदच्छुरित-वक्षो-बाहु-दण्डः, सुगन्धपटलै-रुन्निद्रयन्निव निद्रामन्थराणि कोरकनिकुरम्बकान्तरालसुप्तानि मिलिन्दवृन्दानि झटिति समुपसृत्य निवारयन् गौरवटुमेवमवादीत्-

'अलं भो अलम्! मयैव पूर्वमवचितानि कुसुमानि, त्वं तु चिरं रात्रावजागरीरिति क्षिप्रं नोत्थापितः, गुरुचरणा अत्र तडागतटे सन्ध्यामुपासन्ते, संस्थापिता मया निखिला सामग्री तेषां समीपे। यां च सप्तवर्षकल्पाम्, यवनत्रासेन निःशब्दं रुदतीम्, परमसुन्दरीम्, कलितमानवदेहामिव सरस्वतीं सान्त्वयन्, मरन्दमधुरा अपः पाययन्, कन्दखण्डानि भोजयन्, त्वं त्रियामाया यामत्रयमनैषीः, सेयमधुना स्वपिति, उद्बुद्ध्य च पुनस्तथैव रोदिष्यति, तत्परिमार्गणीयान्येतस्याः पितरौ गृहं च -'

इति संश्रुत्य उष्णं निःश्वस्य यावत् सोपि किञ्चिद् वक्तुमियेष तावदकस्मात् पर्वतशिखरे निपपात तयोर्दृष्टिः।

तस्मिन् पर्वते आसीदेको महान् कन्दरः। तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठति स्म। कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति। ग्रामणी-ग्रामीण-ग्रामाः समागत्य मध्ये मध्ये तं पूजयन्ति, प्रणमन्ति स्तुवन्ति च। तं केचित् कपिल इति, अपरे लोमश इति, इतरे जैगीषव्य इति अन्ये च मार्कण्डेय इति, विश्वसन्ति स्म। स एवायमधुना शिखरादवतरन् ब्रह्मचारिवटुभ्यामदर्शि।

'अहो! प्रबुद्धो मुनिः! प्रबुद्धो मुनिः! इत एवागच्छति, इत एवागच्छति, सत्कार्योऽयं सत्कार्योऽयम्' इति तौ सम्भ्रन्तौ बभूवतुः।

अथ समापितसन्ध्यावन्दनादिक्रिये समायाते गुरौ, तदाज्ञया नित्यनियमसम्पादनाय प्रयाते गौरवटौ, छात्रगणसहकारेण प्रस्तुतासु च स्वागतसामग्रीषु, 'इत आगम्यताम्, सनाथ्यतामेष आश्रमः' इति सप्रणाममभिगम्य वदत्सु निखिलेषु , योगिराज आगत्य तन्निर्दिष्टकाष्ठपीठं भास्वानिवोदयगिरिमारुरोह, उपाविशच्च।

तस्मिन् पूज्यमाने, 'योगिराडुत्थित' इति, आयात इति च आकर्ण्य, कर्णपरम्परया बहवो जनाः परितः स्थिताः। सुघटितं शरीरम्, सान्द्रां जटाम्, विशालान्यङ्गानि, अङ्गारप्रतिमे नयने, मधुरां गम्भीराञ्च वाचं वर्णयन्तश्चकिता इव सञ्जाताः।

## ९.२) साम्प्रतं मूलपाठमवगच्छाम – १

"विष्णोर्माया भगवती यया सम्मोहितं जगत्।" (भागवतम्१०।१।२५)

"हिंस्रः स्वपापेन विहिंसितः खलः

**साधु समत्वेन भयाद् विमुच्यते।" (भागवतम्, १०।७।३१)**

**अन्वयार्थः** - विष्णोः चराचरं विवेष्टि व्याप्नोति इति विष्णुः, तस्य जगद्व्यापकस्य नारायणस्य माया त्रिगुणमयी सत्त्वप्रधाना शक्तिः भगवती भगप्रभृतिषडैश्वर्यसम्पन्ना। कीदृशी सा इति तदुच्यते, यया सत्त्वप्रधानया मायया जगत् गच्छतीति जगत् निखिलं भुवनं सम्मोहितं चारुतया मोहेन वशीकृतम्।

हिंस्रः हिंसनशीलः खलो दुर्जनः स्वपापेन निजकृतेन पातकेन विहिसिंतः घातितः। साधुः सज्जनः समत्वेन रागद्वेषादिविरहिततया समत्वभावनया भयाद् भीतेः विमुच्यते मुक्तिं प्राप्नोति।

**व्याख्यानम्** - गद्यकाव्यस्यास्य विरामत्वेन विभागाः परिकल्पिताः। तत्र ग्रन्थादौ प्रथमे विरामे "समाप्तिकामो मङ्गलमाचरेत्" इति शिष्टाचारानुमितश्रुतिम् अनुसृत्य ग्रन्थस्य निर्विघ्नं परिसमाप्तये शिष्यशिक्षणाय च मङ्गलं विदधाति कविः अम्बिकादत्तव्यासः भागवतस्य श्लोकांशद्वयस्य उद्धरणेन। मङ्गलं त्रिविधं भवति - आशीर्वादात्मकं नमस्कारात्मकं वस्तुनिर्देशात्मकं च।

विष्णोर्माया इति प्रस्तुतेन श्लोकार्धेन देवतानमस्कारात्मकं मङ्गलं विहितम्। नमस्कारो हि नमस्कर्तुः अपकर्षबोधनं नमस्कार्य चोत्कर्षख्यापनं भवति। विष्णोर्माया इत्यत्र नमस्कारवाचकपदाभावः अस्ति चेदपि जगतः तन्मायाधीनत्वकथनात् जगति विद्यमानेभ्यः सर्वेभ्यः विष्णुः उत्कृष्टः इति बुध्यते। एवं विष्णोः नमस्कारविधानात् नमस्कारात्मकं भवति मङ्गलम्।

चराचरं विवेष्टि व्याप्नोति इति विष्णुः। तस्य नारायणस्य या भगवती भगप्रभृतिषडैश्वर्यसम्पन्ना माया सा समस्तं संसारं मोहयति। मोहो हि अविवेकः। मुग्धो जनो विवेचनाय न समर्थो भवति। यथा कस्मिंश्चिद् विषये तन्मयताम् आपन्नो जनो नान्यत् किञ्चिज्जानाति मायया मुग्धो जनोऽपि तथैव मायानिर्मितं लौकिकं वस्तुजातं विहाय अलौकिकं परमेश्वरतत्त्वं नावगच्छति। एषा अनवगतिरेव संसारे पुनरावर्तनस्य जननमरणचक्रे पतनस्य दुःखानुभूवस्य च मूलम्।

सा माया भगवती। मायाशक्तिः भगवतो न भिन्ना। दाहिका शक्तिर्यथा अग्नितो न भिन्ना मायाशक्तिरपि भगवतः विष्णुतो न भिन्ना। शक्ति- शक्तिमतोः नास्ति कश्चन भेदः। अतो यथैव भगवान् षडैश्वर्यसम्पन्नः भगवतः शक्तिरूपिणी मायापि तथैव षडैश्वर्यशालिनी। भगोऽस्यास्तीति भगवान्। भगशब्दस्य अर्थनिरूपणप्रसङ्गे उक्तम् -

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिणा।। इति।

एते ऐश्वर्यादयः षड्गुणाः भगवति पूर्णतया सदैव विराजमानाः। भगवतो भिन्नायां तच्छक्तौ अपि एते गुणा अवतिष्ठन्ते। अतः शक्तिरपि भगवतीति कथ्यते। एषा भगवतः शक्तिः भगवती माया दुर्गाकालिकादिरूपेण पुराणेषु उपवर्णिता। सा त्रिगुणमयी। त्रिषु गुणेषु अन्यतमं तमः। आवरणं नाम तमः। यथा तमसा आवृतो भवति प्रकाशः तथैव मायायाः तमोगुणेनापि आवृतं भवति ज्योतिःस्वरूपं परमतत्त्वम्।

हिंस्रः स्वपापेन इति श्लोकार्धेन वस्तुनिर्देशात्मकं मङ्गलं विदधाति कविः।अत्र काव्ये हिंस्रानां यवनशासकानां दुष्कर्मजनिता विनष्टिः तथा ग्रन्थनायकस्य सज्जनप्रवरस्य शिवराजस्य स्वपुण्यजनिता विजयरूपा अभ्युन्नतिः प्रदर्शिता। अतः मङ्गलमिदं वस्तुनिर्देशात्मकम् एव।

हिंस्रा हि मानवाः पापशीलाः। पातकञ्च मानवं नरके पातयति। दुर्जनाः दुष्कर्माणि कुर्वन्तः तज्जन्यपापैः काले विनश्यन्ति। तथा हि कंसादिपापाः स्वपापैरेव विनष्टाः। उच्यते च - "अनार्यजुष्टेन पथा प्रवृत्तानां शिवं कुतः" इति। किन्तु साधवः सत्कर्मभिः परित्राणं लभन्ते। सत्कर्मभिरेव धर्मो भवति। येन अयं धर्मो रक्ष्यते धर्मोऽपि तेन पुंसा रक्ष्यमाणः तं जनं रक्षति। तथा हि युधिष्ठिरादयः पाण्डवा विपदि पतिताः सन्तोऽपि स्वार्जितपुण्यैः अभ्युदयं लब्धवन्तः। उक्तञ्च गीतायां - "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति। एवं दुर्जननिन्दासज्जनप्रशंसाभ्यां सहृदयानां पाठकानां मङ्गलं विधीयते।

**व्याकरणविमर्शः**

- भगवती - भगः अस्य अस्तीति विग्रहे भगशब्दात् मतुपि भगवत् इति शब्दो निष्पद्यते। ततः स्त्रियां ङीपि सौ भगवती इति रूपम्।
- स्वपापेन – स्वं पापं स्वपापम्, तेन स्वपापेनेति कर्मधारयसमासः।
- विहिंसितः - विपूर्वकात् हिंस्धातोः क्तप्रत्यये विहिंसितशब्दो निष्पन्नः। ततः सौ विहिंसितः इति रूपम्।

**कोषः**

- "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः" इत्यमरः।
- "अथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः।
- "दरस्त्रासो भीतिर्भीः साध्वसं भयम्" इत्यमरः।

## पाठगतप्रश्नाः – १

१. कया सम्मोहितं जगत्।

२. कः स्वपापेन विहिंसितो भवति।

३. कः कथं भयाद् विमुच्यते।

४. विष्णोर्मायेति कीदृशं मङ्गलम्।

५. हिंस्रः इति कीदृशं मङ्गलम्।

## १.३) साम्प्रतं मूलपाठमवगच्छाम – २

**"अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः। एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य , शोकविमोकः कोकलोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य, इनश्च दिनस्य। अयमेव अहोरात्रं जनयति, अयमेव वत्सरं द्वादशसु भागेषु विभनक्ति, अयमेव कारणं षण्णामृतूनाम्, एष एवाङ्गीकरोति उत्तरं दक्षिणं चायनम्, एनेनैव सम्पादिता युगभेदाः, एनेनैव कृताः कल्पभेदाः, एनमेवाश्रित्य भवति परमेष्ठिनः परार्धसङ्ख्या, असावेव चर्करीर्ति बर्भर्ति जर्हर्ति च जगत्, वेदा एतस्यैव वन्दिनः, गायत्री अमुमेव गायति, ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहरहरुपतिष्ठन्ते। धन्य एष कुलमूलं श्रीरामचन्द्रस्य, प्रणम्य एष विश्वेषामि"ति उदेष्यन्तं भास्वन्तं प्रणमन् निजपर्णकुटिरात् निश्चक्राम कश्चित् गुरुसेवनपटुर्विप्रवटुः।**

**अन्वयार्थः** - भगवतः ईशस्य मरीचिमालिनः सूर्यस्य पूर्वस्यां प्राच्यां दिशि एषः अयम् अरुणः लोहितः प्रकाशः आलोकः। एषः अयं भगवान् दिवाकरः आकाशमण्डस्य गगनमण्डलस्य मणिः रत्नम्, खेचरचक्रस्य खेचरस्य चक्रस्य तारासमुदायस्य चक्रवर्ती सार्वभौमः प्रभुः, आखण्डलदिशः आखण्डलस्य इन्द्रस्य दिशः दिग्भागस्य पूर्वदिशः कुण्डलं कर्णवेष्टनम्, पूर्वदिशः कर्णाभरणरूपः इत्यर्थः। ब्रह्माण्डभाण्डस्य ब्रह्माण्डभवनस्य दीपकः प्रकाशः। पुण्डरीकपटलस्य कमलसमुदायस्य प्रेयान् नितान्तप्रियः, सूर्यः कमलानां प्रियतमः इत्यर्थः। कोकलोकस्य चक्रवाकसमुदायस्य शोकविमोकः शोकस्य दुःखस्य विमोकः अपहारकः नाशकः। चक्रवाकपक्षिणां रात्रौ स्वप्रियातः वियोगो भवति। सूर्ये उदिते दुःखं मिलनेन अपगतं भवति इत्यर्थः। रोलम्बकदम्बस्य रोलम्बस्य द्विरेफस्य कदम्बः व्रातस्य अवलम्बः आश्रयः, मधुकरसमुदायस्य आश्रयभूतः भास्करः इत्यर्थः। सर्वव्यवहारस्य सर्वविधकार्याणां सूत्रधारः प्रवर्तकः, सकलकार्याणाम् आरम्भकः सूर्यः। दिनस्य दिवसस्य इनः स्वामी, दिवसस्य प्रभुः सूर्यः इति। अयं सूर्यः एव अहोरात्रं दिवसं रात्रिं च जनयति, दिनरात्र्योः नियन्त्रकः इत्यर्थः। अयं सूर्यः एव वत्सरं वर्षं द्वादशसु द्वादशभागेषु भागेषु विभागेषु विभनक्ति विभाजयति, यतो हि सूर्यस्य गतिं दृष्ट्वा एव वर्षस्य निर्णयः भवति। अयं सूर्यः एव षण्णाम् ऋतूनाम् कारणं हेतुभूतम्, सूर्यस्य प्रकाशादिकं निर्णीय ऋतुगणना एव भवति। एषः सूर्यः एव उत्तरम् उदीचीं दक्षिणं अवाचीं च अयनम् स्वीयमार्गम् अङ्गीकरोति स्वीकरोति। एनेन भास्करेण एव युगभेदाः सत्यत्रेताद्वापरकलयः युगाः सम्पादिताः कृताः। एनेनैव सूर्येण कल्पभेदाः द्विसहस्रदेवयुगात्मकाः कालभेदाः कृताः व्यवस्थापिताः। एनमेव भास्करम् एव आश्रित्य अवलम्ब्य परमेष्ठिनः ब्रह्मणः परार्द्धसंख्या चरमा परार्धनाम्नी संख्या भवति। असौ सविता एव जगत् भुवनं चर्करीर्ति पुनः पुनः करोति, बर्भर्ति पुनः पुनः भरति, जर्हर्ति पुनः पुनः हरति। वेदाः ऋग्-यजुः-साम-अथर्वाः एतस्यैव सूर्यस्यैव वन्दिनः स्तुतिवाचकाः। गायत्री अमुमेव आदित्यम् एव गायति स्तौति। ब्रह्मनिष्ठाः वेदवेत्तारः ब्रह्मणि निष्ठाः ब्राह्मणाः अमुम् एव भास्करम् एव अहरहः प्रत्यहम् उपतिष्ठन्ते उपासते। श्रीरामचन्द्रस्य दशरथपुत्रस्य कूलमूलं वंशाग्रजः अयं सूर्यः। एष भास्करः, धन्यः प्रशंसायाः योग्यः, विश्वेषां समेषां जनानाम् प्रणम्यः वन्दनीयः - इति इत्थम् उदेष्यन्तम् उदीयमानं भास्वन्तं सूर्यं प्रणमन्

नमस्कुर्वन् निजपर्णकुटिरात् स्वपत्रोटजातात् स्वकीयगृहात् वा कश्चित् अज्ञातनामा (गौरसिंहः) गुरुसेवनपटुः आचार्यस्य सेवायाम् एकनिष्ठः विप्रवटुः ब्राह्मणस्य पुत्रः निश्चक्राम निर्गतवान्।

**व्याख्यानम्** - अत्र सूर्यस्य वर्णना क्रियते। तस्य सूर्यस्य प्रकाशः लोहितवर्णयुक्तः रक्ताभसहितः। अयं सूर्यः आकाशस्थानां नक्षत्रानां रत्नतुल्यः। पक्षिसमुदायस्य राजा सः सूर्यः। पूर्वदिग्भागस्य सः कर्णाभरणरूपः। पूर्वदिशः सः अलङ्कारः इत्यर्थः। ब्रह्माण्डस्य सः प्रदीपतुल्यः। सः स्वस्य आलोकेन पृथिव्याः सर्वम् आलोकयति। कमलवृन्दानि सूर्यस्य आलोकेन एव फुल्लन्ति। रात्रौ चक्रवाकविहगस्य स्वप्रियया सह वियोगः भवति। प्रातः पुनः सूर्यस्य आगमने तयोः मेलनं भवति। तस्मात् तयोः वियोगे यत् दुःखं जायते तस्य अयं सूर्यः नाशकः। मधुकराः मधूनाम् आहरणं कृत्वा जीवन्ति। ते पुष्पात् एव मधु स्वीकुर्वन्ति। सूर्यस्य उदये पुष्पानि विकसन्ति। तस्मात् मधुकरसमुदायस्य सूर्यः आधारभुतः। सर्वविधं शुभकार्यं दिवसे एव अनुष्ठीयन्ते। तस्मात् सूर्यःएव सकलकार्याणां प्रवर्तकः। सूर्यः उदेति चेदेव खलु दिवसः इति कथ्यते। तस्मात् दिवसस्य स्वामी सः सूर्यः। सूर्यस्य प्रभावेण दिवसः रात्रिः च भवति। भास्करस्य गत्या एव वर्षस्य गणना विधीयते। तस्यैव प्रभावेण षट् ऋतवः प्रकृतौ दृश्यन्ते। उत्तरायनं दक्षिणायनं च अस्य एव विधीयते। सूर्यः एव सत्ययुगस्य त्रेतायुगस्य द्वापरयुगस्य कलियुगस्य च सम्पादकः। द्विसहस्रदेवयुगात्मकः कालभेदः (२०० वत्सरात्मकः देवयुगः = १ कल्पयुगः) कल्पः इति उच्यते। तस्य अपि परिचालकः सूर्यः एव। ब्रह्मणः परार्द्धपर्यन्तं संख्यागणना सूर्यम् आश्रित्य एव भवति। अयं सूर्यः एव जगत् पुनः पुनः सृजति पालयति नाशयति च। ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः एते चत्वारः वेदाः। वेदाः सूर्यम् एव आधिक्येन स्तौति। गायत्रीमन्त्रस्य देवता सूर्यः एव। ब्रह्मणाः प्रत्यहं सूर्यस्य उपासनां कुर्वन्ति। सूर्यवंशस्य अयम् आदिपुरुषः। इत्थं भास्करं प्रणम्य एकः गुरुसेवानिष्ठः ब्राह्मणपुत्रः स्वस्य पर्णकुटिरात् बहिः आगतवान्।

**व्याकरणविमर्शः**

- मरीचिमालिनः - मरीचीनां माला मरीचिमाला इति षष्ठीतत्पुरुषसमासः। मरीचिमाला अस्य अस्तीति मरीचिमाली इति “अत इनिठनौ” इत्यनेन इनिप्रत्ययः।
- खेचरचक्रस्य – खे चरन्ति ये ते खेचराः विहगाः इत्यर्थः। तेषां खेचराणां चक्रं खेचरचक्रम्, तस्य इति षष्ठीतत्पुरुषसमासः।
- ब्रह्माण्डभाण्डस्य – ब्रह्माण्डमेव भाण्डं ब्रह्माण्डभाण्डम्, तस्य इति कर्मधारयसमासः।
- पुण्डरीकपटलस्य – पुण्डरीकाणां पटलं पुण्डरीकपटलम्, तस्य इति षष्ठीतत्पुरुषसमासः।
- रोलम्बकदम्बस्य – रोलम्बानां कदम्बः रोलम्बकदम्बः, तस्य इति षष्ठीतत्पुरुषसमासः।
- निजपर्णकुटीरात् - पर्णानां कुटीरः पर्णकुटीरः। निजस्य पर्णकुटीरः निजपर्णकुटीरः, तस्मात् निजपर्णकुटीरात् इत्युभयत्र षष्ठीतत्पुरुषसमासः।
- विप्रवटुः विप्रश्चासौ वटुः इति कर्मधारयसमासः। ब्राह्मणबालकः इत्यर्थः।
- जनयति - जन्धातोः णिचि लटि तिपि जनयतीति रूपम्। अत्र “बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः” इत्यनेन परस्मैपदम्।

- चर्कर्ति - डुकृञ् करणे इति धातोः यङ्लुकि लटि तिपि चर्कर्ति इति रूपम्।
- कुटीरः – ह्रस्वा कुटी इत्यर्थे “कुटीशमीशूण्डाभ्यो रः” इत्यनेन रप्रत्यये कुटीरशब्दो निष्पन्नः।
- उपतिष्ठन्ते - उपपूर्वकात् स्थाधातोः लटि ”उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्वति वक्तव्यम्” इत्यनेन आत्मनपदे प्रथमबहुवचने झप्रत्यये उपतिष्ठन्ते इति रूपम्।

## पाठगतप्रश्नाः–२

६. कस्य प्रकाशः पूर्वस्यां दिशि।

७. सूर्यः आकाशमण्डलस्य कः।

८. सूर्यः कस्य चक्रवर्ती।

९. ब्रह्माण्डभाण्डस्य कः।

१०. सूर्यः कस्य शोकविमोकः।

११. अयं वत्सरं केषु भागेषु विभनक्ति।

१२. उपतिष्ठन्ते इत्यत्र आत्मनेपदं कथम्।

१३. जनयति इत्यत्र परस्मैपदं कथम्।

१४. सूर्यः कस्य कुलमूलम्।

## ९.४) साम्प्रतं मूलपाठमवगच्छाम – ३

**“अहो चिररात्राय प्रसुप्तोऽहम्, स्वप्नजालपरतन्त्रेणैव महान् पुण्यमयः समयोऽतिवाहितः, सन्ध्योपासनसमयोऽयमस्मद्गुरुचरणानाम्, तत् सपदि अवचिनोमि कुसुमानि।” इति चिन्तयन् कदलीदलमेकमाकुञ्च्य, तृणशकलैः सन्धाय, पुटकं विधाय, पुष्पावचयं कर्तुमारेभे।**

**वटुरसौ आकृत्या सुन्दरः, वर्णेन गौरः, जटाभिर्ब्रह्मचारी, वयसा षोडशवर्षदेशीयः, कम्बुकण्ठः, आयतललाटः, सुबाहुर्विशाललोचनश्चासीत्।**

**अन्वयार्थः** - “अहो सविस्मयं चिररात्राय चिरकालं यावत् अहं वटुः प्रसुप्तः शयितः। स्वप्नजालपरतन्त्रेण निद्रानायासवशीभूतेन एव महान् पुण्यमयः अत्यन्तपुण्यवान् समयः कालः अतिवाहितः अतीतः। अस्मद्गुरुचरणानां मदीयाचार्यपादानाम् अयम् एष सन्ध्योपासनसमयः सन्ध्यासम्पादनकालः। तत् तस्मात् सपदि शीघ्रम् कुसुमानि पुष्पाणि अवचिनोमि सङ्कलयामि।” इति चिन्तयन् विचारयन् एकम् कदलीदलम् रम्भापर्णम् आकुञ्च्य आच्छिद्य तृणशकलैः बालतृणैः सन्धाय

संयोज्य, पुटकं कुसुमस्थापनपात्रं विधाय सम्पाद्य, पुष्पावचयं कुसमचयनं कर्तुं विधातुम् आरेभे आरब्धवान्।

असौ वटुः ब्रह्मचारी आकृत्या आकारेण सुन्दरः मनोरमः, वर्णेन रङ्गेण गौरः धवलः, जटाभिः ब्रह्मचारी वटुः, वयसा षोडशवर्षदेशीयः षोडशवयस्कल्पः, कम्बुकण्ठः शङ्खग्रीवः, आयतललाटः दीर्घभालः, सुबाहुः शोभनपाणिः विशाललोचनः दीर्घायितनयनः च आसीत् अभवत्।

**व्याख्यानम्** - ततः स वटुः अचिन्तयत् यत् स बहुकालं शयितः। तेन हि पुण्यमयः कालः निद्रापरतन्त्रतया यापितः। इदानीं तस्य गुरुचरणानां सन्ध्योपासनासमयः। अतः स सत्वरं कुसुमानि अवचेतुं एकम् कदलीपर्णम् आच्छिद्य तत्र बालतृणसन्धानेन कुसुमस्थापनपात्रं निर्माय पुष्पाणि चेतुम् आरब्धवान्।

स वटुः मनोरमकायः धवलवर्णीयः जटाभिः ब्रह्मचारी षोडशवयस्कः शङ्खग्रीवः दीर्घभालः सुन्दरबाहूपेतः विस्तृतलोचनः च आसीत्।

### व्याकरणविमर्शः

- स्वप्नजालपरतन्त्रेण – स्वप्न एव जालं स्वप्नजालमिति कर्मधारयसमासः। तस्य परतन्त्रेण स्वप्नजालपरतन्त्रेण इति षष्ठीतत्पुरुषसमासः।
- कदलीदलम् – कदल्याः दलं कदलीदलम् इति षष्ठीतत्पुरुषसमासः।
- तृणशकलैः - तृणानां शकलैः तृणशकलैः इति षष्ठीतत्पुरुषसमासः।
- पुष्पावचयम् - पुष्पाणाम् अवचयः पुष्पावचयः, तं पुष्पावचयम् इति षष्ठीतत्पुरुषसमासः।
- कम्बुकण्ठः - कम्बुरिव कण्ठो यस्य स कम्बुकण्ठः इति बहुब्रीहिः।
- आयतललाटः - आयतं ललाटं यस्य स आयतललाट इति बहुव्रीहिः।
- विशाललोचनः - विशाले लोचने यस्य स विशाललोचनः इति बहुव्रीहिसमासः।
- षोडशवर्षदेशीयः - षोडशवर्षशब्दाद् "ईषदसमाप्तौ कल्पब्देश्य-देशीयरः" इत्यनेन सूत्रेण देशीयर्-प्रत्यये षोडशवर्षदेशीयः इति रूपम्।

### कोषः

- "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरः।
- "ललाटमलिकं गोधिः" इत्यमरः।
- "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः।

## पाठगतप्रश्नाः – ३

१५. गौरवटुना महान् पुण्यमयः समयः कथम् अतिवाहितः।

१६. कस्येदानीं सन्ध्योपासनसमयः।

१७. किमर्थः गौरवटुः पुष्पाणि अवचिनोति।

१८. गौरवटुः कीदृशः।

## ९.५) साम्प्रतं मूलपाठमवगच्छाम – ४

**कदलीदलकुञ्जायितस्य एतत्कुटीरस्य समन्तात् पुष्पवाटिका, पूर्वतः परम–पवित्र–पानीयं परस्सहस्र–पुण्डरीक–पटल–परिलसितं पतत्रिकुल–कूजितपूजितं पयःपूरितं सर आसीत्। दक्षिणतश्चैको निर्झर–झर्झर–ध्वनित–दिगन्तरः, फल–पटलाऽऽस्वाद–चपलित–चञ्चु–पतङ्गकुलाऽऽ–क्रमणाधिक–विनत–शाख–शाखि समूह–व्याप्तः सुन्दरकन्दरः पर्वतखण्ड आसीत्।**

**अन्वयार्थः** - कदलीदलकुञ्जायितस्य रम्भापलाशोद्यानीभूतस्य, एतत्कुटीरस्य समीपतरवर्तिपर्णोटजस्य, समन्तात् परितः, पुष्पवाटिका कुसुमोद्यानम्, पूर्वतः प्राच्यां, परमपवित्रपानीयम् अत्यन्तपूतजलं, परःसहस्रपुण्डरीकपटलपरिलसितं सहस्राधिकश्वेतकमलसमूहोपशोभितं, पतत्रिकुलकूजितपूजितं विहगनिवहरवराजितं, पयःपूरितम् अम्भोभरितं, सरः कासारः, आसीत् अविद्यत। दक्षिणतः दक्षिणस्यां दिशि च एकः निर्झरझर्झरध्वनिध्वनितदिगन्तरः वारिप्रवाहझर्झरनादनिनादितदिगन्तरालः, फलपटलास्वादलपलितचञ्चुपतङ्गकूलाक्रमणाधिकविनतशाखशाखिसमूहव्याप्तः फल–समूहभक्षणचञ्चलमुखभाग–पतगनिवहाक्रमणातीवनम्रीभूतशाख–वृक्षसकलसमावृतः, सुन्दरकन्दरः शोभनदरः पर्वतखण्डः शिलाभाग आसीत् अवर्तत।

**व्याख्यानम्** - गौरसिंहो यस्मिन् कुटिरे न्यवसत् तस्य चतुर्षु दिग्भागेषु परिवृत्य रम्भापादपाः वर्तन्ते स्म। तेन तत् कुटीरं कुञ्जायते स्म। परितश्च आसन् पुष्पोद्यानानि। अस्य पूर्वतो वर्तते जलसम्पूरितः सरोवरो यत्र पवित्रासु अप्सु सहस्रशः श्वेताब्जानि शोभन्ते स्म। अपि च, पक्षिभिराकुलितः स तेषां कलरवैः सर्वदा मुखरितोऽवर्तत। दक्षिणत आसीद् एकः पर्वतखण्डो यस्य वृक्षा आसन् विहगकुलकुलायभूताः। रम्यैः कन्दरैः सुशोभितात् तस्मात् पर्वतखण्डात् प्रच्यवन्त्याः निर्झरिण्या झर्झरध्वनिना चतुर्दिशो ध्वनिता अभूवन्।

**व्याकरणविमर्शः**

- कदलीदलकुञ्जायितस्य - कदलीनां दलानि कदलीदलानि इति षष्ठीतत्पुरुषसमासः, तैः कुञ्जायित इति तृतीयातत्पुरुषसमासः, तस्य।
- परमपवित्रपानीयं - परमं च तत् पवित्रं चेति कर्मधारयः, तादृशं पानीयं यस्य तत् इति

बहुव्रीहिसमासः।

- परस्सहस्रपुण्डरीकपटलपरिलसितम् - परस्सहस्राणि इति निपातनात् समासः। "पारस्करप्रभृतीनि च संज्ञायाम्" इति सुडागमः। परस्सहस्राणि पुण्डरीकाणि इति कर्मधारयसमासः। तेषां पटलमिति षष्ठीतत्पुरुषसमासः। तेन परिलसितमिति तृतीयातत्पुरुषसमासः।
- पतत्रिकुलकूजितपूजितम् - पतत्रिणां कुलं पतत्रिकुलमिति षष्ठीतत्पुरुषसमासः। तस्य कूजितमिति षष्ठीतत्पुरुषसमासः। तेन पूजितमिति तृतीयातत्पुरुषसमासः।
- पयःपूरितं - पयसा पूरितम् इति तृतीयातत्पुरुषसमासः।
- निर्झरझर्झरध्वनिध्वनितदिगन्तरः - झर्झररूपः ध्वनिः झर्झरध्वनिः शाकपार्थिवादिवत् समासः। निर्झराणां झर्झरध्वनिरिति षष्ठीतत्पुरुषसमासः। तेन ध्वनितानि इति तृतीयातत्पुरुषसमासः। तादृशानि दिगन्तराणि यस्य स इति बहुव्रीहिसमासः।
- फलपटलाऽऽस्वादचपलितचञ्चुपतङ्गकुलाऽऽक्रमणाधिकविनत-शाशशाखिसमूहव्याप्तः - फलानां पटलं फलपटलमिति षष्ठीतत्पुरुषः। तस्य आस्वादः फलपटलास्वादः इति षष्ठी-तत्पुरुषः। तेन चपलिताः फलपटलास्वादचपलिताः इति तृतीया-तत्पुरुषः। तादृशाः चञ्चवः येषां ते फलपटलास्वादचपलितचञ्चवः इति बहुव्रीहिः। तादृशाः पतङ्गा इति कर्मधारयसमासः। तेषां कुलमिति षष्ठीतत्पुरुषः। तस्य आक्रमणम् इति षष्ठीतत्पुरुषः। तेन आक्रमणेन अधिकविनताः इति तृतीयातत्पुरुषः। अधिकविनताः शाखाः येषां ते अधिकविनताशाखा इति बहुव्रीहिः। तादृशाः शाखिनः इति कर्मधारयः। तेषां समूह इति षष्ठीतत्पुरुषः। तेन व्याप्त इति तृतीयातत्पुरुषः।
- सुन्दरकन्दरः - सुन्दराः कन्दराः यस्मिन् स इति बहुव्रीहिसमासः।

**कोषः**

- "कदली वाणरबुसा रम्भा मोचांशुमत्फला" इत्यमरः।
- "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः।
- "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः।
- "दरी तु कन्दरो वा स्त्री" इत्यमरः।

## पाठगतप्रश्नाः–४

१९. कुटीरं कीदृशम्।

२०. कुटीरस्य समन्तात् किमासीत्।

२१. कुटीरस्य पूर्वतः कीदृशं सर आसीत्।

२२. कुटीरस्य दक्षिण्यस्यां दिशि किमासीत्।

२३. निर्झरझर्झरध्वनिध्वनितदिगन्तरः इत्यत्र समासः लेख्यः।

२४. परमपवित्रपानीयम् इत्यत्र समासः लेख्यः।

## १.६) साम्प्रतं मूलपाठमवगच्छाम – ५

**यावदेष ब्रह्मचारी वटुरलिपुञ्जमुद्धूय कुसुमकोरकानवचिनोति, तावत् तस्यैव सतीर्थ्योऽपरस्तत्समानवयाः कस्तूरिका-रेणुरूषित इव श्यामः, चन्दनचर्चित-भालः कर्पूरागुरु-क्षोदच्छुरित-वक्षो-बाहु-दण्डः, सुगन्धपटलै-रुन्निद्रयन्निव निद्रामन्थराणि कोरकनिकुरम्बकान्तरालसुप्तानि मिलिन्दवृन्दानि झटिति समुपसृत्य निवारयन् गौरवटुमेवमवादीत्-**

**'अलं भो अलम्! मयैव पूर्वमवचितानि कुसुमानि, त्वं तु चिरं रात्रावजागरीरिति क्षिप्रं नोत्थापितः, गुरुचरणा अत्र तडागतटे सन्ध्यामुपासन्ते, संस्थापिता मया निखिला सामग्री तेषां समीपे। यां च सप्तवर्षकल्पाम्, यवनत्रासेन निःशब्दं रुदतीम्, परमसुन्दरीम्, कलितमानवदेहामिव सरस्वतीं सान्त्वयन्, मरन्दमधुरा अपः पाययन्, कन्दखण्डानि भोजयन्, त्वं त्रियामाया यामत्रयमनैषीः, सेयमधुना स्वपिति, उद्बुद्ध्य च पुनस्तथैव रोदिष्यति, तत्परिमार्गणीयान्येतस्याः पितरौ गृहं च-'**

**इति संश्रुत्य उष्णं निःश्वस्य यावत् सोपि किञ्चिद् वक्तुमियेष तावदकस्मात् पर्वतशिखरे निपपात तयोर्दृष्टिः।**

**अन्वयार्थः** - यावत् यावत्कालपर्यन्तम् एष पूर्ववर्णितः ब्रह्मचारी वटुः ब्रह्मव्रती अलिपुञ्जं भ्रमरकुलम् उद्धूय निवार्य कुसुमकोरकान् पुष्पकुड्मलान् अवचिनोति चिनोति, तावत् तस्मिन्नेव काले तस्य एव वटोः एव सतीर्थ्यः सहाध्येता अपरः अन्यः तत्समानवयाः तत्समवर्षीयः, कस्तूरिकारेणुरुषितः मृगनाभिचूर्णच्छुरितः इव श्यामः श्यामवर्णीयः, चन्दनचर्चितभालः चन्दनलिप्तललाटः, कर्पूरागुरु-क्षोदच्छुरित-वक्षो-बाहु-दण्डः कपूरागुरुचूर्णलिप्तवक्षःस्थलभुजदण्डः, सुगन्धपटलैः सौरभसमूहैः उन्निद्रयन् जागरयन् इव निद्रामन्थराणि तन्द्राशिथिलानि कोरकनिकुरम्बकान्तरालसुप्तानि कलिकासमूहान्तरनिद्रागतानि मिलिन्दवृन्दानि मधुकरकुलानि झटिति शीघ्रं समुपसृत्य समागत्य निवारयन् ताडयन् गौरवटुं शुक्लवर्णीयं ब्रह्मचारिणम् अवादीत् अकथयत्-

"अलं भो अलम्! भो मित्र पुष्पचयनेन प्रयोजनं नास्ति, मया एव पूर्वम् आदौ कुसुमानि प्रसूनानि अवचितानि सङ्कलितानि, त्वं तु गौरवटुः तु चिरं बहुसमयं रात्रौ यामिन्याम् अजागरीः जागरितवान् इति अस्मात् कारणात् क्षिप्रं शीघ्रं न उत्थापितः न जागरितः। गुरुचरणाः आचार्यपादाः अत्र अस्मिन् स्थाने तडागतटे पुष्करिण्याः तीरे सन्ध्यां प्रातःकालीनाम् पूजाम् उपासन्ते विदधति। तेषां गुरुवर्याणां समीपे निकटे मया श्यामवटुना निखिला सामग्री समस्तानि सन्ध्योपासनसहायकानि द्रव्याणि संस्थापिता समुपकल्पितानि। यां पूर्वदृष्टां च पुनः सप्तवर्षकल्पां प्रायः सप्तवर्षीयां यवनत्रासेन यवनभयेन निःशब्दं शब्दरहिततया रुदतीं क्रन्दन्तीं परमसुन्दरीम् अतिशयकमनीयां कलितमानवदेहाम् धृतनरमूर्तिम्

सरस्वतीम् इव शारदाम् इव सान्त्वयन् समाश्वसयन्, मरन्दमधुराः पुष्परसोपेतानि अपः जलानि पाययन् गलविवरं प्रवेशयन्, कन्दखण्डानि मुनिभोज्यविशेषभागान् भोजयन् खादयन् त्वं गौरवटुः त्रियामाया यामिन्याः यामत्रयं प्रहरत्रयम् अनैषीः यापितवान् असि, सा इयं सा कन्यका अधुना इदानीं स्वपिति निद्रां यापयति। उद्बुद्ध्य उत्थाय च पुनः तथैव पूर्ववत् रोदिष्यति क्रन्दिष्यति, तत् तस्माद् हेतोः एतस्याः कन्यकायाः पितरौ मातापितरौ गृहं च भवनं च परिमार्गणीयानि अन्वेषणीयानि"

इति एवं संश्रुत्य श्रुत्वा उष्णं बलात् निःश्वस्य निःश्वसनं सम्पाद्य यावत् यावत्कालं स गौरवटुः अपि किञ्चिद् वक्तुं कथयितुम् इयेष वाञ्छति स्म तावद् तदैव अकस्मात् हठात् पर्वतशिखरे गिरिशृङ्गे तयोः गौरवटु–श्यामवट्वोः दृष्टिः दर्शनं निपपात अपतत्।

**व्याख्यानम्** - यदा गौरवटुः भ्रमरकुलं निवार्य कुसुमानि अवचिनोति स्म तदा तस्य सहाध्येता तत्समानवयस्कः श्यामवटुः आगतः। श्यामवटुः दर्शनेन अतीव श्यामलः। तस्य भालदेशः चन्दनचर्चितः, वक्षःस्थलं कपूरागुरुचूर्णलिप्तम् आसीत्। स शीघ्रमागत्य कुसुमाभ्यन्तरे निद्रात उत्थितानि मधुकरवृन्दानि समागत्य निवारयन् गौरवटुं कथितवान् यत् पुष्पचयनेन प्रयोजनं नास्ति। तेन पूर्वम् एव कुसुमानि चितानि। गौरवटुः तु रात्रौ बहुसमयं जागरित आसीत् अतः प्रातः स न उत्थापितः। गुरुचरणाः तडागतटे सन्ध्यांवन्दनं कुर्वन्ति। तेषां सन्ध्योपासनसहायकानि द्रव्याणि श्यामवटुना संस्थापितानि। ततः स कथितवान् यद् यां सप्तवर्षकल्पां यवनभयेन क्रन्दन्तीं सान्त्वयन् त्वं अपः पाययन् मुनिभोज्यं भक्षयन् रात्रौ त्रीन् प्रहरान् यापितवान् सा कन्यका साम्प्रतं निद्राति। तस्याः रोदनं यथा न स्यादतः तस्या पितरौ गृहं च भवनं च अन्वेष्टव्यम् इति। एवं श्रुत्वा गौरवटुः यदा किञ्चिद्वक्तुम् उद्यतः तदा द्वयोः हठात् पर्वतशृङ्गे दृष्टिपातः अभवत्।

**व्याकरणविमर्शः**

- कुसुमकोरकान् - कुसुमानां कोरकाः कुसुमकोरकाः, तान् इति षष्ठीतत्पुरुषः।
- तत्समानवयाः - तस्य समानः तत्समानः इति षष्ठीतत्पुरुषः। तत्समानं वयः यस्य स इति बहुव्रीहिसमासः।
- कस्तूरिकारेणुरूषितः - कस्तूरिकाणां रेणवः कस्तूरिकारेणवः इति षष्ठीतत्पुरुषः। तैः रूषितः इति तृतीयातत्पुरुषः।
- चन्दनचर्चितभालः - चन्दनेन चर्चितं चन्दनचर्चितमिति तृतीयातत्पुरुषः। चन्दनचर्चितं भालं यस्य स इति बहुव्रीहिः।
- कर्पूरागुरुक्षोदच्छुरितवक्षोबाहुदण्डः - कर्पूरमिश्रितः अगुरुः कर्पूरागुरुः इति शाकपार्थिवादिवत्समासः। तस्य क्षोदः इति षष्ठीतत्पुरुषः। तेन छुरितम् इति तृतीयातत्पुरुषः। कर्पूरागुरुक्षोदच्छुरितं वक्षोबाहुदण्डं यस्य स कर्पूरागुरुक्षोदच्छुरित-वक्षोबाहुदण्डः इति बहुव्रीहिः। वक्षश्च बाहुदण्डौ च वक्षबाहुदण्डमिति समाहारद्वन्द्वः।
- मिलिन्दवृन्दानि - मिलिन्दानां वृन्दानि इति षष्ठीतत्पुरुषः।
- तडागतटे - तडागस्य तटः तडागतटः, तस्मिन्निति षष्ठीतत्पुरुषः।



- यवनत्रासेन – यवनेभ्यः त्रासेन यवनत्रासेनेति पञ्चमीतत्पुरुषः।
- कलितमानवदेहाम् - मानवानां देहः मानवदेहः इति षष्ठीतत्पुरुषः। कलितो मानवदेहः यया सा, ताम् इति बहुव्रीहिः।
- समुपसृत्य - समुपसंघातपूर्वकात् सृधातोः ल्यपि समुपसृत्य इति।
- निवारयन् - निपूर्वकाद् वारिधातोः शतरि पुंसि सौ निवारयन् इति।
- अवादीत् - वदेर्लुङि तिपि अवादीत् इति।
- अवचितानि - अवपूर्वकात् चिनोतेः कर्मणि क्तप्रत्यये नपुंसके जसि रूपम्।
- अजागरीः - जागर्तेः लुङि सिपि अजागरीः इति रूपम्।
- उत्थापितः - उत्पूर्वकात् स्थाधातोः णिचि कर्मणि क्तप्रत्यये पुंसि सौ उत्थापितः इति रूपम्।
- सान्त्वयन् - सान्त्व्-धातोः शतरि पुंसि सुप्रत्यये सान्त्वयन् इति।

**कोषः**

- "स्यान्निकायः पुञ्जराशिः" इत्यमरः।
- "सतीर्थ्यास्त्वेकगुरवः" इत्यमरः।
- "कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः।



## पाठगतप्रश्नाः–५

२५. श्यामवटुः कीदृश आसीत्।

२६. आचार्यपादाः कुत्र सन्ध्यावन्दनं कुर्वन्ति स्म।

२७. श्यामवटुना का संस्थापिता।

२८. गौरवटुः कथं प्रहारत्रयं जागरितवान्।

२९. गौरवटुः किं पाययन् स्थितः।

३०. सा बाला कथं रोदिति स्म।

३१. गौरवटुना श्यामवटुना च कानि परिमार्गणीयानि।

३२. कुत्र गौरवटोः श्यामवटोश्च दृष्टिः पतिता।

## १.७) साम्प्रतं मूलपाठमवगच्छाम – ६

**तस्मिन् पर्वते आसीदेको महान् कन्दरः। तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठति स्म। कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति। ग्रामणी-ग्रामीण-ग्रामाः समागत्य मध्ये मध्ये तं**

**पूजयन्ति, प्रणमन्ति स्तुवन्ति च। तं केचित् कपिल इति, अपरे लोमश इति, इतरे जैगीषव्य इति अन्ये च मार्कण्डेय इति, विश्वसन्ति स्म। स एवायमधुना शिखरादवतरन् ब्रह्मचारिवटुभ्यामदर्शि।**

**अन्वयार्थः** - तस्मिन् पूर्वोक्ते पर्वते गिरौ एकः महान् विशालं कन्दरः गह्वरम् आसीत् अभवत्। तस्मिन् एव तस्मिन् गह्वरे एव एकः महामुनिः महर्षिः समाधौ चित्तवृत्तिनिरोधाख्ये योगे तिष्ठति स्म वर्तते स्म। कदा कस्मिन् समये स महामुनिः समाधिं योगम् अङ्गीकृतवान् स्वीकृतवान् इति न कोऽपि वेत्ति जानाति। ग्रामणी–ग्रामीण–ग्रामाः ग्रामाधिप–ग्रामवासिनां निवहाः समागत्य समुपेत्य मध्ये मध्ये अन्तरा अन्तरा तं समाधिस्थं मुनिपुङ्गवं पूजयन्ति वरीवस्यन्ति, प्रणमन्ति नमस्कुर्वन्ति स्तुवन्ति स्तुतिं कुर्वन्ति च। तं योगिराजं केचित् केचन जनाः कपिलः सिद्धाग्रगण्यः कपिलाख्यो मुनिः इति एवं प्रकारेण, अपरे अन्ये लोमशः तदाख्यो मुनिः इति, इतरे अपरे जैगीषव्यः तदाख्यो मुनिः इति, अन्ये इतरे च मार्कण्डेय एतन्नामा मुनिः इति विश्वसन्ति स्म विश्वासं कुर्वन्ति स्म। स एव तादृशः महामुनिरेव अयम् एषः अधुना सम्प्रति शिखरात् अचलशृङ्गात् अवतरन् नीचैरागच्छन् ब्रह्मचारिवटुभ्याम् वेदाध्यायिभ्यां गौरश्यामवटुभ्याम् अदर्शि दृष्टः।

**व्याख्यानम्** - युगयुगान्तराणि तस्य पर्वतस्य कन्दरे एकः योगिराजः मुनिप्रवरः समाधिमग्नो वर्तते। तस्य प्रकृतं स्वरूपं न कोऽपि वेत्ति। केचित्तं कपिलं, केचित् जैगीषव्यं, इतरे लोमशं केदिद्वा तं मार्कण्डेयं जानन्ति विश्वसन्ति च। कपिलो हि सिद्धानाम् अग्रगण्यः सांख्यशास्त्रस्य प्रवक्ता मुनिसत्तमः। स हि वस्तुतः श्रीविष्णोरंशावतारः "सिद्धानां कपिलो मुनिरि"ति भगवद्वचनात्। जैगीषव्यः महाभारतोक्तः प्रख्यातः सिद्धमहर्षिः। योगबलेन आत्तशक्तिः स युगपत् सर्वलोकचारी अभवत्। लोमशः महाभारतवर्णितो मुनिविशेषो यो बहुशः पृथिव्याः प्रदक्षिणं कृतवान्। भगवता व्यासेन आदिष्टः सन् स वनवासकाले पाण्डवान् तीर्थस्थानानि नैकानि अदर्शयत्। मृकण्डमुनेरपत्यं मार्कण्डेयो भगवतः शिवस्याराधनां कृत्वा तत्प्रसादात् चिरजीवी बभूव। ग्रामपतयः तथा सर्वाः ग्राम्यप्रजाः समागम्य मध्ये मध्ये तस्मै पूजाप्रणामादिकं निवेदयन्ति स्म। किन्तु योगिराजस्य समाधिर्न भग्नः। चित्तवृत्तिनिरोधो हि योगः। योगस्य चरमावस्था हि समाधिः। समाधिर्नाम ध्यानावस्थाविशेषो यत्र तत्त्वसाक्षात्कारो भवति। तत्र बाह्यं रूपादिकं न प्रतीयते। बाह्यं किमपि वृत्तं निरुद्धचित्तं योगिनं न स्पृशति। अत एव पूजादिना स योगी न समाधित उत्थितः। स योगिराज इदानीं पर्वताद् अवतरति इति गौरवटुः श्यामवटुश्च दृष्टवान्।

### व्याकरणविमर्शः

- महामुनिः – महान् चासौ मुनिः महामुनिः इति कर्मधारयसमासः।
- ग्रामणीग्रामीणग्रामाः - ग्रामण्यश्च ग्रामीणाश्च ग्रामणीग्रामीणाः इतरेतरद्वन्द्वसमासः। तेषां ग्रामाः ग्रामणीग्रामीणग्रामाः इति षष्ठीतत्पुरुषसमासः।
- अदर्शि - दृश्धातोः कर्मणि लुङि प्रथमपुरुषैकवचने रूपम्।
- अवतरन् - अवपूर्वात् तृधातोः शतरि सौ रूपमिदम्।

**कोषः**

- "समौ संवसथ-ग्रामौ" इत्यमरः।
- "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा। गह्वरम्" इत्यमरः।

## पाठगतप्रश्नाः – ६

३३. तस्य पर्वतस्य कन्दरे कः निवसति स्म।

३४. महामुनिं के पूजयन्ति स्म।

३५. महामुनिं कीदृशं विश्वसन्ति स्म।

३६. कं पर्वतशिखराद् अवतरितुं दृष्टवान् गौरवटुः श्यामवटुः च।

## १.८) साम्प्रतं मूलपाठमवगच्छाम – ७

**'अहो! प्रबुद्धो मुनिः! प्रबुद्धो मुनिः! इत एवागच्छति, इत एवागच्छति, सत्कार्योऽयं सत्कार्योऽयम्' इति तौ सम्भ्रन्तौ बभूवतुः।**

**अथ समापितसन्ध्यावन्दनादिक्रिये समायाते गुरौ, तदाज्ञया नित्यनियमसम्पादनाय प्रयाते गौरवटौ, छात्रगणसहकारेण प्रस्तुतासु च स्वागतसामग्रीषु, 'इत आगम्यताम्, सनाथ्यतामेष आश्रमः' इति सप्रणाममभिगम्य वदत्सु निखिलेषु , योगिराज आगत्य तन्निर्दिष्टकाष्ठपीठं भास्वानिवोदयगिरिमारुरोह, उपाविशच्च।**

**तस्मिन् पूज्यमाने, 'योगिराडुत्थित' इति, आयात इति च आकर्ण्य, कर्णपरम्परया बहवो जनाः परितः स्थिताः। सुघटितं शरीरम्, सान्द्रां जटाम्, विशालान्यङ्गानि, अङ्गारप्रतिमे नयने, मधुरां गम्भीराञ्च वाचं वर्णयन्तश्चकिता इव सञ्जाताः।**

**अन्वयार्थः** - 'अहो! प्रबुद्धो मुनिः! प्रबुद्धो मुनिः! साश्चर्यं समाधित उत्थितो मुनिः, इतः अस्मदाश्रमाभिमुखम् एव आगच्छति आयाति, इत अस्मदाश्रमाभिमुखम् एव आगच्छति आयाति, अयं योगिराजः सत्कारयोग्यः अयं सत्कार्यः सत्कारार्हः' इति तौ गौरवटुश्यामवटू सम्भ्रन्तौ हर्षान्वितौ बभूवतुः अभवताम्।

अथ ततः परं समापितसन्ध्यावन्दनादिक्रिये विहितसन्ध्यावन्दनादिकर्मके समायाते समागते गुरौ आचार्ये, तदाज्ञया गुरोराज्ञया नित्यनियमसम्पादनाय सन्ध्यावन्दनादिनित्यकर्मनिष्पादनाय प्रयाते गते गौरवटौ श्वेतब्रह्मचारिणि, छात्रगणसहकारेण शिष्यसमुदायसाहाय्येन स्वागतसामग्रीषु अभिवादनोपचारद्रव्येषु प्रस्तुतासु सज्जीकृतेषु च, 'इत अत्र आगम्यतां समागम्यताम्, सनाथ्यताम्

अलङ्क्रियताम् एष आश्रमः इदं तपस्विस्थलम्' इति सप्रणामं प्रणामसहितम् अभिगम्य समागत्य वदत्सु भाषमाणेषु निखिलेषु सर्वेषु उपस्थितेषु, योगिराजः मुनिप्रवरः आगत्य एत्य तन्निर्दिष्टकाष्ठपीठं मुनिनिमित्तनिर्दिष्टां दारुनिर्मितचतुष्पादिकां भास्वान् इव दिवाकरः इव उदयगिरिम् उदयाचलम् आरुरोह आरूढवान् उपाविशत् उपविष्टवान् च।

तस्मिन् मुनिप्रवरे पूज्यमाने अर्च्यमाने 'योगिराट् महामुनिः उत्थित समुत्थितः' इति, 'आयातः समागतः' इति च कर्णपरम्परया श्रुतिमार्गेण आकर्ण्य संश्रुत्य बहवो जनाः नैके मानवाः परितः सर्वासु दिक्षु स्थिताः सम्प्राप्ताः। ते सुघटितं शोभनाकारं शरीरं कायम्, सान्द्रां प्रगाढां जटां सटाम्, विशालानि दीर्घायतान् अङ्गानि अवयवान्, अङ्गारप्रतिमे अङ्गारसदृशे नयने नेत्रे, मधुरां मनोहरां गम्भीरां गभीरां च वाचं वाणीं वर्णयन्तः प्रशंसन्तः चकिता विस्मिता इव सञ्जाताः अभवन्।

**व्याख्यानम् -** प्रबुद्धो मुनिः अतः तस्य सत्कारो विधेयः इति गौरवटुः श्यामवटुः च हर्षान्वितः अभवत्। ततः सन्ध्यावन्दनादिक्रियां सम्पाद्य गुरुचरणाः समागताः। तदाज्ञया गौरवटुः नित्यनियमसम्पत्तये गतः। तदा छात्रगणसहिताः सर्वे स्वागतसामग्रीः सज्जीकृत्य 'अत्र आगम्यताम्, अलङ्क्रियताम् एष आश्रमः' इति सप्रणामं समागत्य वदन्त आसन्। ततः योगिराजः मुनिप्रवरः आगत्य मुनिनिमित्तनिर्दिष्टां दारुनिर्मितचतुष्पादिकां भास्वान् इव दिवाकरः इव उदयगिरिम् उदयाचलम् आरुह्य उपविष्टवान्।

तस्य मुनिप्रवरस्य योगिराजस्य पूजनात्परं 'योगिराट् उत्थितः' इति, 'आयातः' इति च वार्तां कर्णपरम्परया श्रुत्वा बहवो जनाः आश्रमम् आगताः। तस्य योगिराजस्य सुघटितः कायः, प्रगाढा जटा, विशालाः च अवयवाः, अङ्गारसदृशे नेत्रे, मनोहरा गम्भीरा च वाणी आसीत्। एतत्सर्वं प्रशंसन्तः जना चकिता अभवन्।

### व्याकरणविमर्शः

- समापितसन्ध्यावन्दनादिक्रिये – सन्ध्याया वन्दनम् इति सन्ध्यावन्दनमिति षष्ठीतत्पुरुषः। सन्ध्यावदनम् आदि यासां ताः सन्ध्यावन्दनादयः इति बहुव्रीहिसमासः। ताश्चामी क्रियाश्चेति सन्ध्यावन्दनादिक्रियाः इति कर्मधारयः। समापिताः सन्ध्यावन्दनादिक्रियाः येन स समापितसन्ध्यावन्दनादिक्रियः, तस्मिन् इति बहुव्रीहिः।
- नित्यनियमसम्पादनाय – नित्याः नियमाः नित्यनियमाः इति कर्मधारयः। तेषां सम्पादनाय नित्यनियमसम्पादनाय इति षष्ठीतत्पुरुषः।
- स्वागतसामग्रीषु - स्वागतार्थाः सामग्र्यः स्वागतसामग्र्यः, तासु इति शाकपार्थिवादिवत्समासः।
- आरुरोह – आङ्पूर्वकाद् रुह्धातोः लिटि तिपि आरुरोह इति।
- उपाविशत् - उपपूर्वपूर्वकाद् विशतेः लङि तिपि उपाविशत् इति।

### कोषः

- "भास्वद्विवश्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः।

● "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः।

## पाठगतप्रश्नाः–८

३७. महामुनिः कुत्र उपाविशत्।

३८. महामुनिः क इव कुत्र आरुरोह।

३९. नित्यनियमसम्पादनाय इत्यत्र समासनिर्णयः कार्यः।

४०. महामुनिः दर्शनेन कीदृश आसीत्।

## पाठसारः

सूर्यः आकाशस्थनक्षत्राणां मध्ये मणिरूपः। पूर्वस्यां दिशायां स कुण्डलरूपेण विराजते। स कमलस्य वल्लभः चक्रवाकमिथुनस्य च शोकापहारकः। यतः सूर्यस्य उदयास्तगमनाभ्यां नियम्यते पद्मिनीमां प्रकाशः मालिन्यं च। दिनस्वामी स सूर्यः सर्वव्यवहाराणां प्रवर्तयिता। किं बहुना। सूर्ये उदिते दिनम् अस्तमिते च रात्रिः पृथिव्यां विधीयते। सूर्यगतिकारणाद् एव द्वादशवत्सरस्य भेदाः, ऋतूनां युगानां तथा कल्पानाम् अपि भेदाः भवन्ति। वेदेषु सूर्यदेवः एव स्तूयते। गायत्रीमन्त्रेण सद्विप्राः प्रतिदिनं सूर्यस्य एव उपासनां कुर्वन्ति। तस्यैव कुले भगवान् श्रीरामचन्द्रः जन्म अलभत। अत एव स विश्ववासिनां परमपूजनीयः इत्येवं सूर्यवन्दनं कुर्वन् निजकुटिरात् गौरवटुः बहिरागतः।

विलम्बात् प्रबोधनहेतोः गुरुसेवायां विघ्नम् आशङ्क्य स गुरोः सन्ध्योपासनार्थं पुष्पावचयं कर्तुमुद्यतः। अतः स सत्वरं कुसुमानि अवचेतुं एकम् कदलीपर्णम् आच्छिद्य तत्र बालतृणसन्धानेन कुसुमस्थापनपात्रं निर्माय पुष्पाणि चेतुम् आरब्धवान्। स वटुः मनोरमकायः धवलवर्णीयः जटाभिः ब्रह्मचारी प्रायः षोडशवयस्कः शङ्खग्रीवः दीर्घभालः सुन्दरबाहूपेतः विस्तृतलोचनः च आसीत्।

एतस्मिन् अवसरे तस्यैव कोऽपि सतीर्थः श्यामवटुः आगम्य अवदत् यद् अलं पुष्पचयनेन इति। स श्यामवटुः दर्शनेन अतीव श्यामलः। तस्य भालदेशः चन्दनचर्चितः, वक्षःस्थलं कपूरागुरुचूर्णलिप्तम् आसीत्। स गौरवटुम् उक्तवान् यद् यवनत्रासाद् भीतायाः बालिकायाः सेवया गौरवटोः रात्रौ प्रहरत्रयम् अतीतम्। अतः स प्रातः शीघ्रं न जागरितः। श्यामवटुना गुरोः उपासनसामग्री प्रागेव उपकल्पिता। अधुना तस्याः बालिकायाः पित्रोः गृहस्य च अन्वेषणं विधातव्यमिति। तयोः आलापसमये हठात् तयोः पर्वतशिखरे दृष्टिः पतिता।

तत्र पर्वतस्य कन्दरे बहुसमयं व्याप्य एकः महामुनिः समाधौ मग्न आसीत्। तस्य परिचयः कोऽपि न जानाति स्म। तं मुनिं तत्रत्या ग्रामण्यः ग्रामवासिनश्च पूजयन्ति स्म। स एव मुनिः समाधित उत्थाय

यदा पर्वताद् अवतरन् आसीत् तदा वटुद्वयेन स दृष्टः। स च तपोवनाभिमुखं समागच्छति स्म। ततः तपोवनाध्यक्षेण सच्छात्रेण ब्रह्मचारिगुरुणा स महामुनिः स्वागतवाग्भिः समाहूतः यथाविधि अभ्यर्चितश्च। ततः योगिराजः आगत्य मुनिनिमित्तनिर्दिष्टां दारुनिर्मितचतुष्पादिकां भास्वान् इव दिवाकरः इव उदयगिरिम् उदयाचलम् आरुह्य उपविष्टवान्।

स मुनिः समाधित उत्थितः आश्रमम् आयातः इति च वार्तां कर्णपरम्परया श्रुत्वा बहवो जनाः तं द्रष्टुम् आश्रमम् आगताः। तस्य योगिराजस्य सुघटितः कायः, प्रगाढा जटा, विशालाः च अवयवाः, अङ्गारसदृशे नेत्रे, मनोहरा गम्भीरा च वाणी आसीत्। एतत्सर्वं प्रशंसन्तः जना चकिता अभवन्। एवं समासेन पाठसारः प्रस्तुतः।

## पाठान्तप्रश्नाः

१. विष्णोर्माया भगवती यया सम्मोहितं जगत् - इति श्लोकांशं व्याख्यात।

२. हिंस्रः स्वपापेन विहिंसितः - इति श्लोकांशं प्रपूर्य व्याख्यात।

३. शिवराजविजयकाव्यदिशा सूर्योदयं वर्णयत।

४. कदलीदलकुञ्जायितस्य एतत्कुटीरस्य समन्तात् पुष्पवाटिका, पूर्वतः परम-पवित्र-पानीयं परस्सहस्र-पुण्डरीक-पटल-परिलसितं पतत्रिकुल-कूजितपूजितं पयःपूरितं सर आसीत्। दक्षिणतश्चैको निर्झर-झर्झर-ध्वनित-दिगन्तरः, फल-पटलाऽऽस्वाद-चपलित-चञ्चु-पतङ्कुलाऽऽ-क्रमणाधिक-विनत-शाख-शाखि समूह-व्याप्तः सुन्दरकन्दरः पर्वतखण्ड आसीत्। - इति व्याख्यात।

५. तस्मिन् पर्वते आसीदेको महान् कन्दरः। तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठति स्म। कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति। ग्रामणी-ग्रामीण-ग्रामाः समागत्य मध्ये मध्ये तं पूजयन्ति, प्रणमन्ति स्तुवन्ति च। तं केचित् कपिल इति, अपरे लोमश इति, इतरे जैगीषव्य इति अन्ये च मार्कण्डेय इति, विश्वसन्ति स्म। स एवायमधुना शिखरादवतरन् ब्रह्मचारिवटुभ्यामदर्शि। - इति व्याख्यात।

६. आश्रमे सत्कारपर्यन्तं योगिराजवृत्तान्तं वर्णयत।

## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-1

१. भगवत्या विष्णोः मायया सम्मोहितं जगत्।

२. हिंस्रः स्वपापेन विहिंसितो भवति।

३. साधुः समत्वेन भयाद् विमुच्यते।



४. विष्णोर्मायेति कीदृशं नमस्कारात्मकं मङ्गलम्।

५. हिंस्रः इति वस्तुनिर्देशात्मकं मङ्गलम्।

**उत्तराणि-२**

६. भगवतः मरीचिमालिनः प्रकाशः पूर्वस्यां दिशि।

७. सूर्यः आकाशमण्डलस्य मणिः।

८. सूर्यः खेचरचक्रस्य चक्रवर्ती।

९. ब्रह्माण्डभाण्डस्य दीपकः सूर्यः।

१०. सूर्यः कोकलोकस्य शोकविमोकः।

११. सूर्यः वत्सरं द्वादशसु भागेषु विभनक्ति।

१२. उपतिष्ठन्ते इत्यत्र "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्" इति वार्तिकेन आत्मनेपदम्।

१३. जनयति इत्यत्र "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इत्यनेन परस्मैपदम्।

१४. सूर्यः श्रीरामचन्द्रस्य कुलमूलम्।

**उत्तराणि-३**

१५. गौरवटुना महान् पुण्यमयः समयः स्वप्नजालपरतन्त्रेण एव अतिवाहितः।

१६. गौरवटोः गुरुचरणानां प्रातः सन्ध्योपासनसमयः।

१७. गुरोः सन्ध्योपासनायै गौरवटुः पुष्पाणि अवचिनोति।

१८. गौरवटुः मनोरमकायः, धवलवर्णीयः, जटाभिः ब्रह्मचारी, प्रायः षोडश–वयस्कः, शङ्खग्रीवः, दीर्घभालः, सुन्दरबाहूपेतः विस्तृतलोचनः च आसीत्

**उत्तराणि–३**

१९. गौरवटोः कदलीदलकुञ्जायितं कुटीरम्।

२०. कुटीरस्य समन्तात् पुष्पवाटिका आसीत्।

२१. कुटीरस्य पूर्वतः परमपवित्रपानीयं परस्सहस्रपुण्डरीकपटलपरिलसितं पतत्रिकुलकूजितपूजितं पयःपूरितं सर आसीत्।

२२. कुटीरस्य दक्षिण्यस्यां दिशि एकः सुन्दरकन्दरः पर्वतखण्ड आसीत्।

२३. निर्झरझर्झरध्वनिध्वनितदिगन्तरः - झर्झररूपः ध्वनिः झर्झरध्वनिः शाकपार्थिवादिवत् समासः। निर्झराणां झर्झरध्वनिरिति षष्ठीतत्पुरुषसमासः। तेन ध्वनितानि इति तृतीयातत्पुरुषसमासः। तादृशानि दिगन्तराणि यस्य स इति बहुव्रीहिसमासः।

२४. परमपवित्रपानीयम् - परमं च तत् पवित्रं चेति कर्मधारयः, तादृशं पानीयं यस्य तत् इति बहुव्रीहिसमासः।



### उत्तराणि-४

२५. श्यामवटुः दर्शनेन अतीव श्यामलः। तस्य भालदेशः चन्दनचर्चितः, वक्षःस्थलं कपूरागुरुचूर्णलिप्तम् आसीत्।

२६. आचार्यपादाः आश्रमे तडागतटे सन्ध्यावन्दनं कुर्वन्ति स्म।

२७. श्यामवटुना आचार्याणां सन्ध्योपासनसामग्री संस्थापिता।

२८. गौरवटुः यवनत्रासेन भीतां बालिकां मधुरं पयः पाययन् मुनिभोज्यं च खादयन् तां सान्त्वयन् प्रहारत्रयं जागरितवान्।

२९. गौरवटुः मरन्दमधुरा अपः पाययन् स्थितः।

३०. सा बाला यवनत्रासेन रोदिति स्म।

३१. गौरवटुना श्यामवटुना च बालिकायाः पितरौ भवनं च परिमार्गणीयानि।

३२. पर्वतशिखरे गौरवटोः श्यामवटोश्च दृष्टिः पतिता।

### उत्तराणि-५

३३. तस्य पर्वतस्य कन्दरे एकः समाधौ लीनः महामुनिः निवसति स्म।

३४. ग्रामणी-ग्रामीण-ग्रामाः महामुनिं पूजयन्ति स्म।

३५. महामुनिं केचन जनाः कपिलः इति, अन्ये लोमशः इति, अपरे जैगीषव्यः इति, अन्ये इतरे च मार्कण्डेयः इति विश्वसन्ति स्म।

३६. समाधिमग्नः य आसीत् तं महामुनिं पर्वतशिखराद् अवतरितुं दृष्टवान् गौरवटुः श्यामवटुः च।

### उत्तराणि-६

३७. महामुनिः आश्रमाचार्यनिष्ठकाष्ठपीठम् उपाविशत्।

३८. महामुनिः भास्वान् इव उदयगिरिम् इव आश्रमाचार्यनिष्ठकाष्ठपीठम् आरुरोह।

३९. नित्यनियमसम्पादनाय इत्यत्र समासनिर्णयः कार्यः।

४०. महामुनिः सुघटितकायः, प्रगाढजटः, विशालावयवः, अङ्गारनेत्रः, मनोहरवाणीकः च आसीत्।

॥ इति नवमः पाठः ॥

१०

# शिवराजविजयः - योगीराजसंवादः

## प्रस्तावना

योगिराजसपर्यायाः परं बालिकारोदनवृत्तान्तम्, भारतवर्षे यवनानां दुराचारः, योगिराजस्य योगाचरणम्, भारतवर्षस्य वर्तमानदशा इत्येते अस्मिन् पाठे क्रमशः वर्णिताः।

## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- बालिकाप्राप्तिवृत्तान्तं जानीयात्।
- बालिकारोदनवृत्तान्तं जानीयात्।
- बालिकापहरणवृत्तान्तं जानीयात्।
- यवनानां दुराचारान् जानीयात्।
- योगिराजस्य योगप्रसङ्गं जानीयात्।
- पाठ्यांशस्य अन्वयार्थसङ्गमनं जानीयात्।
- पाठ्यांशस्थानां पदानां व्याकरणविमर्शं पर्यायशब्दान् च जानीयात्।

## १०.१) सम्पूर्णः मूलपाठः

**अथ योगिराजं सम्पूज्य यावदीहितं किमपि आलपितुम्, तावत् कुटीरात् अश्रूयत तस्या एव बालिकायाः सकरुणरोदनम्।**

**ततः 'किमिति। कुत इति। केयमिति। कथमिति।' पृच्छापरवशे योगिराजे ब्रह्मचारिगुरुणा बालिकां सान्त्वयितुं श्यामवटुमादिश्य कथितम्–**

**'भगवन्! श्रूयतां यदि कुतूहलम्। ह्यः सम्पादित–सायन्तन–कृत्ये, अत्रैव कुशाऽऽस्तरणमधिष्ठिते मयि परितः समासीनेषु छात्रवर्गेषु, धीर–समीर–स्पर्शेन मन्दमन्दमान्दोल्यमानासु व्रततिषु, समुदिते यामिनी– कामिनी–चन्दनबिन्दाविव इन्दौ, कौमुदी–कपटेन सुधाधारामिव वर्षति गगने, अस्मन्नीतिवार्तां शुश्रूषुषु इव मौनमाकलयत्सु पतंग–कुलेषु, कैरव–विकाश–हर्ष–प्रकाश–मुखरेषु चञ्चरीकेषु, अस्पष्टाक्षरम्, कम्पमान–निःश्वासम्,**

श्लथत्कण्ठम्, घर्घरितस्वनम्, चीत्कारमात्रम्, दीनतामयम्, अत्यवधानश्रव्यत्वादनुमितदविष्ठं क्रन्दनमश्रौषम्।

तत्क्षणमेव च 'कुत इदम्। किमिदमिति दृश्यतां ज्ञायताम्' इत्यादिश्य छात्रेषु विसृष्टेषु, क्षणानन्तरं छात्रेणैकेन भयभीता सवेगमत्युष्णं दीर्घं निःश्वसती, मृगीव व्याघ्राऽऽघ्रता, अश्रुप्रवाहैः स्नाता, सवेपथुः कन्यकैका अङ्के निधाय समानीता। चिरान्वेषणेनापि च तस्याः सहचरी सहचरो वा न प्राप्तः। तां च चन्द्रकलयेव निर्मिताम्, नवनीतेनेव रचिताम्, मृणाल–गौरीम्,कुन्दकोरकाग्रदतीं सक्षोभं रुदतीमवलोक्याऽस्माभिरपि न पारितं निरोद्धुं नयनवाष्पाणि।

अथ 'कन्यके! मा भैषीः, पुत्रि! त्वां मातुः समीपे प्रापयिष्यामः, दुहितः! खेदं मा वह, भगवति! भुङ्क्ष्व किञ्चित्, पिब पयः, एते तव भ्रातरः, यत् कथयिष्यसि तदेव करिष्यामः, मा स्म रोदनैः प्राणान् संशयपदवीमारोपयः, मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीः' इति सहस्रधा बोधनेन कथमपि सम्बुद्धा किञ्चिद् दुग्धं पीतवती। ततश्च मया क्रोडे उपवेश्य, 'बालिके! कथय क्व ते पितरौ। कथमेतस्मिन्नाश्रमप्रान्ते समायाता। किं ते कष्टम्। कथमरोदीः। किं वाञ्छसि। किं कुर्मः।' इति पृष्टा मुग्धतया अपरिकलित–वाक्पाटवा, भयेन विशिथिलवचनविन्यासा, लज्जया अतिमन्दस्वरा, शोकेन रुद्धकण्ठा, चकितचकितेव कथं कथमपि अबोधयदस्मान् यद् – एषा अस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य तनयाऽस्ति।

एनां च सुन्दरीमाकलय्य कोऽपि यवन–तनयो नदीतटान्मातुर्हस्तादाच्छिद्य क्रन्दन्तीं नीत्वाऽपससार। ततः कञ्चिदध्वानमतिक्रम्य यावदसिधेनुकां सन्दर्श्य बिभीषिकयाऽस्याः क्रन्दन–कोलाहलं शमयितुमियेष; तावदकस्मात् कोऽपि काल–कम्बल इव भल्लूको वनान्तादुपाजगाम। दृष्ट्वैव यवन–तनयोऽसौ तत्रैव त्यक्त्वा कन्यकामिमां शाल्मलितरुमेकमारुरोह। विप्रतनया चेयं पलाश–पलाशि–श्रेण्यां प्रविश्य घुणाक्षरन्यायेन इत एव समायाता यावद् भयेन पुना रोदितुमारब्धवती, तावदस्मच्छात्रेणैवाऽऽनीते'ति।

तदाकर्ण्य कोपज्वालाज्वलित इव योगी प्रोवाच - 'विक्रमराज्येऽपि कथमेष पातकमयो दुराचाराणामुपद्रवः।'

ततः स उवाच – 'महात्मन्! क्वाधुना विक्रमराज्यम्। वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदश–शतकानि व्यतीतानि। क्वाधुना मन्दिरे मन्दिरे जयजयध्वनिः। क्व सम्प्रति तीर्थे तीर्थे घण्टानादः। क्वाद्यापि मठे मठे वेदघोषः। अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद्

दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः' इत्येव श्रूयतेऽवलोक्यते च परितः।

तदाकर्ण्य दुःखितश्चकितश्च योगिराडुवाच - "कथमेतत्। ह्य एव पर्वतीयाञ्छकान् विनिर्जित्य महता जयघोषेण स्वराजधानीमायातः श्रीमानादित्य-पदलाञ्छनो वीरविक्रमः। अद्यापि तद्विजयपताका मम चक्षुषोरग्रत इव समुद्धूयते, अधुनापि तेषां पटहगोमुखादीनां निनादः कर्णशष्कुलीं पूरयतीव, तत् कथमद्य वर्षाणां सप्तदश-शतकानि व्यतीतानि।" इति।

ततः सर्वेषु स्तब्धेषु चकितेषु च ब्रह्मचारिगुरुणा प्रणम्य कथितम् -

"भगवन्! बद्ध–सिद्धासनैर्निरुद्ध–निःश्वासैः प्रबोधितकुण्डलिनीकैः विजित–दशेन्द्रियैरनाहत–नाद–तन्तुमवलम्ब्याऽऽज्ञाचक्रं संस्पृश्य, चन्द्र–मण्डलं भित्त्वा, तेजःपुञ्जमविगणय्य, सहस्रदलकमलस्यान्तः प्रविश्य, परमात्मानं साक्षात्कृत्य, तत्रैव रममाणैर्मृत्युञ्जयैरानन्दमात्र–स्वरूपैर्ध्यानावस्तितैर्भवादृशैर्न ज्ञायते कालवेगः। तस्मिन् समये भवता ये पुरुषा अवलोकिताः तेषां पञ्चाशत्तमोऽपि पुरुषो नावलोक्यते। अद्य न तानि स्रोतासि नदीनाम्, न सा संस्था नगराणाम्, न सा आकृतिर्गिरीणाम्, न सा सान्द्रता विपिनानाम्। किमधिकं कथयामो भारतवर्षमधुना अन्यादृशमेव सम्पन्नमस्ति।"

इदमाकर्ण्य किञ्चित् स्मित्वेव परितोऽवलोक्य च योगी जगाद – "सत्यं न लक्षितो मया समय–वेगः। यौधिष्ठिरे समये कलितसमाधिरहं वैक्रम–समये उदस्थाम्। पुनश्च वैक्रम–समये समाधिमाकलय्य अस्मिन् दुराचारमये समयेऽहमुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि, किन्तु तावत् सङ्क्षिप्य कथ्यतां का दशा भारतवर्षस्येति।"

## १०.२) साम्प्रतं मूलपाठमवगच्छाम – १

अथ योगिराजं सम्पूज्य यावदीहितं किमपि आलपितुम्, तावत् कुटीरात् अश्रूयत तस्या एव बालिकायाः सकरुणरोदनम्।

ततः 'किमिति। कुत इति। केयमिति। कथमिति।' पृच्छापरवशे योगिराजे ब्रह्मचारिगुरुणा बालिकां सान्त्वयितुं श्यामवटुमादिश्य कथितम्–

'भगवन्! श्रूयतां यदि कुतूहलम्। ह्यः सम्पादित–सायन्तन–कृत्ये, अत्रैव कुशाऽऽस्तरणमधिष्ठिते मयि परितः समासीनेषु छात्रवर्गेषु, धीर–समीर–स्पर्शेन मन्दमन्दमान्दोल्यमानासु व्रततिषु, समुदिते यामिनी– कामिनी–चन्दनबिन्दाविव इन्दौ, कौमुदी–कपटेन सुधाधारामिव वर्षति गगने, अस्मन्नीतिवार्तां शुश्रूषुषु इव मौनमाकलयत्सु पतंग–कुलेषु, कैरव–विकाश–हर्ष–प्रकाश–मुखरेषु चञ्चरीकेषु, अस्पष्टाक्षरम्, कम्पमान–निःश्वासम्,

**श्लथत्कण्ठम्, घर्घरितस्वनम्, चीत्कारमात्रम्, दीनतामयम्, अत्यवधानश्रव्यत्वादनुमितदविष्ठतं क्रन्दनमश्रौषम्।**

**अन्वयार्थः -** अथ ततः परं योगिराजं मुनिप्रवरं सम्पूज्य समर्च्य किमपि किञ्चिदपि आलपितुं वक्तुं यावत् यदा एव ईहितं प्रयतितं तावत् तदा एव कुटीरात् उटजात् तस्याः पूर्वोक्तायाः बालिकायाः कन्यकायाः सकरुणरोदनं शोकसहितं विलापम् अश्रूयत श्रुतिगोचरम् अभवत्।

ततः कन्यकारोदनाकर्णनात्परं 'किमिति किमर्थं रोदनम्। कुत इति कस्मात् प्रदेशात् क्रन्दनम्। का इयम् इति का एषा रोदिति इति। कथम् इति क्रन्दनस्य किं कारणम् इति।' पृच्छापरवशे प्रश्नपरतन्त्रे योगिराजे योगिवरे ब्रह्मचारिगुरुणा वह्नोः आचार्येण बालिकां क्रन्दन्तीं बालां सान्त्वयितुम् आश्वासयितुं श्यामवटुं श्यामलं ब्रह्मचारिणम् आदिश्य आज्ञाप्य कथितं उक्तम्–

भगवन् योगैश्वर्यसम्पन्नमहर्षे यदि चेत् कुतूहलम् वृत्तान्तज्ञानकौतुकं (अस्ति तर्हि) श्रूयतां समाकर्ण्यताम् एतदेव यत् – ह्यः गतवासरे सम्पादित–सायन्तन–कृत्ये विहितसन्ध्यावन्दने अत्रैव अस्मिन्नेव स्थाने कुशास्तरणम् दर्भासनम् अधिष्ठिते आरूढे मयि गौरश्यामवटुशिक्षके मुनौ परितः समन्तात् समासीनेषु समुपविष्टेषु छात्रवर्गेषु शिष्यसमुदायेषु धीर–समीर–स्पर्शेन मन्द–मन्द–वायुसम्पर्केण मन्दमन्दं शनैः शनैः आन्दोल्यमानासु सञ्चाल्यमानासु व्रततिषु वल्लरीषु, समुदिते उदयं प्राप्तवते यामिनी–कामिनी–चन्दनबिन्दौ रात्रिरूपायाः ललनायाः ललाटतिलके इव इन्दौ चन्द्रे, कौमुदी–कपटेन ज्योत्स्नाव्याजेन सुधाधाराम् इव पीयुषप्रवाहम् इव वर्षति वर्षणं कुर्वति गगने आकाशे, अस्मन्नीतिवार्तां मन्मुखात् नयकथनं शुश्रूषुषु इव श्रोतुम् इच्छुषु इव मौनं मूकतां आकलयत्सु समादधत्सु पतङ्ग–कुलेषु विहगकुलेषु, कैरव–विकाश–हर्षप्रकाश–मुखरेषु कुमुद–प्रफुल्लन–मोदप्रकाशन–शब्दायमानेषु चञ्चरीकेषु द्विरेफेषु, (अहम्) अस्पष्टाक्षरम् अस्फुटवर्णम्, कम्पमाननिःश्वासं वेपमाननिःश्वसनं, चीत्कारमात्रं चीत्काररूपम्, दीनतामयं कारुण्यसमन्वितम्, अत्यवधानश्रव्यत्वाद् विशेषावधानेन श्रवणयोग्यत्वाद् अनुमितदविष्ठतं अनुमितदूरत्वं क्रन्दनं रोदनम् अश्रौषम् अशृण्वम्।

**व्याख्यानम् -** योगिराजसपर्यायाः परं यदा तेन सह वार्तालापं कर्तुं चेष्टितवान् ब्रह्मचारिगुरुः तदा कुटीरात् यवनत्रस्ताया बालिकायाः सकरुणरोदनं श्रुत्वा 'किमर्थं रोदनम्। कुतः क्रन्दनम्। का इयम् रोदिति इति। क्रन्दनस्य किं कारणम् इति।' इति योगिराजः पृष्टवान्। तदा ब्रह्मचारिगुरुः श्यामवटुं बालिकासान्त्वनाय आदिश्य योगिराजाय बालिकावृत्तान्तं कथितवान्।

यदा ब्रह्मचारिगुरुः सायन्तनीं सन्ध्योपासनां समाप्य दर्भासनासीनः छात्रपरिवेष्टितः सन् उपदेष्टुम् उपविष्टः। तदा मन्दमन्दपवनस्पर्शेण लताः सञ्चलन्त्यः आसन्। यामिनीरूपायाः कामिन्याः कपालबिन्दुरिव चन्द्रः उदयं गतः। ज्योत्स्नाव्याजेन आकाशः सुधाधारामिव वर्षन् आसीत्। पक्षिणः तथा मूका आसन् यथा ते अपि ब्रह्मचारिगुरोः नीतिव्याख्यां श्रोतुकामाः। कुमुदविकासेन हर्षं प्राप्तवन्त आसीत्

तदा द्विरेफाः। तस्मिन्नेव समये ब्रह्मचारिगुरुः अस्फुटवर्णं वेपमाननिःश्वसनं चित्कारमात्रं दीनतायुक्तं दूरात् एकं क्रन्दनं श्रुतवान्।

### व्याकरणविमर्शः

- सम्पादितसायन्तनकृत्ये - सायन्तनानि कृत्यानि सायन्तन-कृत्यानि इति कर्मधारयः। सम्पादितानि सायन्तनकृत्यानि येन स सम्पादितसायन्तनकृत्यः, तस्मिन् इति बहुव्रीहिः।
- कुशास्तरणम् - कुशनिर्मितम् आस्तरणं कुशास्तरणम् इति शाकपार्थिवादिवत्समासः।
- अधितिष्ठति - अधिपूर्वकात् स्थाधातोः शतृप्रत्यये पुंसि ङौ अधितिष्ठति इति रूपम्।
- समासीनेषु - सम्पूर्वकाद् आस्धातोः शानचि पुंसि सुपि समासीनेषु इति रूपम्।
- धीरसमीरस्पर्शेन – धीरः समीरः धीरसमीरः इति कर्मधारयः। तस्य स्पर्शः, तेन इति षष्ठीतत्पुरुषः।
- यामिनीकामिनीचन्दनबिन्दौ - यामिनी एव कामिनी यामिनीकामिनी इति कर्मधारयः। चन्दनस्य बिन्दुः चन्दनबिन्दुः इति षष्ठीतत्पुरुषः। यामिनीकामिन्याः चन्दनबिन्दुः यामिनीकामिनी-चन्दनबिन्दुः, तस्मिन् इति षष्ठीतत्पुरुषः।
- पतङ्गकुलेषु - पतङ्गानां कुलानि पतङ्गकुलानि, तेषु इति षष्ठीतत्पुरुषः।
- कैरवविकाशहर्षप्रकाशमुखरेषु - कैरवाणां विकाशः कैरवविकाशः इति षष्ठीतत्पुरुषः। तज्जनितः हर्षः कैरवविकाशहर्षः इति शाकपार्थिवादिवत्समासः। तस्य प्रकाशः कैरवविकाशहर्षप्रकाशः इति षष्ठीतत्पुरुषः। तेन मुखराः इति तृतीयातत्पुरुषः, तेषु।
- अस्पष्टाक्षरम् - न स्पष्टम् अस्पष्टम् इति नञ्समासः। अस्पष्टम् अक्षरं यस्य तत् अस्पष्टाक्षरम् इति बहुव्रीहिः।
- कम्पमाननिःश्वासम् - कम्पमानो निःश्वासो यस्मिन् तत् कम्पमाननिःश्वासमिति बहुव्रीहिः।
- अनुमितदविष्ठतम् - अनुमिता दविष्ठता यस्य तद् अनुमितदविष्ठतम् इति बहुव्रीहिः।
- अश्रौषम् - श्रुधातोः लुङि उत्तमपुरुषैकवचने अश्रौषम् इति रूपम्।

### कोषः

- "कौतूहलं कौतुकञ्च कुतुकञ्च कतूहलम्" इत्यमरः।
- "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः।
- "बल्ली तु व्रततिर्लता" इत्यमरः।
- "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः।

## पाठगतप्रश्नाः – १

१. बालिकां सान्त्वयितुं कमादिदेश ब्रह्मचारिगुरुः।

२. समुदितः चन्द्रः कीदृश आसीत्।

३. गगनं किं वर्षति।

४. ब्रह्मचारिगुरुः कीदृशं कन्दनम् अश्रौषत्।

५. कम्पमाननिःश्वासम् इत्यस्य समासः दर्शनीयः।

## १०.३) साम्प्रतं मूलपाठमवगच्छाम – २

**तत्क्षणमेव च 'कुत इदम्। किमिदमिति दृश्यतां ज्ञायताम्' इत्यादिश्य छात्रेषु विसृष्टेषु, क्षणानन्तरं छात्रेणैकेन भयभीता सवेगमत्युष्णं दीर्घं निःश्वसती, मृगीव व्याघ्राऽऽघ्रता, अश्रुप्रवाहैः स्नाता, सवेपथुः कन्यकैका अङ्के निधाय समानीता। चिरान्वेषणेनापि च तस्याः सहचरी सहचरो वा न प्राप्तः। तां च चन्द्रकलयेव निर्मिताम्, नवनीतेनेव रचिताम्, मृणाल–गौरीम्,कुन्दकोरकाग्रदतीं सक्षोभं रुदतीमवलोक्याऽस्माभिरपि न पारितं निरोद्धुं नयनवाष्पाणि।**

**अन्वयार्थः** - तत्क्षणमेव तस्मिन्नेव समये च पुनः 'कुतः कस्मात् स्थानाद् इदं रोदनम्। किमिदं किं कारणम् अस्य इति दृश्यताम् ईक्ष्यताम् ज्ञायतां बुध्यताम्' इति इत्थम् आदिश्य आज्ञाप्य छात्रेषु शिष्येषु छात्रेषु विसृष्टेषु प्रेरितेषु, क्षणानन्तरं किञ्चित्परं एकेन छात्रेण एकेन शिष्येण भयभीता भयग्रस्ता सवेगं वेगसहितम् अत्युष्णं बहुसन्तापग्रस्तं दीर्घं पृथुलं निःश्वसती श्वासं गृह्णन्ती, मृगी इव हरिणी इव व्याघ्राऽऽघ्रता शार्दूलाक्रान्ता, अश्रुप्रवाहैः नयनवाष्पप्रवाहनैः स्नाता विहितस्नाना, सवेपथुः सकम्पा एका कन्यका एका बालिका अङ्के क्रोडे निधाय संस्थाप्य समानीता आनीता।

चिरान्वेषणेन अपि बहुधा अनुसन्धानेन अपि च पुनः तस्याः बालायाः सहचरी सखी सहचरो सखा वा न प्राप्तः न अधिगतः। तां च बालिकां चन्द्रकलया इव हिमांशुरेखया इव निर्मितां रचिताम्, नवनीतेन हैयङ्गवीनेन इव रचितां विहिताम्, मृणाल–गौरीं कमलदण्डसदृशधवलाम्, कुन्दकोरकाग्रदतीं कुन्दकोरकाग्रभागसदृश धवलदन्तान्वितां सक्षोभं सभयं रुदतीं क्रन्दन्तीम् अवलोक्य वीक्ष्य अस्माभिः अपि आश्रमनिवासिभिः अपि नयनवाष्पाणि नेत्राश्रूणि निरोद्धुम् अवरोधनाय न पारितं न शक्तम्।

**व्याख्यानम्** - तस्मिन्नेव समये 'कुतः इदं रोदनम्। किं कारणम् अस्य' इति ज्ञातुं ब्रह्मचारिगुरुः शिष्यान् आदिष्टवान्। छात्राणां मध्ये केनचित् यवनभयव्याकुला असहाया क्रन्दनरता कन्यका अङ्के कृत्वा समानीता। सा कन्या सन्तापेन दीर्घं निःश्वसती, व्याघ्राक्रान्ता हरिणी इव, अश्रुप्रवाहस्नाता, कम्पमाना

आसीत्। बहुधा अन्वेषणेन अपि तस्याः सहचरं सहचरीं वा कोपि शिष्यो न प्राप्तवान्। तां बहुधां क्रन्दनरतां त्रस्तां च दृष्ट्वा सर्वे एव आश्रमवासिनः अश्रुपातं कृतवन्तः।

**व्याकरणविमर्शः**

- व्याघ्राघ्राता – व्याघ्रेण आघ्राता इति तृतीयातत्पुरुषः
- अश्रुप्रवाहैः - अश्रूणां प्रवाहः अश्रुप्रवाहः, तै इति षष्ठीतत्पुरुषः।
- सवेपथुः- वेपथुना सह वर्तमाना इति बहुव्रीहिः।
- मृणालगौरीम् - मृणाल इव गौरी मृणालगौरी, ताम् इति उपमानकर्मधारयः।
- कुन्दकोरकाग्रदतीम् - कुन्दानां कोरकाणि कुन्दकोरकाणि इति षष्ठीतत्पुरुषः। कुन्दकोरकाणाम् अग्राणि कुन्दकोरकाग्राणि इति षष्ठीतत्पुरुषः। कुन्दकोरकाग्राणि इव दन्ताः यस्याः सा कुन्दकोरकाग्रदती, ताम् इति बहुव्रीहिः।
- भयभीता - भयेन भीता इति तृतीयातत्पुरुषः।
- दृश्यताम् - दृश्धातोः कर्मणि लोटि प्रथमपुरुषैकवचने रूपम्।
- ज्ञायताम् - ज्ञाधातोः कर्मणि लोटि प्रथमपुरुषैकवचने रूपम्।
- निःश्वसती - निर्-पूर्वकात् श्वस्धातोः शतृप्रत्यये ङीपि सौ निःश्वसती इति रूपम्।

**कोषः**

- “शार्दूलद्वीपिनौ व्याघ्रे” इत्यमरः।
- “उत्सङ्गचिह्नयोरङ्कः” इत्यमरः।

## पाठगतप्रश्नाः – २

६. कीदृशी बालिका छात्रेण अङ्के समानीता।

७. क्रन्दन्तीं बालिकां दृष्ट्वा किं निरोद्धुम् आश्रमवासिनः असमर्थाः।

८. कुन्दकोरकाग्रदतीम् इत्यत्र समासः दर्शनीयः।

## १०.४) साम्प्रतं मूलपाठमवगच्छाम – ३

**अथ 'कन्यके! मा भैषीः, पुत्रि! त्वां मातुः समीपे प्रापयिष्यामः, दुहितः! खेदं मा वह, भगवति! भुङ्क्ष्व किञ्चित्, पिब पयः, एते तव भ्रातरः, यत् कथयिष्यसि तदेव करिष्यामः, मा स्म रोदनैः प्राणान् संशयपदवीमारोपयः, मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीः' इति सहस्रधा बोधनेन कथमपि सम्बुद्धा किञ्चिद् दुग्धं पीतवती। ततश्च मया क्रोडे उपवेश्य,**

**'बालिके! कथय क्व ते पितरौ। कथमेतस्मिन्नाश्रमप्रान्ते समायाता। किं ते कष्टम्। कथमरोदीः। किं वाञ्छसि। किं कुर्मः।' इति पृष्टा मुग्धतया अपरिकलित–वाक्पाटवा, भयेन विशिथिलवचनविन्यासा, लज्जया अतिमन्दस्वरा, शोकेन रुद्धकण्ठा, चकितचकितेव कथं कथमपि अबोधयदस्मान् यद् – एषा अस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य तनयाऽस्ति।**

**अन्वयार्थः** - अथ बालिकादर्शनाद् अनन्तरं 'कन्यके हे बाले! मा भैषीः भयं मा कार्षीः। पुत्रि! हे नन्दिनि! त्वां भवतीं मातुः अम्बायाः समीपे निकटे प्रापयिष्यामः प्रेषयिष्यामः। दुहितः पुत्रि! खेदं क्लेशं मा वह मा धारय। भगवति! हे ऐश्वर्यशालिनि! किञ्चिद् ईषत् भुङ्क्ष्व खाद, पयः पिब दुग्धस्य पानं कुरु। एते पुरोदृश्यमानाः तव भवत्याः भ्रातरः सहोदराः; यत् यत्किमपि कथयिष्यसि वक्ष्यसि तदेव करिष्यामः वयं तदेव विधास्यामः। मा स्म, रोदनैः क्रन्दनैः प्राणान् असून् संशयपदवीं सन्देहास्थितिम् आरोपयः समारोपयः। कोमलं सुकुमारम् इदम् एतत् शरीरं देहं शोकज्वालावलीढं क्लेशाग्निपरिव्याप्तं मा स्म कार्षीः मा कुरु इति एवम्प्रकारेण सहस्रधा बहुभिः प्रकारैः बोधनेन सान्त्वनप्रदानेन कथमपि केनापि प्रकारेण सम्बुद्धा अवबोधिता सती किञ्चिद् अत्यल्पं दुग्धं पयः पीतवती अपिबत्।

ततश्च पयःपानात्परं मया ब्रह्मचारिणाम् आचार्येण क्रोडे अङ्के उपवेश्य संस्थाप्य, 'बालिके कन्यके! क्व कुत्र ते तव पितरौ जनकः जननी च कथय वद। कथं केन प्रकारेण एतस्मिन् आश्रमप्रान्ते आश्रमप्रदेशे समायाता समागता। ते तव किं कीदृशं कष्टं दुःखम्। कथं केन प्रकारेण अरोदीः कन्द्रनं करोषि। किं वाञ्छसि किम् इच्छसि। किं कुर्मः वयं किं कर्तुं शक्नुमः।' इति एवं पृष्टा जिज्ञासिता मुग्धतया सरलतया अपरिकलित–वाक्पाटवा अज्ञातवचनचातुर्या, भयेन साध्वंसेन विशिथिलवचनविन्यासा गलितवचःक्रमा, लज्जया हिस्रपया अतिमन्दस्वरा अतिशयेन कोमलस्वरा, शोकेन कष्टेन रुद्धकण्ठा स्तम्भितगलविवरा, चकितचकिता इव अत्यन्तं भीत इव कथं कथमपि येन केनापि प्रकारेण अस्मान् आश्रमवास्तव्यान् अबोधयद् विज्ञापितवती यद् एषा इयं बालिका अस्मिन् एतस्मिन् नेदीयसि एव अतिसमीपे एव ग्रामे वसतः वासं कुर्वतः कस्यापि कस्यचिदपि ब्राह्मणस्य विप्रस्य तनया पुत्री अस्ति भवति।

**व्याख्यानम्** - सर्वे आश्रमवासिनः बालिकायाः सान्त्वनाय बहुधा चेष्टितवन्तः। ते तां तस्याः मातरं पितरं च प्रति नेष्यन्तीति उक्तवन्तः। बहुधा भोजनाय पानाय च अनुरुद्धा सा बालिका अत्यल्पं दुग्धं पयः पीतवती।

पयःपानात्परं ब्रह्मचारिगुरुः तां प्रति तस्याः परिचयः कः, कथं सा अत्र सम्प्राप्ता, किं तस्या दुःखम् इत्यादिप्रश्नान् पृष्टवान्। एवं पृष्टा सा सरलतया अज्ञातवचनचातुर्या, भयेन शिथिलवचनविन्यासा, लज्जया कोमलस्वरा, कष्टेन रुद्धकण्ठा आश्रमवास्तव्यान् उक्तवती यत् सा समीपवर्तिनः एकस्य ग्रामस्य ब्राह्मणस्य कन्यका।

**व्याकरणविमर्शः**

- मा भैषीः – "माङि लुङ्" इति सूत्रेण माङ्योगे भीधातोः लुङि मध्यमपुरुषैकवचने भैषीः इति रूपम्। अत्र "न माङ्योगे" इत्यनेन सूत्रेण अडागमाभावः।
- शोकज्वालावलीढम् - शोकरूपा ज्वाला शोकज्वाला इति शाकपार्थिवादिवत्समासः। शोकज्वालाभिः अवलीढं शोकज्वालावलीढम् इति तृतीयातत्पुरुषः। अवपूर्वात् लिह्धातोः क्तप्रत्यये अवलीढशब्दो निष्पन्नः।
- अपरिकलितवाक्पाटवा - वाचः पाटवं वाक्पाटवम् इति षष्ठीतत्पुरुषः। न परिकलितम् अपरिकलितम् इति नञ्समासः। अपरिकलितं वाक्पाटवं यस्याः सा अपरिकलितवाक्पाटवा इति बहुव्रीहिः।
- विशिथिलवचनविन्यासा - वचनानां विन्यासः वचनविन्यासः इति षष्ठीतत्पुरुषः। विशिथिलः वचनविन्यासः यस्याः सा विशिथिलवचनविन्यासा इति बहुव्रीहिः।

**कोषः**

- "मन्युशोकौ तु शुक् स्त्रियाम्" इत्यमरः।
- "दुग्धं क्षीरं पयः समम्" इत्यमरः।
- "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः।

## पाठगतप्रश्नाः – ३

९. बहुधा सम्बोधिता बालिका किं कृतवती।
१०. सा बाला कस्य कन्यका।
११. अपरिकलितवाक्पाटवा इत्यत्र समासः प्रदर्शनीयः।
१२. विशिथिलवचनविन्यासा इत्यत्र समासः प्रदर्शनीयः।

## १०.५) साम्प्रतं मूलपाठमवगच्छाम – ४

**एनां च सुन्दरीमाकलय्य कोऽपि यवन–तनयो नदीतटान्मातुर्हस्तादाच्छिद्य क्रन्दन्तीं नीत्वाऽपससार। ततः कश्चिदध्वानमतिक्रम्य यावदसिधेनुकां सन्दर्श्य बिभीषिकयाऽस्याः क्रन्दन–कोलाहलं शमयितुमियेष; तावदकस्मात् कोऽपि काल–कम्बल इव भल्लूको वनान्तादुपाजगाम। दृष्ट्वैव यवन–तनयोऽसौ तत्रैव त्यक्त्वा कन्यकामिमां शाल्मलितरुमेकमारुरोह। विप्रतनया चेयं पलाश–पलाशि–श्रेण्यां प्रविश्य घुणाक्षरन्यायेन इत एव समायाता यावद् भयेन पुना रोदितुमारब्धवती, तावदस्मच्छात्रेणैवाऽऽनीते'ति।**

**अन्वयार्थः** - एनां पूर्वोक्ताम् इमां च सुन्दरीं मनोहराम् आकलय्य निश्चित्य कोऽपि कश्चन यवनतनयः यवनपुत्रः नदीतटात् तरङ्गिणीतीरात् मातुः जनन्याः हस्तात् भुजात् आच्छिद्य बलात् अपहृत्य क्रन्दन्तीं रोदनं कुर्वन्तीं नीत्वा स्वीकृत्य अपससार पलायनं कृतवान्। ततः पलायनात्परं कञ्चिदध्वानम् ईषन्मार्गम् अतिक्रम्य गत्वा यावत् यदा असिधेनुकां छुरिकां सन्दर्श्य दर्शयित्वा बिभीषिकया भयेन अस्याः बालिकायाः क्रन्दनकोलाहलं रोदनचित्कारं शमयितुं शान्तं विधातुम् इयेष इष्टवान्, तावत् तदा अकस्मात् हठात् कोऽपि कश्चन कालकम्बलः इव यमकम्बलः इव भल्लूकः ऋक्षः वनान्तात् अरण्यप्रान्ताद् उपाजगाम उपागतः। असी यवनतनयः यवनपुत्रः दृष्ट्वा एव भल्लूकम् अवलोक्य एव तत्र एव तस्मिन्नेव प्रदेशे इमां कन्यकां एतां बालिकां त्यक्त्वा परित्यज्य एकं शाल्मलितरुम् एकं शाल्मलीवृक्षम् आरुरोह समारूढवान्। इयं विप्रतनया एषा ब्राह्मणकन्यका च पलाश–पलाशि–श्रेण्यां किंशुकविटपपङ्क्तौ प्रविश्य प्रवेशं विधाय घुणाक्षरन्यायेन इत एव आश्रमप्रान्तं समायाता समागता यावद् यदा भयेन त्रासेन पुनः भूयः रोदितुं विलपितुम् आरब्धवती समारेभे तावत् तदा अस्मच्छात्रेण एव मदीयशिष्येण एव आनीता अत्र सम्प्रापिता' इति बालिकासम्प्राप्तिवृत्तान्तम्।

**व्याख्यानम्** - कदाचित् मात्रा यदा ब्राह्मणकन्यका सा नदीतटे भ्रमति स्म तदा कोऽपि यवनयुवको मातुर्हस्तात् सप्रसभं ताम् अपहृत्य वनमार्गेण आगतः। सहसा मार्गमध्ये समापतिते कंस्मिश्चिद् भल्लुके भयाद् यवनोऽसौ शाल्मलीतरुम् आरुरोह। बालिका अपि वनवर्त्मना किंशुकविटपपङ्क्तौ प्रविश्य घुणाक्षरन्यायेन आश्रमं समायाता क्रन्दनरता उद्धृता च तपोवनबालकेन इत्येवं बालिकावृत्तान्तं समाप्तम्।

कामान्धः स यवनो निर्दयेन हृदयेन अस्फुटस्वरामपि बालिकां तन्मातुः हृदयं शून्यं कुर्वन् अपहर्तुं न विचलितः अभवत्। एतेन यवनानां कीदृशी जघन्या कामलोलुपता इति स्पष्टम्। अतो भारतवर्षस्य अभ्युदयाय तेषां नाशः साधनीयः।

### व्याकरणविमर्शः

- यवनतनयः – यवनस्य तनयः यवनतनयः इति षष्ठीतत्पुरुषः।
- नदीतटात् - नद्याः तटः नदीतटः, तस्मात् इति षष्ठीतत्पुरुषः।
- कन्दन्तीम् - क्रन्द्-धातोः शतरि स्त्रियां ङीपि अमि इदं रूपम्।
- कन्दनकोलाहलम् - क्रन्दनोत्थः कोलाहलः क्रन्दनकोलाहलः, तम् इति शाकपार्थिवादिवत्समासः।
- पलाशपलाशिश्रेण्याम् - पलाशाश्चामी पलाशिनश्च पलाशपलाशिनः इति कर्मधारयः। तेषां श्रेणी, तस्यामिति षष्ठीतत्पुरुषसमासः।

### कोषः

- "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।" इत्यमरः।
- "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः।" इत्यमरः।

## पाठगतप्रश्नाः-४

१३. यवनतनयः कथं बालिकाम् अपहृतवान्।

१४. यवनतनयः केन प्रकारेण बालिकाक्रन्दनं शमयितुम् इष्टवान्।

१५. यवनतनयः भल्लूकं दृष्ट्वा किं कृतवान्।

१६. भल्लूकः कीदृश आसीत्।

## १०.६) साम्प्रतं मूलपाठमवगच्छाम - ५

**तदाकर्ण्य कोपज्वालाज्वलित इव योगी प्रोवाच - 'विक्रमराज्येऽपि कथमेष पातकमयो दुराचाराणामुपद्रवः।'**

**ततः स उवाच – 'महात्मन्! क्वाधुना विक्रमराज्यम्। वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदश-शतकानि व्यतीतानि। क्वाधुना मन्दिरे मन्दिरे जयजयध्वनिः। क्व सम्प्रति तीर्थे तीर्थे घण्टानादः। क्वाद्यापि मठे मठे वेदघोषः। अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः' इत्येव श्रूयतेऽवलोक्यते च परितः।**

**अन्वयार्थः** - तद् ब्रह्मचारिणाम् आचार्यवचनम् आकर्ण्य निशम्य कोपज्वालाज्वलितः क्रोधाग्निसमुद्दीप्तः इव यथा योगी मुनिप्रवरः प्रोवाच निगदितवान्- "विक्रमराज्ये अपि विक्रमादित्यशासिते प्रदेशे अपि कथम् एष किमर्थम् एतादृशः पातकमयः पापरूपः दुराचाराणां खलानाम् उपद्रवः विघ्नः।"

ततः एतच्छ्रवणाद् अनन्तरं स ब्रह्मचारिगुरुः उवाच जगाद – "महात्मन् योगिन्, क्व कुत्र अधुना सम्प्रति विक्रमराज्यं विक्रमादित्यभूपतेः शासनम्। वीरविक्रमस्य तु शूरस्य विक्रमादित्यस्य तु भारतभुवं भारतवर्षं विरहय्य परित्यज्य गतस्य दिवं गतस्य वर्षाणां वत्सराणां सप्तदशशतकानि सप्तवर्षशतवर्षाणि व्यतीतानि अतीतानि। क्व कुत्र अधुना साम्प्रतं मन्दिरे मन्दिरे प्रतिदेवालयं जयजयध्वनिः जयजयनादः। क्व कुत्र सम्प्रति अधुना तीर्थे तीर्थे प्रतितीर्थं घण्टानादः वाद्यमानघण्टाध्वनिः। क्व कुत्र अद्यापि अस्मिन् दिवसेऽपि मठे मठे प्रतिमठं वेदघोषः श्रुत्यध्ययननादः। अद्य अधुना हि निश्चयेन वेदाः श्रुतयः विच्छिद्य छित्त्वा वीथीषु मार्गेषु विक्षिप्यन्ते विकीर्यन्ते। धर्मशास्त्राणि मन्वादिप्रणीतस्मृतिशास्त्राणि उद्धूय उत्तोल्य धूमध्वजेषु अग्निषु ध्मायन्ते दह्यन्ते। पुराणानि वेदव्यासविरचितानि श्रीमद्भागवतादीनि पिष्ट्वा चूर्णीकृत्य पानीयेषु जलेषु पात्यन्ते प्रक्षिप्यन्ते। भाष्याणि सूत्रव्याख्यानानि महाभाष्यादीनि भ्रंशयित्वा विचूर्ण्य भ्राष्ट्रेषु भर्जनपात्रेषु भर्ज्यन्ते वह्निना दह्यन्ते। क्वचित्

कुत्रचित् मन्दिराणि देवालयाः भिद्यन्ते नाश्यन्ते, क्वचित् कुत्रचित् तुलसीवनानि तुलसीवृक्षाणाम् अरण्यानि छिद्यन्ते कर्त्यन्ते। क्वचित् कूत्रचित् दाराः परस्त्रियः अपह्रियन्ते चोर्यन्ते। क्वचित् कुत्रचित् धनानि सुवर्णादीनि द्रव्याणि लुण्ठ्यन्ते अपह्रियन्ते। क्वचित् कुत्रचित् आर्तनादाः करुणरोदनानि, क्वचित् कुत्रचित् रुधिरधाराः शोणितप्रवाहाः, क्वचित् कुत्रचिद् अग्निदाहः वह्निदहनम्, क्वचित् कुत्रचित् गृहनिपातः भवनविनाशः इत्येव एवम् एव श्रूयते समाकर्ण्यते अवलोक्यते दृश्यते च पुनः परितः सर्वासु दिक्षु।

**व्याख्यानम्** - ब्रह्मचारिगुरुवचः श्रुत्वा क्रोधाग्निना समुद्दीप्तः इव मुनिप्रवरः विक्रमशासने एतादृशः दुराचारः कथमिति पृष्टवान्। वस्तुतस्तु तस्मिन् समये नासीद् विक्रमराज्यम्। विक्रमराज्ये समाधिम् आश्रित्य यदा स उत्थितस्तदा सप्तदश-शतवर्षाणि अतिक्रान्तानि।

अतः ब्रह्मचारिगुरुः योगिराजं प्रति कथितवान् यद् - इदानीं नास्ति विक्रमसमयः। यवनकाले अस्मिन् वेदघोषमुखरिताया भारतभूमेः धर्मीयं परिमण्डलम् अवलुप्तम्। इदानीं तु प्रतिमन्दिरं जयजयनादः, प्रतितीर्थं घण्टानादः, प्रतिमठं वेदघोषः अवलुप्तः। इदानीं यवनाः वेदानां स्मृतिशास्त्राणां पुराणानां भाष्याणां च सनातनधर्मप्रतीकानां विनाशं विदधति। ते मन्दिराणि तुलसीवनानि च नाशयन्ति।क्वचित् ते परस्त्रियां सुवर्णादिद्रव्याणां च अपहरणं कुर्वन्ति। एवं सर्वासु दिक्षु आर्तनादाः, शोणितप्रवाहाः, अग्निदाहः भवनविनाशः इत्येवं पातकमयानि यवनानां कार्याणि दृश्यन्ते। एवं यवनानां दुराचारः सखेदं वर्णितो ब्रह्मचारिगुरुणा।

**व्याकरणविमर्शः**

- कोपज्वालाज्वलितः - कोपस्य ज्वाला कोपज्वाला इति षष्ठीतत्पुरुषः। कोपज्वालया ज्वलितः कोपज्वालाज्वलितः इति तृतीयातत्पुरुषः।
- महात्मन् - महान् आत्मा यस्य स महात्मा इति बहुव्रीहिसमासः। तस्य सम्बोधने प्रथमैकवचने महात्मन् इति रूपम्।
- विक्रमराज्यम् - विक्रमस्य राज्यं विक्रमराज्यमिति षष्ठीतत्पुरुषः।
- घण्टानादः - घण्टायाः नादः घण्टानादः इति षष्ठीतत्पुरुषः।

**कोषः**

- "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः।
- "मठश्छात्रानिलयः" इत्यमरः।
- "क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यमरः।
- "गृहं गेहोद्वसितं वेश्म सद्म निकेतनम्" इत्यमरः।



## पाठगतप्रश्नाः – ५

१७. वीरविक्रमस्य भारतवर्षं त्यक्त्वा गतस्य कति वर्षाणि गतानि।

१८. यवनकाले वेदानां का दशा।

१९. यवनकाले मन्दिराणां तुलसीवनानां च का दशा।

२०. यवनकाले स्मृतिशास्त्राणां पुराणानां भाष्याणां च का दशा।

## १०.७) साम्प्रतं मूलपाठमवगच्छाम – ६

**तदाकर्ण्य दुःखितश्चकितश्च योगिराड्डुवाच - "कथमेतत्। ह्य एव पर्वतीयाञ्छकान् विनिर्जित्य महता जयघोषेण स्वराजधानीमायातः श्रीमानादित्य-पदलाञ्छनो वीरविक्रमः। अद्यापि तद्विजयपताका मम चक्षुषोरग्रत इव समुद्धूयते, अधुनापि तेषां पटहगोमुखादीनां निनादः कर्णशष्कुलीं पूरयतीव, तत् कथमद्य वर्षाणां सप्तदश-शतकानि व्यतीतानि।" इति।**

**अन्वयार्थः** - तद् ब्रह्मचारिगुरवचः आकर्ण्य निशम्य दुःखितः क्षुब्धः चकितः विस्मितः च योगिराट् योगीश्वर उवाच जगाद – "कथम् एतत् तव एतद्वचः कथं संगतं भवति। ह्यः एव पूर्वस्मिन् दिवसे एव पर्वतीयान् गिरिस्थितान् शकान् तज्जातीयकान् विनिर्जित्य पराजित्य महता प्रचुरेण जयघोषेण जय जयेति शब्देन स्वराजधानीं स्वप्रशासनकेन्द्रम् उज्जयिनीम् आयातः आगतः श्रीमान् श्रीसम्पन्नः आदित्यपदलाञ्छनः आदित्यपदविभूषितः वीरविक्रमः शौर्यवान् विक्रमादित्यः। अद्य अपि इदानीम् अपि तद्विजयपताका विक्रमादित्यविजयध्वजः मम योगिराजस्य चक्षुषोः नयनयोः अग्रतः इव सम्मुखे इव समुद्धूयते समुद्भास्यते। अधुना अपि सम्प्रति एव तेषां विक्रमादित्यसम्बन्धिनां पटहगोमुखादीनां आनकादिवाद्यविशेषाणां निनादः ध्वनिः कर्णशष्कुलीं श्रवणेन्द्रियगह्वरं पूरयति इव बिभर्ति इव। तत् तस्मात् कथं केन प्रकारेण अद्य इदानीं वर्षाणां सप्तदशशतकानि सप्तदशशतवर्षाणि व्यतीतानि अतिक्रान्तानि।" इति।

**व्याख्यानम्** - ब्रह्मचारिगुरवचनश्रवणात्परं दुःखितः विस्मयं गतः च योगिराजः कथितवान् यत् – कथम् एतत् तव कथनं संगच्छते। ह्य एव शकजातीयान् पराजित्य महाजयघोषेण वीरः विक्रमादित्यः स्वराजधानीम् उज्जयिनीम् आयातः आगतः। इदानीम् अपि विक्रमादित्यविजयध्वजः योगिराजस्य चक्षुषोः अग्रभागे भासते। सम्प्रति एव विक्रमादित्यविजयोत्सवस्य निनादः श्रवणेन्द्रियं प्रवेशयति। ततः न ज्ञायन्ते सप्तदशशतवर्षाणि व्यतीतानि इति।

### व्याकरणविमर्शः

- दुःखितः - दुःखशब्दाद् इतच्प्रत्यये दुःखितः इति निष्पन्नम्।
- आकर्ण्य - आङ्पूर्वकात् कर्णिधातोः ल्यपि आकर्ण्येति रूपम्।

- विनिर्जित्य - विपूर्वकात् निर्-पूर्वकाच्च जिधातोः ल्यपि विनिर्जित्येति रूपम्।
- श्रीमान् - श्रीरस्यास्तीति विग्रहे श्रीशब्दात् मतुप्प्रत्यये पुंसि सौ श्रीमान् इति रूपम्।
- आदित्यपदलाञ्छनः - आदित्यस्य पदम् आदित्यपदम् इति षष्ठीतत्पुरुषः। तदेव लाञ्छनं यस्य स आदित्यपदलाञ्छनः इति बहुव्रीहिः।
- विजयपताका - विजयस्य पताका इति षष्ठीतत्पुरुषः। अथवा विजयसूचिका पताका इति शाकपार्थिवादिवत्समासः।
- समुद्धूयन्ते - सम्पूर्वकात् उत्पूर्वकात् हुधातोः कर्मणि लटि प्रथमपुरुषस्य बहुवचने रूपम्।
- कर्णशष्कुलीम् - कर्णस्य शष्कुली कर्णशष्कुली, ताम् इति षष्ठीतत्पुरुषः।

**कोषः**

- "कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्।" इत्यमरः।
- "आनकः पटहोऽस्त्री" इत्यमरः।

## पाठगतप्रश्नाः – ६

२१. कान् पराजित्य जयघोषेण राजधानीमायातः वीरविक्रमः।

२२. विक्रमादित्यस्य अपरं नाम किम्।

## १०.८) साम्प्रतं मूलपाठमवगच्छाम – ७

**ततः सर्वेषु स्तब्धेषु चकितेषु च ब्रह्मचारिगुरुणा प्रणम्य कथितम् -**

**"भगवन्! बद्ध–सिद्धासनैर्निरुद्ध–निःश्वासैः प्रबोधितकुण्डलिनीकैः विजित–दशेन्द्रियैरनाहत–नाद–तन्तुमवलम्ब्याऽऽज्ञाचक्रं संस्पृश्य, चन्द्र–मण्डलं भित्त्वा, तेजःपुञ्जमविगणय्य, सहस्रदलकमलस्यान्तः प्रविश्य, परमात्मानं साक्षात्कृत्य, तत्रैव रममाणैर्मृत्युञ्जयैरानन्दमात्र–स्वरूपैर्ध्यानावस्तितैर्भवादृशैर्न ज्ञायते कालवेगः। तस्मिन् समये भवता ये पुरुषा अवलोकिताः तेषां पञ्चाशत्तमोऽपि पुरुषो नावलोक्यते। अद्य न तानि स्रोतांसि नदीनाम्, न सा संस्था नगराणाम्, न सा आकृतिर्गिरीणाम्, न सा सान्द्रता विपिनानाम्। किमधिकं कथयामो भारतवर्षमधुना अन्यादृशमेव सम्पन्नमस्ति।"**

**अन्वयार्थः** - ततः तदा सर्वेषु समस्तेषु जनेषु स्तब्धेषु मौनम् आस्थितेषु चकितेषु विस्मितेषु च ब्रह्मचारिगुरुणा ब्रह्मचारिणाम् आचार्येण प्रणम्य नमस्कृत्य कथितम् उक्तम् –

"भगवन् ऐश्वर्यादिषट्कवन्, बद्धसिद्धासनैः गृहीतासनविशेषैः निरुद्धनिश्वासैः प्राणायामादिभिः अवरुद्धश्वासकलापैः प्रबोधितकुण्डलिनीकैः समुद्योतितकुण्डलिनीकैः विजितदशेन्द्रियैः



वशीकृतदशहृषीकैः अनाहतनादतन्तुं सुषुम्नामध्यस्थतुरीयपद्मोत्थितशब्दम् अवलम्ब्य आश्रित्य आज्ञाचक्रं भ्रूमध्यस्थद्विदलात्मकं चक्रं संस्पृश्य सम्यक् स्पृष्ट्वा, चन्द्रमण्डलं हिमांशुविम्बं षोडशदलात्मकचक्रं भित्त्वा विभिद्य, तेजःपुञ्जं महाप्रकाशम् अविगणय्य अवज्ञाय, सहस्रदलकमलस्य अन्तः सहस्रारचक्रस्य अभ्यन्तरं प्रविश्य निविश्य, परमात्मानं परं ब्रह्म साक्षात्कृत्य अनुभूय तत्र एव तस्मिन् परब्रह्मणि एव रममाणैः विहरद्भिः मृत्युञ्जयैः अमरैः आनन्दमात्रस्वरूपैः चिन्मयब्रह्ममयैः ध्यानावस्थितैः आबद्धध्यानैः भवादृशैः भवत्सदृशैः योगिवरैः कालवेगः समयजवो न ज्ञायते न बुध्यते। तस्मिन् समये तत्काले भवता योगिराजेन ये पुरुषा जना अवलोकिता ईक्षिताः तेषां सज्जनानां पञ्चाशत्तमः अपि पञ्चाशत्संख्यापूरकः अपि पुरुषो मानवो न अवलोक्यते न दृश्यते। अद्य इदानीं न तानि भवद्दृष्टाः स्रोतांसि सरितां धाराः, न सा पुरावर्तिनी संस्था स्थितिः नगराणां जनपदानां, न सा पुरा विद्यमानः आकृतिः आकारः गिरीणां पर्वतानाम्, न सा पुरावलोकिता सान्द्रता गहनता विपिनानाम् अरण्यानाम्। किमधिकं किम् इतोऽपि अतिरिक्तं कथयामो वदामः भारतवर्षम् आसमुद्राद् हिमाचलपर्यन्तं भारतभूमिः अधुना सम्प्रति अन्यादृशम् इव पूर्वतः पृथग् इव सम्पन्नम् जातम् अस्ति वर्तते"।

**व्याख्यानम्** - तदा सर्वे जनाः मौनम् आस्थिताः विस्मिताश्च। स योगिवरः आसनविशेषोपविष्टः प्राणायामादिभिः श्वासनिरोधं कृत्वा, कुण्डलिनीप्रबोधं सम्पाद्य, दश इन्द्रियाणि जित्वा, अनाहतनादतन्तुम् आश्रित्य, आज्ञाचक्रं सम्यक् स्पृष्ट्वा, चन्द्रबिम्बं भित्त्वा, तेजःपुञ्जम् अवज्ञाय, सहस्रारचक्रस्य अन्तः प्रविश्य, परं ब्रह्म अनुभूय, तस्मिन् परब्रह्मणि एव रममाणः अमरः आनन्दमात्रस्वरूपः ध्यानोपविष्टः कालवेगं न ज्ञातवान्। ब्रह्मचारिणाम् आचार्यः नमस्कृत्य एवं कथितवान्।

तस्मिन् समये योगिराजः यथा जनान् दृष्टान् तेषां सज्जनानां अर्धभागमपि इदानीं न दृष्टवान् ब्रह्मचारिगुरुः। इदानीं योगिराजेन प्रवाहाः न दृष्टाः, जनपदानां स्थितिः न पुरा इव, पर्वतानाम् आकारः अपि न पूर्ववत्, विपिनानां गहनता न पूर्वदृष्टा। भारतवर्षम् इदम् इदानीं विक्रमादित्यशासनकालात् भिन्नमेव।

योगपद्धतेः निरवद्या वर्णना ब्रह्मचारिवाचमाश्रित्य कविना सम्पादिता। कुण्डलिनी हि गुणत्रयसमन्विता शिवशक्त्यात्मिका नादशक्तिः। हठयोगेन नादमास्थाय तस्याः प्रोद्बोधः साधनीयः। तादृशे समाधौ स्थितो योगी निष्कामो दीप इव निश्चलः तिष्ठति परमात्मसाक्षात्कारं करोति। तदा योगी बाह्यं घटनाजातं किमपि वेदितुं न शक्नोति। खेचरीमुद्राद्यासनेषु संस्थिताः योगिन समाधिस्था भवन्ति। योगिराजः अपि तथा समाहितः सन् कालगतिं न ज्ञातवान्। विक्रमादित्याद् अनन्तरं कथङ्कारं यवनानां करालकरनिगडनिगडिता भारतमातृका उत्सन्नवेदधर्मा दुर्गतिकवलिता संवृत्ता इति ब्रह्मचारिणामाशयः।

**व्याकरणविमर्शः**

- बद्धसिद्धासनैः – सिद्धमासनं सिद्धासनमिति कर्मधारयः। बद्धं सिद्धासनं यैस्ते बद्धसिद्धासनाः इति बहुव्रीहिः, तैः बद्धसिद्धासनैः।



- अविगणय्य - नञ्-वि-संघात-पूर्वकाद् गणेर्णिचि ल्यपि अविगणय्य इति रूपम्।
- निरुद्धनिःश्वासैः - निरुद्धाः निश्वासाः यैः ते निरुद्धनिःश्वासाः इति बहुव्रीहिः।
- प्रबोधितकण्डुलिनीकैः - प्रबोधिता कुण्डलिनी यैः ते प्रबोधितकण्डुलिनीकाः, तैः इति बहुव्रीहिः।
- विजितदशेन्द्रियैः - विजितानि दशेन्द्रियाणि यैः ते विजितदशेन्द्रियाः, तैः इति बहुव्रीहिः।
- अनाहतनादतन्तुम् - अनाहतश्चासौ नादश्चेति अनाहतनादः इति कर्मधारयः। तस्य तन्तुमिति षष्ठीतत्पुरुषः।

**कोषः**

- "कालो दिष्टोऽप्यनेहापि समयः" इत्यमरः।
- "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इत्यमरः।

## पाठगतप्रश्नाः–७

२३. योगिराजः कस्य प्रबोधं सम्पादयति।

२४. योगिराजः किं जयति।

२५. योगिराजः समाधौ कस्य साक्षात्कारं सम्पादयति।

२६. योगिराजः कुत्र रममाणो भवति।

२७. योगिराजदृष्टानि कानि यवनकाले न दृश्यन्ते।

## १०.९) साम्प्रतं मूलपाठमवगच्छाम – ८

**इदमाकर्ण्य किञ्चित् स्मित्वेव परितोऽवलोक्य च योगी जगाद - "सत्यं न लक्षितो मया समय-वेगः। यौधिष्ठिरे समये कलितसमाधिरहं वैक्रम-समये उदस्थाम्। पुनश्च वैक्रम-समये समाधिमाकलय्य अस्मिन् दुराचारमये समयेऽहमुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि, किन्तु तावत् सङ्क्षिप्य कथ्यतां का दशा भारतवर्षस्येति।"**

**अन्वयार्थः** - इदं ब्रह्मचारिगुरवचः आकर्ण्य श्रुत्वा किञ्चित् ईषत् स्मित्वा हसित्वा इव परितः सर्वतः अवलोक्य दृष्ट्वा च योगी मुनिप्रवरः जगाद - "सत्यम् अवितथम्, मया योगिना समयजवः कालवेगः न लक्षितः न ज्ञातः। यौधिष्ठिरे समये युधिष्ठिरस्य राज्यशासनकाले कलितसमाधिः सम्प्राप्तसमाधिः अहं योगिवरः वैक्रम-समये विक्रमादित्यस्य शासनकाले उदस्थां समाधित उत्थितः। पुनः च भूयः च वैक्रमसमये विक्रमकाले समाधिं चित्तवृत्तिनिरोधात्मकम् आकलय्य आलम्ब्य अहं योगी अस्मिन् अत्र दुराचारमये पापमये समये यवनशासनकाले समये उत्थितः जागृतः अस्मि भवामि। अहं योगी पुनः भूयः गत्वा कन्दरं प्रविश्य समाधिं चित्तवृत्तिनिरोधम् एव कलयिष्यामि करिष्यामि, किन्तु परन्तु

तावत् तावत्पर्यन्तं का दशा कीदृशी अवस्था भारतवर्षस्य भारतदेशस्य इति सङ्क्षिप्य समासेन कथ्यताम् उच्यताम्।"

**व्याख्यानम्** - योगिराजः समाधिमाश्रित्य आसीद् अतः तेन समयवेगः न ज्ञातः। स योगिराजः युधिष्ठिरस्य राज्यशासनकाले समाधिं सम्प्राप्तः। ततः स वैक्रम-समये समाधित उत्थितः। भूयः च विक्रमकाले समाधिम् अवलम्ब्य स योगी दुराचारमये यवनशासनकाले उत्थितः। स योगी पुनः कन्दरं प्रविश्य समाधिमग्न एव भविष्यति, किन्तु स भारतवर्षस्य इदानीन्तनीं स्थितिं ज्ञातुमिच्छति इति योगिराजः ब्रह्मचारिणाम् आचार्यं प्रति कथितवान्।

**व्याकरणविमर्शः**

- कलितसमाधिः – कलितः समाधिः येन स कलितसमाधिः इति बहुव्रीहिः।
- यौधिष्ठिरे - युधिष्ठिरस्य अयम् इति युधिष्ठिरशब्दाद् अण्प्रत्ययः यौधिष्ठरः, तस्मिन् यौधिष्ठिरे।
- समुत्थितः - सम्पूर्वाद् उत्पूर्वात् स्थाधातोः क्तप्रत्यये सौ रूपम्।
- कलयिष्यामि - कल्धातोः णिचि लृटि मिपि कलयिष्यामीति रूपम्।
- कथ्यताम् - कथ्धातोः कर्मणि लटि प्रथमैकवचने इदं रूपम्।

**कोषः**

- "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः।
- "सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति" इत्यमरः।

## पाठगतप्रश्नाः–८

२८. योगिराजः विक्रमशासनात्पूर्वं कस्य शासनकाले समाधिमग्नः।
२९. योगिराजः कदा पुनः समाधिं गतः यवनकाले उत्थितः।
३०. योगिराजः समाधौ प्रवेशात्पूर्वं किं ज्ञातुम् इच्छति।

## पाठसारः

योगिराजसपर्यायाः अनन्तरं यदा तेन सह वार्तालापारम्भकाले कुटीरात् यवनत्रस्तायाः बालिकायाः सकरुणरोदनमागतम्। तदा का रोदिति कथं रोदिति इत्यादिकं योगिराजः पृष्टवान्। तदा ब्रह्मचारिगुरुः योगिराजाय बालिकावृत्तान्तं निवेदितवान्।



यदा ब्रह्मचारिगुरुः सायन्तनीं सन्ध्योपासनां समाप्य दर्भासनासीनः छात्रपरिवेष्टितः सन् उपदेष्टुम् उपविष्टः तदा ब्रह्मचारिगुरुः अस्फुटवर्णं वेपमाननिःश्वसनं चित्कारमात्रं दीनतायुक्तं दूरात् एकं क्रन्दनं श्रुतवान्।

ततः क्रन्दनहेतुं ज्ञातुं स छात्रान् आदिष्टवान्। छात्रेषु एकः यवनभयव्याकुलाम् असहायां क्रन्दनरताम् एकां कन्यकां क्रोडे स्वीकृत्य समानीतवान्। सा कन्या सन्तापेन दीर्घं निःश्वसती, व्याघ्राक्रान्ता हरिणी इव, अश्रुप्रवाहस्नाता, कम्पमाना आसीत्। बहुधा अन्वेषणेन अपि तस्याः सहचरं सहचरीं वा कोपि शिष्यो न प्राप्तवान्। तां बहुधां क्रन्दनरतां त्रस्तां च दृष्ट्वा सर्वे एव आश्रमवासिनः अश्रुपातं कृतवन्तः।

बहुधा अनुरुद्धा सा बालिका अत्यल्पं दुग्धं पयः पीतवती। पयःपानात्परं ब्रह्मचारिगुरुणा पृष्टा सा उक्तवती यत् सा समीपवर्तिनः एकस्य ग्रामस्य ब्राह्मणस्य कन्यका। कदाचित् मात्रा नदीतटे भ्रमणावसरे एकेन यवनतनयेन सा मातुर्हस्तात् सप्रसभं अपहृत्य वनमार्गम् आनीता। सहसा मार्गे भल्लुकं दृष्ट्वा भीतो यवनः शाल्मलीतरुम् आरूढवान्। तदा बालिका इतस्ततः भ्रमित्वा तपोवनसान्निध्यं सम्प्राप्ता क्रन्दनरता उद्धृता च तपोवनबालकेन इत्येवं बालिकावृत्तान्तं समाप्तम्।

ब्रह्मचारिगुरुवचः श्रुत्वा क्रोधाग्निसमुद्दीप्तः मुनिप्रवरः विक्रमशासने एतादृशः दुराचारः कथमिति पृष्टवान्। तदा ब्रह्मचारिगुरुः योगिराजं प्रति कथितवान् यद् - इदानीं नास्ति विक्रमसमयः। यवनकाले अस्मिन् वेदघोषमुखरिताया भारतभूमेः धर्मीयं परिमण्डलम् अवलुप्तम्। इदानीं तु प्रतिमन्दिरं जयजयनादः, प्रतितीर्थं घण्टानादः, प्रतिमठं वेदघोषः अवलुप्तः। इदानीं यवनैः वेदा स्मृतिशास्त्राणि पुराणानि भाष्याणि च विनष्टानि। एवं बहुधा यवनानां दुराचारः सखेदं वर्णितो ब्रह्मचारिगुरुणा।

वस्तुतस्तु योगिराजः विक्रमादित्यस्य शकविजयकाले समाधिं गतः। अतः न ज्ञायन्ते सप्तदशशतवर्षाणि व्यतीतानि इति। तदा सर्वे जनाः मौनम् आस्थिताः विस्मिताश्च। स योगिवरः आसनविशेषोपविष्टः प्राणायामादिभिः श्वासनिरोधं कृत्वा, कुण्डलिनीप्रबोधं सम्पाद्य, दश इन्द्रियाणि जित्वा, अनाहतनादतन्तुम् आश्रित्य, आज्ञाचक्रं सम्यक् स्पृष्ट्वा, चन्द्रबिम्बं भित्त्वा, तेजःपुञ्जम् अवज्ञाय, सहस्रारचक्रस्य अन्तः प्रविश्य, परं ब्रह्म अनुभूय, तस्मिन् परब्रह्मणि एव रममाणः अमरः आनन्दमात्रस्वरूपः ध्यानोपविष्टः कालवेगं न ज्ञातवान्। ब्रह्मचारिणाम् आचार्यः नमस्कृत्य एवं कथितवान्। भारतवर्षम् इदम् इदानीं विक्रमादित्यशासनकालात् भिन्नमेव।

योगिराजः युधिष्ठिरस्य राज्यशासनकाले समाधिं सम्प्राप्तः। ततः स वैक्रम–समये समाधित उत्थाय पुनः समाधिम् अवलम्ब्य दुराचारमये यवनकाले उत्थितः। स योगी पुनः कन्दरं प्रविश्य समाधेः पूर्वं भारतवर्षस्य वर्तमानकालिकां दशां ज्ञातुमिच्छति इति योगिराजः ब्रह्मचारिणाम् आचार्यं प्रति कथितवान्। एवं समासे पाठसारः प्रस्तुतः।

## पाठान्तप्रश्नाः

१. ब्रह्मचारिगुरुमुखेन बालिकाप्राप्तिवृत्तान्तं संक्षेपेण लिखत।

२. 'भगवन्! श्रूयतां यदि कुतूहलम्। ह्यः सम्पादित-सायन्तन-कृत्ये, अत्रैव कुशाऽऽस्तरणमधिष्ठिते मयि परितः समासीनेषु छात्रवर्गेषु, धीर-समीर-स्पर्शेन मन्दमन्दमान्दोल्यमानासु व्रततिषु, समुदिते यामिनी- कामिनी-चन्दनबिन्दाविव इन्दौ, कौमुदी-कपटेन सुधाधारामिव वर्षति गगने, अस्मन्नीतिवार्तां शुश्रूषुषु इव मौनमाकलयत्सु पतंग-कुलेषु, कैरव-विकाश-हर्ष-प्रकाश-मुखरेषु चञ्चरीकेषु, अस्पष्टाक्षरम्, कम्पमान-निःश्वासम्, श्लथत्कण्ठम्, घर्घरितस्वनम्, चीत्कारमात्रम्, दीनतामयम्, अत्यवधानश्रव्यत्वादनुमितदविष्ठं क्रन्दनमश्रौषम्। - इति व्याख्यात।

३. अथ 'कन्यके! मा भैषीः, पुत्रि! त्वां मातुः समीपे प्रापयिष्यामः, दुहितः! खेदं मा वह, भगवति! भुङ्क्ष्व किञ्चित्, पिब पयः, एते तव भ्रातरः, यत् कथयिष्यसि तदेव करिष्यामः, मा स्म रोदनैः प्राणान् संशयपदवीमारोपयः, मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीः' इति सहस्रधा बोधनेन कथमपि सम्बुद्धा किञ्चिद् दुग्धं पीतवती। ततश्च मया क्रोडे उपवेश्य, 'बालिके! कथय क्व ते पितरौ। कथमेतस्मिन्नाश्रमप्रान्ते समायाता। किं ते कष्टम्। कथमरोदीः। किं वाञ्छसि। किं कुर्मः।' इति पृष्टा मुग्धतया अपरिकलित–वाक्पाटवा, भयेन विशिथिलवचनविन्यासा, लज्जया अतिमन्दस्वरा, शोकेन रुद्धकण्ठा, चकितचकितेव कथं कथमपि अबोधयदस्मान् यद् – एषा अस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य तनयाऽस्ति। – इति व्याख्यात।

४. ततः स उवाच – 'महात्मन्! क्वाधुना विक्रमराज्यम्। वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदश–शतकानि व्यतीतानि। क्वाधुना मन्दिरे मन्दिरे जयजयध्वनिः। क्व सम्प्रति तीर्थे तीर्थे घण्टानादः। क्वाद्यापि मठे मठे वेदघोषः। अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः' इत्येव श्रूयतेऽवलोक्यते च परितः। – इति व्याख्यात।

५. योगिराजस्य समाध्याचरणं वर्णयत।

६. इदमाकर्ण्य किञ्चित् स्मित्वेव परितोऽवलोक्य च योगी जगाद – "सत्यं न लक्षितो मया समय–वेगः। यौधिष्ठिरे समये कलितसमाधिरहं वैक्रम–समये उदस्थाम्। पुनश्च वैक्रम–समये समाधिमाकलय्य अस्मिन् दुराचारमये समयेऽहमुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि, किन्तु तावत् सङ्क्षिप्य कथ्यतां का दशा भारतवर्षस्येति।" – इति व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. बालिकां सान्त्वयितुं श्यामवटुमादिदेश ब्रह्मचारिगुरुः।

२. यामिनीरूपायाः कामिन्याः कपालबिन्दुरिव समुदितः चन्द्रः।

३. गगनं ज्योत्स्नाव्याजेन सुधाधारामिव वर्षति।

४. ब्रह्मचारिगुरुः अस्फुटवर्णं वेपमाननिःश्वसनं चित्कारमात्रं दीनतायुक्तं कन्दनम् अश्रौषत्।

५. कम्पमानो निःश्वासो यस्मिन् तत् कम्पमाननिःश्वासमिति बहुव्रीहिः।

### उत्तराणि-२

६. भयभीता, वेगसहितम् अत्युष्णं पृथुलं निःश्वसती, हरिणी इव शार्दूलाक्रान्ता, नयनवाष्पप्रवाहनैः स्नाता, सकम्पा बालिका छात्रेण अङ्के समानीता।

७. कन्दन्तीं बालिकां दृष्ट्वा नयनवाष्पाणि निरोद्धुम् आश्रमवासिनः असमर्थाः।

८. कुन्दानां कोरकाणि कुन्दकोरकाणि इति षष्ठीतत्पुरुषः। कुन्दकोरकाणाम् अग्राणि कुन्दकोरकाग्राणि इति षष्ठीतत्पुरुषः। कुन्दकोरकाग्राणि इव दन्ताः यस्याः सा कुन्दकोरकाग्रदती, ताम् इति बहुव्रीहिः।

### उत्तराणि-३

९. बहुधा सम्बोधिता बालिका किञ्चित् पयः पीतवती।

१०. सा बाला समीपस्थे ग्रामे वासिनः ब्राह्मणस्य एकस्य कन्यका।

११. वाचः पाटवं वाक्पाटवम् इति षष्ठीतत्पुरुषः। न परिकलितम् अपरिकलितम् इति नञ्समासः। अपरिकलितं वाक्पाटवं यस्याः सा अपरिकलितवाक्पाटवा इति बहुव्रीहिः।

१२. वचनानां विन्यासः वचनविन्यासः इति षष्ठीतत्पुरुषः। विशिथिलः वचनविन्यासः यस्याः सा विशिथिलवचनविन्यासा इति बहुव्रीहिः।

### उत्तराणि-४

१३. कदाचित् मात्रा सह ब्राह्मणकन्यका नदीतटे भ्रमति स्म तदा यवनतनयः मातुर्हस्तात् सप्रसभं ताम् अपहृतवान्।

१४. यवनतनयः छुरिकां दर्शयित्वा बालिकाक्रन्दनं शमयितुम् इष्टवान्।

१५. यवनतनयः भल्लूकं दृष्ट्वा भयात् शल्मलीतरुम् आरूढवान्।

१६. भल्लूकः कालकम्बल आसीत्।

### उत्तराणि-५

१७. वीरविक्रमस्य भारतवर्षं त्यक्त्वा गतस्य सप्तदशशतवर्षाणि गतानि।

१८. यवनकाले वेदाः विच्छिद्य मार्गेषु विक्षिप्यन्ते।

१९. यवनकाले मन्दिराणि भिद्यन्ते तुलसीवनानि छिद्यन्ते च।

२०. यवनकाले स्मृतिशास्त्राणि उत्तोल्य अग्निषु दह्यन्ते, पुराणानि चूर्णीकृत्य जलेषु प्रक्षिप्यन्ते भाष्याणि भ्रंशयित्वा भर्जनपात्रेषु भर्ज्यन्ते च।

**उत्तराणि–६**

२१. शकान् पराजित्य जयघोषेण राजधानीमायातः वीरविक्रमः।

२२. विक्रमादित्यस्य श्रीवत्सः इति अपरं नाम।

**उत्तराणि-७**

२३. योगिराजः कुण्डलिन्याः प्रबोधं सम्पादयति।

२४. योगिराजः दशेन्द्रियाणि जयति।

२५. योगिराजः समाधौ परमब्रह्मणः साक्षात्कारं सम्पादयति।

२६. योगिराजः परमे ब्रह्मणि रममाणो भवति।

२७. योगिराजे दृष्टाः सत्पुरुषाः, नदीनां धाराः, नगराणां पुरातनी स्थितिः, गिरीणां पूर्ववद् आकारः, अरण्यानां गहनता च यवनकाले न दृश्यन्ते।

**उत्तराणि–८**

२८. योगिराजः विक्रमशासनात्पूर्वं कस्य युधिष्ठिरस्य शासनकाले समाधिमग्नः।

२९. योगिराजः विक्रमशासनकाले पुनः समाधिं गतः यवनकाले उत्थितः।

३०. योगिराजः समाधौ प्रवेशात्पूर्वं भारतवर्षस्य वर्तमानदशां ज्ञातुम् इच्छति।

॥ इति दशमः पाठः ॥

# ११

# शिवराजविजयः - यवनदुराचारः

## प्रस्तावना

योगिराजः ब्रह्मचारिमुखाद् यवनदुराचारं शृणोति इति अस्मिन् पाठे विषयः। तत्रादौ कालकलापः, महामदस्य भारताक्रमणम्, महामदस्य सोमतीर्थध्वंसः, महामदराज्यध्वंसः, यवनराज्यारम्भः, दक्षिणप्रदेशे सनातनधर्मरक्षकः शिववीरः इत्येवं क्रमशः विषया अस्मिन् पाठे वर्णिताः।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- यवनदुराचारं जानीयात्।
- कालकलापं जानीयात्।
- महामदस्य भारताक्रमणं जानीयात्।
- महामदस्य सोममन्दिराक्रमणं जानीयात्।
- महामदराज्यध्वंसं जानीयात्।
- भारते यवनराज्यारम्भं जानीयात्।
- दक्षिणदेशे शिववीरं जानीयात्।
- पाठ्यांशस्थानां पदानां व्याकरणविमर्शं पर्यायशब्दान् च जानीयात्।

## ११.१) सम्पूर्णः मूलपाठः

**तत् संश्रुत्य भारतवर्षीय-दशा-संस्मरण-सञ्जात-शोको हृदयस्थ-प्रसादसम्भारोद्गिरण-श्रमेणेवातिमन्थरेण स्वरेण "मा स्म धर्मध्वंसन-घोषणैर्योगिराजस्य धैर्यमवधीरय" इति कण्ठं रुन्धतो बाष्पानविगणय्य, नेत्रे प्रमृज्य, उष्णं निःश्वस्य, कातराभ्यामिव नयनाभ्यां परितोऽवलोक्य ब्रह्मचारिगुरुः प्रवक्तुमारभत -**

**'भगवन्! दम्भोलिघटितेयं रसना, या दारुण-दानवोदन्तोदीरणैर्न दीर्य्यते, लोहसारमयं हृदयम्, यत् संस्मृत्य यावनान् परस्सहस्रान् दुराचारान् शतधा न भिद्यते, भस्मसाच्च न भवति। धिगस्मान्, येऽद्यापि जीवामः, श्वसिमः, विचरामः, आत्मन आर्य्यवंश्यांश्चाऽभिमन्यामहे'।**

**उपक्रममममुमाकर्ण्य अवलोक्य च मुनेर्विमनायमानं हरिद्राद्रवक्षालितमिव वदनम्, निपतद्वारिबिन्दुनी नयने, अञ्चितरोमकञ्चुकं शरीरम्, कम्पमानमधरम्,भज्यमानं च स्वरं**



सकलपापमयः सकलोपद्रवमयश्चायं वृत्तान्तः' इति, अतएव तत्स्मरणमात्रेणापि खिद्यत एष हृदये, तन्नाहमेनं निरर्थं जिग्जलापयिषामि, न वा चिखेदयिषामि इति च विचिन्त्य-

'मुने! विलक्षणोऽयं भगवान् सकल-कला-कलाप-कलनः सकलकालनः करालः कालः। स एव कदाचित् पयःपूर-पूरितान्यकूपारतलानि मरूकरोति। सिंह-व्याघ्र-भल्लूक-गण्डक-फेरु-शश-सहस्रव्याप्तान्यरण्यानि जनपदीकरोति, मन्दिर-प्रासाद-हर्म्य-शृङ्गाटक-चत्वरोद्यानतडागगोष्ठमयानि नगराणि च काननीकरोति। निरीक्ष्यताम् कदाचिदस्मिन्नेव भारतवर्षे यायजूकै राजसूयादियज्ञा व्ययाजिषत, कदाचिदिहैव वर्षवाताऽऽतप-हिमसहानि तपांसि अतापिषत। सम्प्रति म्लेच्छैर्गावो हन्यन्ते, वेदा विदीर्य्यन्ते, स्मृतयः समृद्यन्ते; मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते, सन्तश्च सन्ताप्यन्ते। सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि? शान्तिमाकलय्यातिसंक्षेपेण कथय यवनराजवृत्तान्तम्। न जाने किमित्यनावश्यकमपि शुश्रूषते मे हृदयम्' इति कथयित्वा तूष्णीमवतस्थे।

अथ स मुनिः - "धैर्येण प्रसादेन प्रतापेन तेजसा वीर्येण विक्रमेण श्रिया सौख्येन धर्मेण विद्यया च सममेव परलोकं सनाथितवति वीरविक्रमादित्ये, शनैः शनैः पारम्परिक-विरोध-विशिथिलीकृतस्नेहबन्धनेषु राजसु, भामिनी-भ्रूभङ्ग-भूरिभाव-प्रभाव-पराभूत-वैभवेषु भटेषु, स्वार्थ-चिन्ता-सन्तान-वितानैकतानेष्वमात्यवर्गेषु, प्रशंसामात्रप्रियेषु प्रभुषु, "इन्द्रस्त्वं वरुणस्त्वं कुवेरस्त्वम्" इति वर्णनामात्रसक्तेषु बुधजनेषु, कश्चन गजिनीस्थाननिवासी महामदो यवनः ससेनः प्राविशद् भारते वर्षे। स च प्रजा विलुण्ठ्य मन्दिराणि निपात्य, प्रतिमा विभिद्य, परश्शतान् जनांश्च दासीकृत्य शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत्।

एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य भारतमलुलुण्ठत्। तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरप्रदेशचूडायितं सोमनाथ-तीर्थमपि धूलीचकार। अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते, परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत्। तत्र हि महार्ह-वैदुर्य-पद्मराग-माणिक्य-मुक्ताफलादिजटितानि कपाटानि स्तम्भान्, गृहावग्रहणीः, भित्तीः वलभीः विटङ्कानि च निर्मथ्य, रत्ननिचयमादाय शतद्वयमणसुवर्ण-शृङ्खलावलम्बिनीं चञ्चच्चाकचिक्य-चकितीकृतावलोचक-लोचन-निचयां महाघण्टां प्रसह्य सङ्गृह्य महादेवमूर्ताविपि गदामुदतूतुलत्।

अथ "वीर, गृहीतमखिलं वित्तम्, पराजिता आर्यसेनाः, बन्दीकृता वयम्, सञ्चतममलं यशः, इतोऽपि न शाम्यति ते क्रोधश्चेदस्मान् ताडय, मारय, छिन्धि, भिन्धि, पातय, किन्तु त्यजेमाम् अकिञ्चित्करीं जडां महादेवप्रतिमाम्। यद्येवं न स्वीकरोषि तद् गृहाणोऽन्यदपि सुवर्णकोटिद्वयम्, मैनां भगवन्मूर्तिं स्प्राक्षीः" - इति साम्रेडं कथयत्सु रुदत्सु प्रणमत्सु च पूजकवर्गेषु नाहं मूर्तिविक्रीणामि, किन्तु भिनद्मि इति सङ्गर्ज्य जनताया हाहाकार-कलकलमाकर्णयन् घोरगदया मूर्तिमतुत्रुटत्। गदापातसमकालमेव चानेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त। स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि

च क्रमेलकपृष्ठेष्वारोप्य सिन्धुनदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत्।

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे (१०८७) वैक्रमाब्दे सशोकं सकष्टञ्च प्राणांस्त्यक्तवति महामदे, गोरदेशवासी कश्चित् शहाबुद्दीननामा प्रथमं गजिनीदेशमाक्रम्य, महामदकुलं धर्मराजलोकाध्वन्यध्वनीनं विधाय, सर्वाः प्रजाश्च पशुमारं मारयित्वा, तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या भारतवर्षं प्रविश्य, शीतलशोणितानप्यसयन् पञ्चाशदुत्तरद्वादशतमितेऽब्दे (१२५०) दिल्लीमश्वयाम्बभूव।

ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रञ्च पारस्परिकविरोधज्वरग्रस्तं विस्मृतराजनीतिं भारतवर्षदुर्भाग्यायमाणमाकल-य्यानायासेनोभावपि विशस्य, वाराणसीपर्यन्तमखण्डमण्डलमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गीचकार। तेन वाराणस्यामपि बहवोऽस्थिगिरयः प्रचिताः रिङ्गत्तरङ्गभङ्गा गङ्गाऽपि शोणितशोणा शोणीकृता, परस्सहस्राणि च देवमन्दिराणि भूमिसात्कृतानि।

तमारभ्याद्यावधि राक्षसा एव राजमकार्षुः। दानवा एव च दीनानदीदलन्। अभूत् केवलम् अकबरशाह-नामा यद्यपि गूढशत्रुर्भारतवर्षस्य तथापि शान्तिप्रियो विद्वत्प्रियश्च। अस्यैव प्रपौत्रो मूर्तिमदिव कलियुगं गृहीतविग्रह इव चाधर्मः आलमगीरोपाधिधारी अवरङ्गजीवः सम्प्रति दिलीवल्लभतां कलङ्कयति। अस्यैव पताका केकयेषु, मत्स्येषु, मगधेषु, अङ्गेषु बङ्गेषु कलिङ्गेषु च दोधूयन्ते, केवलं दक्षिणदेशेऽधुनाऽप्यस्य परिपूर्णो नाधिकारः संवृत्तः।

दक्षिणदेशो हि पर्वतबहुलोऽस्ति अरण्यानीसङ्कुलश्चास्तीति चिरोद्योगेनापि नायमशकन्महाराष्ट्रकेसरिणो हस्तयितुम्। साम्प्रतमस्यैवाऽऽत्मीयो दक्षिणदेशशासकत्वेन 'शास्तिखान'-नामा प्रेष्यत इति श्रूयते। महाराष्ट्रदेशरत्नम्, यवन-शोणित-पिपासाऽऽकुलकृपाणः, वीरता-सीमन्तिनी-सीमन्त-सुन्दर-सान्द्र-सिन्दूर-दान-देदीप्यमान-दोर्दण्डः, मुकुटमणिर्महाराष्ट्राणां, भूषणं भटानां, निधिर्नीतीनाम् कुलभवनं कौशलानां पारावारः परमोत्साहानां कश्चन प्रातःस्मरणीयः स्वधर्माऽऽग्रहग्रहग्रहिलः, शिव इव धृतावतारः शिववीरश्चास्मिन्पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति। विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धवैरम्। 'कार्यं वा साधयेयं देहं वा पातयेयम्' इत्यस्य सारगर्भा महती प्रतिज्ञा। सतीनां, सतां त्रैवर्णिकस्य, आर्यकुलस्य, धर्मस्य भारतवर्षस्य च आशा-सन्तान-वितानस्यायमेवऽऽश्रयः। इयमेव वर्तमाना दशा भारतवर्षस्य। किमधिकम् विनिवेदयामो योगबलावगतसकलगोप्यतमवृत्तान्तेषु योगिराजेषु इति कथयित्वा विरराम।

## ११.२) साम्प्रतं मूलपाठमवच्छाम - १६

तत् संश्रुत्य भारतवर्षीय-दशा-संस्मरण-सञ्जात-शोको हृदयस्थ-प्रसादसम्भारोद्गिरण-श्रमेणेवातिमन्थरेण स्वरेण "मा स्म धर्मध्वंसन-घोषणैर्योगिराजस्य धैर्यमवधीरय" इति कण्ठं रुन्धतो

बाष्पानविगणय्य, नेत्रे प्रमृज्य, उष्णं निःश्वस्य, कातराभ्यामिव नयनाभ्यां परितोऽवलोक्य ब्रह्मचारिगुरुः प्रवक्तुमारभत -

'भगवन्! दम्भोलिघटितेयं रसना, या दारुण-दानवोदन्तोदीरणैर्न दीर्य्यते, लोहसारमयं हृदयम्, यत् संस्मृत्य यावनान् परस्सहस्रान् दुराचारान् शतधा न भिद्यते, भस्मसाच्च न भवति। धिगस्मान्, येऽद्यापि जीवामः, श्वसिमः, विचरामः, आत्मन आर्य्यवंश्यांश्चाऽभिमन्यामहे'।

**अन्वयार्थः -**

तत् योगिराजवचनं संश्रुत्य निशम्य भारतवर्षीय- दशासंस्मरणसञ्जातशोकः भारतदेशीयानां स्थितिचिन्तनमात्रेण समुत्पन्ना करुणा यस्य स हृदयस्थप्रसारसम्भारोरीरणश्रमेण मानसप्रसन्नतासमूहनिःसारणपरिश्रमेण इव यथा अतिमन्थरेण नितान्तमन्देन स्वरेण ध्वनिना "मा स्म धर्मध्वंसोद्घोषणैः मा स्म श्रुतिप्रतिपाद्यधर्मोत्पाटनवचनैः योगिराजस्य महामुनेः धैर्यं वीरत्वम् अवधीय अवनमय" इति अनेन प्रकारेण कण्ठं गलविवरं रुन्धतः पिदधतः वाष्पान् नयनाश्रुनिवहान् अविगणय्य समुपेक्ष्य नेत्रे लोचने प्रमृज्य स्वच्छे विधाय उष्णं निदाघयुतं निःश्वस्य निःश्वासं स्वीकृत्य कातराभ्याम् इव करुणासहिताभ्याम् इव नयनाभ्यां नेत्राभ्यां परितः समन्ताद् अवलोक्य सन्दृश्य ब्रह्मचारिगुरुः वर्णिनाम् आचार्यः प्रवक्तुं कथयितुम् आरभत प्रारभत -

भगवन् महात्मन् दम्भोलिघटिता वज्रविनिर्मिता इयम् एषा सन्निकृष्टा रसना जिह्वा या दारुणदानवोदन्तोदीरणैः भीषणदैत्यवार्तासमुच्चारणैः न दीर्यते न भिद्यते, लोहसारमयं अयोमयसदृशम् अतिकठिनं हृदयं स्वान्तं यत् यावनान् यवनैः म्लेच्छैः विहितान् परस्सहस्रान् अनेकान् दुराचारान् अत्याचारान् संस्मृत्य स्मारं स्मारं शतधा खण्डेषु न भिद्यते विभज्यते, न च भस्मसात् भवति न च अग्निसाद् भवति। अस्मान् धिक् अत्राश्रमे निवसतः प्रति धिक्कारः, ये वयम् अद्यापि अस्मिन् दुराचारमये कालेऽपि जीवामः जीवनं धारयामः, श्वसिमः श्वासक्रियां कुर्मः, विचरामः सञ्चरणं कुर्मः, आत्मनः स्वान् अस्मान् आर्यवंशीयान् वैदिककुलोद्भवान् च अभिमन्यामहे स्वीकुर्मः।

**व्याख्यानम् -**

योगिराजो यदा भारतवर्षस्य इदानीन्तनस्थितिं ज्ञातुं ब्रह्मचारिगुरुं पृष्टवान्। तदा ब्रह्मचारिगुरोः का अवस्था अत्र सा वर्णिता। स हि भारतवर्षस्य यवनकृतायाः अवस्थाया वर्णनावसरे अत्यन्तं दुःखमनुभूतवान्। भारतवर्षस्य अवस्थावर्णनकाले ब्रह्मचारिगुरोः हृदये भारतीयानां दशास्मरणेन करुणा उदिता। तस्य मते तु योगिराजस्यापि इदं वर्णनं धैर्यस्य च्युतये कारणं भविष्यतीति। तस्य भारतवर्षवर्णनकाले कण्ठं नयनाश्रवः अवरुद्धवन्तः। तथापि स कथञ्चित् तान् नयनवाष्पान् अविगणय्य अश्रुसिक्तस्य नेत्रद्वयस्य मार्जनं विधाय दीर्घश्वासं स्वीकृतवान्। स सकरुणसदृशाभ्यां नयनाभ्यां सर्वां दिशं दृष्ट्वा ब्रह्मचारिगुरुः इत्येवं कथयितुम् आरब्धवान्।

ब्रह्मचारिगुरुः अत्र सनातनधर्मावलम्बिनाम् आर्याणां विषये खेदं प्रस्तुतवान्। स कथितवान यद् वज्रनिर्मिता हि तस्य रसना। अन्यथा तु भारतीयेषु दुष्टानां यवनानाम् अत्याचारस्य वर्णनेन सा भिन्ना भवेत्। एवमेव आर्याणां हृदयमपि वज्रसारम्। अतः एव यवनानाम् अत्याचारं स्मृत्वा अपि तद्

अनेकप्रकारेण न भिन्नम्। न हि तद् हृदयम् अग्निना दग्धम्। एवमेव आश्रमवासिनः ते निन्द्याः, यतो हि अस्मिन् यवनात्याचारसमये अपि ते आर्यवंशीयाः वयम् इति साभिमानं जीवनधारणं, श्वासधारणं सञ्चरणं च कुर्वन्ति। एवं यवनानां दुराचारप्रसङ्ग उक्तः।

**व्याकरणविमर्शः**

- संश्रुत्य - सम्पूर्वात् शृणोतेः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्यये ततः "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यपि रूपम्।
- भारतवर्षीयदशासंस्मरणसञ्जातशोकः - भारतवर्षस्येति विग्रहे भारतवर्षशब्दात् छप्रत्यये छस्य "आयनेयीनीनियियः फढखछघां प्रत्ययादीनाम्" इति ईयादेशे भारतवर्षीयेति सिध्यति। भारतवर्षीया चासौ दशा चेति भारतवर्षीयदशा इति कर्मधारयसमासः। भारतवर्षीयदशायाः संस्मरणं भारतवर्षीयदशासंस्मरणमिति षष्ठीतत्पुरुषः। भारतवर्षीयदशासंस्मरणेन सञ्जातः भारतवर्षीयदशासंस्मरणसञ्जातः इति तृतीयातत्पुरुषः। भारतवर्षीयदशासंस्मरणसञ्जातः शोको यस्य स भारतवर्षीयदशासंस्मरणसञ्जातशोकः इति बहुव्रीहिसमासः।
- हृदयस्थप्रसादसम्भारोद्गिरणश्रमेण - हृदये तिष्ठतीति विग्रहे हृदयोपपदे स्थाधातोः कप्रत्यये हृदयस्थशब्दो निष्पन्नः। हृदयस्थश्चासौ प्रसादसम्भारश्चेति हृदयस्थप्रसादसम्भारः इति कर्मधारयसमासः। तस्य उद्गिरणं हृदयस्थप्रसाद-सम्भारोद्गिरणमिति षष्ठीतत्पुरुषः। तस्मिन् श्रमः हृदयस्थप्रसाद-सम्भारोद्गिरणश्रमः, तेन हृदयस्थप्रसादसम्भारोद्गिरणश्रमेण इति सप्तमीतत्पुरुषः।
- अवधीरय - अवपूर्वाद् धृधातोर्लोटि मध्यमपुरुषैकवचने सिपि अवधीरय इति रूपम्।
- रुन्धतः - रुध्धातोः शतृप्रत्यये पुंसि शसि रूपम्।
- अविगणय्य - विपूर्वात् गण्धातोर्णिचि ल्यपि विगणय्य इति रूपम्। न विगणय्य अविगणय्य इति।
- प्रमृज्य - प्रपूर्वान्मृजेः क्त्वो ल्यपि प्रमृज्य इति रूपम्।
- अवलोक्य - अवपूर्वात् लोकिधातोः क्त्वो ल्यपि अवलोक्य।
- प्रवक्तुम् - प्रपूर्वाद् वक्तेः तुमुनि प्रवक्तुम् इति रूपम्।
- आरभत - आङ्पूर्वाद् रभतेः लङि प्रथमपुरुषैकवचने रूपम्।
- दम्भोलिघटिता – दम्भोलिना घटिता दम्भोलिघटिता इति तृतीयातत्पुरुषः।
- दारुणदानवोदन्तोदीरणैः - दारुणाः चामी दानवाश्च दारुणदानवाः इति कर्मधारयसमासः। दारुणदानवानाम् उदन्तः दारुणदानवोदन्तः इति षष्ठीतत्पुरुषः। दारुणदानवोदन्तस्य उदीरणानि, तैः दारुणदानवदन्तोदीरणैः इति षष्ठीतत्पुरुषः।
- भस्मसात् - भस्मशब्दाद् 'विभाषा साति कात्स्न्र्ये' इति सूत्रेण सातिप्रत्ययेन भस्मासात् इति निष्पन्नम्।
- धिगस्मान् इत्यत्र धिक्शब्दयोगा द्वितीया-
  उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।

द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।। इति वार्तिकेन।

**कोषः**

- "पुरोगमः पुरोगामी मन्दगामी तु मन्थरः" इत्यमरः।
- "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः।
- "रसज्ञा रसना जिह्वा" इत्यमरः।
- "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः।

## पाठगतप्रश्नाः

१. आर्याणां रसना कीदृशी?

२. आर्याणां हृदयं कीदृशम्?

३. दम्भोलिघटिता इत्यत्र समासं दर्शयत।

## ११.३) साम्प्रतं मूलपाठमवच्छाम - १७

**उपक्रममुपाकर्ण्य अवलोक्य च मुनेर्विमनायमानं हरिद्राद्रवक्षालितमिव वदनम्, निपतद्वारिबिन्दुनी नयने, अञ्चितरोमकञ्चुकं शरीरम्, कम्पमानमधरम्, भज्यमानं च स्वरम् अवागच्छत् 'सकलानर्थमयः, सकलवञ्चनामयः, सकलपापमयः सकलोपद्रवमयश्चायं वृत्तान्तः' इति, 'अतएव तत्स्मरणमात्रेणापि खिद्यत एष हृदये, तन्नाहमेनं निरर्थं जिग्जलापयिषामि, न वा चिखेदयिषामि' इति च विचिन्त्य-**

**'मुने! विलक्षणोऽयं भगवान् सकल-कला-कलाप-कलनः सकलकालनः करालः कालः। स एव कदाचित् पयःपूर-पूरितान्यकूपारतलानि मरूकरोति। सिंह-व्याघ्र-भल्लूक-गण्डक-फेरु-शश-सहस्रव्याप्तान्यरण्यानि जनपदीकरोति, मन्दिर-प्रासाद-हर्म्य-शृङ्गाटक-चत्वरोद्यानतडागगोष्ठमयानि नगराणि च काननीकरोति। निरीक्ष्यताम् कदाचिदस्मिन्नेव भारतवर्षे यायजूकै राजसूयादियज्ञा व्ययाजिषत, कदाचिदिहैव वर्षवाताऽऽतपहिमसहानि तपांसि अतापिषत। सम्प्रति म्लेच्छैर्गावो हन्यन्ते, वेदा विदीर्य्यन्ते, स्मृतयः समृद्यन्ते; मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते, सन्तश्च सन्ताप्यन्ते। सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि? शान्तिमाकलय्यातिसंक्षेपेण कथय यवनराजवृत्तान्तम्। न जाने किमित्यनावश्यकमपि शुश्रूषते मे हृदयम्' इति कथयित्वा तूष्णीमवतस्थे।**

**अन्वयार्थः -**

उपक्रमं भारतदुर्दशाया उपोद्घातम् उपाकर्ण्य श्रुत्वा अवलोक्य दृष्ट्वा च मुनेः ब्रह्मचारिणाम् आचार्यस्य विमनायमानम् उन्मनायमानं हरिद्राद्रवक्षालितम् इव महारजनरसधौतम् इव वदनं मुखम्, निपतद्वारिबिन्दुनी प्रवच्यवन्नयनजले, अञ्चितरोमकञ्चुकं सरोमाञ्चं शरीरं वपुः, कम्पमानं वेपमानम् अधरम्

ओष्ठद्वयम्, भज्यमानं त्रुट्यमानं च स्वरं शब्दम् अवागच्छत् ज्ञातवान्। 'सकलानर्घमयः अखिलपापमयः, सकलवञ्चनामयः अशेषवञ्चनासमन्वितः, सकलपापमयः समस्तपातकमयः सकलोपद्रवमयः सम्पूर्णोपसर्गमयः च अयम् एष वृत्तान्तः कथानकः' इति, 'अत एव अस्माद् हेतोः तत्स्मरणमात्रेण अपि तादृशावद्यस्मृतिमात्रेण अपि खिद्यते क्लेशम् अनुभवति, एष ब्रह्मचारिगुरुः हृदये चेतसि तत् तस्माद् अहं योगिराजः एनं महामुनिं निरर्थं निष्प्रयोजनं न नहि जिग्लापयिषामि ग्लापयितुं वाञ्छामि, न वा चिखेदयिषामि खेदयितुम् इच्छामि' इति च अनेन प्रकारेण विचिन्त्य चिन्तयित्वा-

मुने! ब्रह्मचारिगुरो! विलक्षणः विवेचनाक्षमः अयम् एष भगवान् निखिलैश्वर्यसम्पन्नः सकलकलाकलापकलनः अशेषकलासमूहनिर्माता सकलकालनः समस्तस्य विक्षयकारी करालः भयङ्करः कालः महाकालः स एव महाकाल एव कदादित् कंस्मिश्चित् समये पयःपूरपूरितानि वारिस्रोतोभरितानि अकूपारतलानि अब्धितलानि मरूकरोति मरुस्थलं विदधाति, सिंह-व्याघ्र-भल्लुक-गण्डक-पेरु-शश-सहस्रव्याप्तानि केसरि-शार्दूल-ऋक्ष-खड्गि-जम्बुक-हरिणसहस्र-समावृतानि अरण्यानि वनानि जनपदीकरोति नगरीकरोति, मन्दिर-प्रासाद-हर्म्य-शृङ्गाटकचत्वरोद्यानतडागगोष्ठमयानि देवसदन-राजसदन-धनिकावास-चतुष्पथाङ्गण-गोस्थानक-भूयिष्ठानि नगराणि जनपदानि च काननीकरोति वनीकरोति। निरीक्ष्यताम् अवलोक्यतां कदाचित् कंस्मिश्चित् समये अस्मिन् एव एतस्मिन् एव भारतवर्षे भारतदेशे यायजूकैः यागकरणशीलैः राजसूयादियज्ञाः राजसूयप्रभृतयः विविधयागाः व्ययाजषित विहिताः, कदाचित् कंस्मिश्चित् समये इह एव अस्मिन् एव भारतवर्षे भारतदेशे वर्षवातातपहिमसहानि वर्षाकालवनग्रीष्मशीतसहानि तपांसि कृच्छ्रादीनि कर्माणि च अतापिषत तप्तानि, सम्प्रति तु अस्मिन् काले तु म्लेच्छैः यवनैः गावः धेनवः हन्यन्ते प्राणैः वियुज्यन्ते, वेदाः श्रुतयः विदीर्यन्ते नाश्यन्ते, स्मृतयः मन्वादिप्रणीतानि धर्मशास्त्राणि समृद्यन्ते मर्दितानि क्रियन्ते, मन्दिराणि देवसदनानि मन्दुरीक्रियन्ते वाजिशालीक्रियन्ते, सत्यः पतिव्रता रमण्यः पात्यन्ते पातिव्रत्यात् वियुज्यन्ते, सन्तः च सत्पुरुषाः च सन्ताप्यन्ते सम्पीड्यन्ते, सर्वम् एतत् अखिलम् इदं माहात्म्यं महत्त्वं तस्य एव पूर्वोक्तस्य एव महाकालस्य इति इत्यस्मात् हेतोः कथं केन कारणेन धीरधौरेयः अपि धीरधुरन्धरः अपि धैर्यं धीरत्वं विधुरयसि परित्यजसि, शान्तिम् आकलय्य संश्रित्य अतिसङ्क्षेपेण अतीव समासेन कथय वद यवनराज्यवृत्तान्तं यवनशास्तिकथानकम्, न नहि जाने अवगच्छामि किमिति कथम् अनावश्यकम् अपि प्रयोजनहीनम् अपि शुश्रूषते श्रोतुम् इच्छति मे मम हृदयं स्वान्तम् इति एवम्प्रकारेण कथयित्वा वर्णयित्वा तूष्णीं मौनम् अवतस्थे जातः।

### व्याख्यानम् -

उपक्रमं श्रुत्वा अवलोक्य ब्रह्मचारिणाम् आचार्यस्य रक्तं वदनम्, अश्रुसहिते नेत्रे, सरोमाञ्चं शरीरम्, वेपमानौ अधरौ अवरुध्यमानं च कण्ठं दृष्ट्वा च महामुनिः यवनात्याचारवृत्तान्तः अतीव दुःखदायकः इति ज्ञातवान्। ततः स ब्रह्मचारिगुरुं प्रति उक्तवान् वस्तुतो हि कालगतिः अननुमेया। कालचक्रेणैव अखिलं जगत् भवति नियन्त्रितम्। सर्वं हि वस्तुजातं कालाधीनम्। कालस्य द्विविधा मूर्तिः सर्जनात्मिका ध्वंसात्मिका च। तथाहि स कालः पृथिवीमिमां रम्यां विदधाति तथैव स एव निर्दयं सर्वं धूलिसात् करोति। स निमेषेण अरण्यानि जनपदीकरोति। अपरतो नगराणि काननीकरोति। प्राक्

कालप्रसादेन भारतवर्षे श्रुतिस्मृतिपुराणादीनाम् अनुशीलनपरम्परा आसीत्। सम्प्रति तु कालवशादेव तत्सर्वं प्रनष्टम्। तटप्रपात इव कालकृतिर्भवति भङ्गुरा। अत एव कालवशेन एव भवति सनातनधर्मस्य पीडनम् इति विविच्य धैर्यधारणं कर्तव्यम्। यतो हि चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च इति महामुनेराशयः।

**व्याकरणविमर्शः**

- विमनायमानम् – विगतं मनः यस्य स विमनाः इति बहुव्रीहिः। विमनाः इव आचरतीति विमनःशब्दात् क्यचि शानचि पुंसि अमि रूपम्।
- हरिद्राद्रवक्षालितम् - हरिद्रायाः द्रवः हरिद्रादवः इति षष्ठीतत्पुरुषः। तेन क्षालितं हरिद्राद्रवक्षालितम् इति तृतीयातत्पुरुषः।
- निपतद्वारिबिन्दूनी - निपतन्तो वारिबिन्दवो याभ्यां ते निपतद्वारि-बिन्दूनी इति बहुव्रीहिः। वारिणां बिन्दवः वारिबिन्दवः इति षष्ठीतत्पुरुषः।
- अञ्चितरोमकञ्चुकम् - रोमाणां कञ्चुकाः रोमकञ्चुकाः इति षष्ठीतत्पुरुषः। अञ्चिताः रोमकञ्चुकाः यत्र तदिति बहुव्रीहिः।
- जिग्लापयिषामि - ग्लै हर्षक्षये इति धातोः पुकि णिचि सनि लटि मिपि रूपम्।
- चिखेदिषामि - खिदेर्णिचि सनि मिपि रूपम्।
- सकलकलाकलापकलनः - सकला या कलाः सकलकलाः इति कर्मधारयः। सकलकलानां कलापः सकलकलाकलापः इति षष्ठीतत्पुरुषः। तस्य कलनः सकलकलाकलापकलनः इति षष्ठीतत्पुरुषः।
- सकलकलनः - सकलानां कलनः इति षष्ठीतत्पुरुषः।
- पयःपूरपूरितानि - पयसां पूरः पयःपूरः इति षष्ठीतत्पुरुषः। तेन पूरितानि पयःपूरितानि इति तृतीयातत्पुरुषः।
- काननीकरोति - अकाननिा काननानि करोति इति काननशब्दाद् अभूततद्भावे च्वौ, कृधातोर्लटि तिपि इति रूपम्।

**कोषः**

- "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यमरः।
- "कालो मृत्यौ महाकाले" इत्यमरः।
- "शृङ्गाटकचतुष्पथे" इत्यमरः।
- "इज्याशीलो यायजूको यज्वा तु विधिगेष्टवान्" इत्यमरः।

## पाठगतप्रश्नाः

४. यवनदुराचारवृत्तान्तः कीदृशः?

५. कीदृशः कालः?

६. कीदृशानि अरण्यानि जनपदीकरोति कालः।

७. कीदृशानि नगराणि काननीकरोति कालः।

## ११.४) साम्प्रतं मूलपाठमवच्छाम - १८

**अथ स मुनिः - "धैर्येण प्रसादेन प्रतापेन तेजसा वीर्येण विक्रमेण शान्त्या श्रिया सौख्येन धर्मेण विद्यया च सममेव परलोकं सनाथितवति तत्रभवति वीरविक्रमादित्ये, शनैः शनैः पारम्परिक-विरोध-विशिथिलीकृत-स्नेहबन्धनेषु राजसु, भामिनी-भ्रूभङ्ग-भूरिभाव-प्रभाव-पराभूत-वैभवेषु भटेषु, स्वार्थ-चिन्ता-सन्तान-वितानैकतानेष्वमात्यवर्गेषु, प्रशंसामात्रप्रियेषु प्रभुषु, "इन्द्रस्त्वं वरुणस्त्वं कुवेरस्त्वम्" इति वर्णनामात्रसक्तेषु बुधजनेषु कश्चन गजिनीस्थाननिवासी महामदो यवनः ससेनः प्राविशद् भारते वर्षे। स च प्रजा विलुण्ठ्य, मन्दिराणि निपात्य, प्रतिमा विभिद्य, परश्शतान् जनांश्च दासीकृत्य, शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत्।**

### अन्वयार्थः -

अथ योगिराजवचनश्रवणाद् अनन्तरं स प्रसिद्धः मुनिः ब्रह्मचारिगुरुः अवदद् भगवन् योगिराट्, धैर्येण धीरतया प्रसादेन प्रसन्नतया प्रतापेन प्रभावेण तेजसा कान्त्या वीर्येण सामर्थ्येन विक्रमेण पराक्रमेण शान्त्या शमेन श्रिया लक्ष्म्या सौख्येन सुखेन धर्मेण श्रुतिपविहितेन कर्मणा विद्यया ज्ञानेन च पुनः समम् एव सार्धम् एव परलोकं स्वर्लोकं सनाथितवति प्रस्थिते तत्रभवति पूज्ये वीरविक्रमादित्ये एतन्नामकोज्जयिनीशासके, शनैः शनैः मन्दं मन्दं पारस्परिकविरोधविशिथिल-स्नेहबन्धेषु अन्योऽन्यवैरश्लथीकृतप्रेमसम्बन्धेषु राजसु नृपेषु, भामिनी-भूजङ्ग-भूरिभावप्रभावपराभववैभवेषु कामिनीभ्रूविलास-बहुलीला-प्रभाव-पराजयधनेषु भटेषु वीरेषु, स्वार्थचिन्तासन्तानवितानैकतानेषु मलिन-स्वाभ्युदय-चिन्तामात्र-परायणेषु अमात्यवर्गेषु सचिवसमूहेषु प्रशंसामात्रप्रियेषु निजकीर्तिश्रुतिरसिकेषु प्रभुषु शासकेषु, "इन्द्रस्त्वं पुरन्दरस्त्वं वरुणस्त्वं यादसां पतिस्त्वं कुवेरस्त्वं धनाधिपतिस्त्वमि"ति एवम्प्रकारेण वर्णनामात्रसक्तेषु प्रशंसामात्रतत्परेषु बुधजनेषु सुधीसमुदायेषु, कश्चन कोऽपि गजिनीस्थानवासी गजिनीति प्रसिद्धजनपदकृतवसतिः महामदः महमुद इत्याख्यः यवनः म्लेच्छः ससेनः चमूभिः सहितः प्राविशत् प्रवेशनम् अकरोत् भारते वर्षे भारताख्ये देशे। स महमूदनामकः च पुनः प्रजाः जनताः विलुण्ठ्य अपहृत्य मन्दिराणि देवसदनानि निपात्य पातयित्वा प्रतिमाः विग्रहान् विभिद्य विदीर्य परःशतान् शताधिकान् जनान् प्रजाः दासीकृत्य दासान् विधाय शतशः अनेकेषु उष्ट्रेषु क्रमेलकेषु रत्नानि मणिमाणिक्यादीनि आरोप्य संस्थाप्य स्वदेशं गजनीति निजस्थानम् अनैषीत् स्वीकृतवान्।

### व्याख्यानम् -

अत्र महामदस्य भारताक्रमणं सोमनाथमन्दिरस्य लुण्ठनं च वर्णितम्। यदा धैर्यं प्रसन्नता प्रतापः तेजः, विक्रमः धर्मः इत्यादिगुणानाम् आश्रयः विक्रमादित्यः स्वर्गलोकं गतवान् तदा कश्चित् गजिनीनामकस्य स्थानस्य राजा महामदः सैन्यानि स्वीकृत्य भारतवर्षम् आगतवान्। स भारतीयान् मारयित्वा मन्दिराणि प्रतिमाः च नाशयित्वा, बहून् जनान् स्वस्य दासरूपेण अङ्गीकृत्य बहूनि रत्नानि च बलात् स्वीकृत्य स्वस्य राजधानीं गजिनीस्थानं प्रति अगच्छत्।

### व्याकरणविमर्शः

- सनाथितवति - नाथेन सह वर्तते सनाथ इति सहार्थबहुव्रीहिः। सनाथं करोति सनाथयति। ततः ण्यन्तात् सनाथेः क्तवतुप्रत्यये ततः सप्तम्यां ङौ सनाथितवति इति रूपम्।
- पारस्परिकविरोधविशिथिलीकृतस्नेहबन्धनेषु - पारस्परिको विरोधः कर्मधारयसमासः। तेन विशिथिलीकृतः इति तृतीयातत्पुरुषः। स्नेहस्य बन्धनमिति षष्ठीतत्पुरुषः। पारस्परिकविरोधविशिथिलीकृतं स्नेहबन्धनं येषां ते पारस्परिकविरोधविशिथीलकृतस्नेहबन्धनाः इति बहुव्रीहिः, तेषु।
- स्वार्थचिन्तासन्तानवितानैकतानेषु - स्वार्थानां चिन्ताः इति षष्ठीतत्पुरुषः। स्वार्थचिन्तानां सन्तानम् इति षष्ठीतत्पुरुषः। तस्य वितानम् इति षष्ठीतत्पुरुषः। तस्मिन् एकतानाः सप्तमीतत्पुरुषः, तेषु।
- प्रशंसामात्रप्रियेषु - प्रशंसा एव प्रशंसामात्रम् इति नित्यसमासः। प्रशंसामात्रं प्रियं येषां ते प्रशंसामात्रप्रियाः इति बहुव्रीहिः, तेषु।
- वर्णनामात्रसक्तेषु - वर्णना एव वर्णनामात्रम् इति नित्यसमासः। तत्र सक्तेषु वर्णनामात्रसक्तेषु इति सप्तमीतत्पुरुषः।
- गजिनीस्थाननिवासी - गजिनीनामकं स्थानं गजिनीस्थानमिति शाकपार्थिवादिवत्समासः। तत्र निवासी इति सप्तमीतत्पुरुषः।

### कोषः

- "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरः।

## पाठगतप्रश्नाः

८. विक्रमादित्यः केन सह परलोकं गतः?

९. गजनीस्थाननिवासी इत्यत्र कः समासः?

१०. राज्ञां परस्परवैरं यदा प्रवृद्धं तदा कः भारतवर्षम् आक्रान्तवान्।

११. भारतवर्षाक्रमणात्परं महामदः किं कृतवान्।

## ११.५) साम्प्रतं मूलपाठमवच्छाम - १९

**एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य भारतमलुलुण्ठत्। तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरप्रदेशचूडायितं सोमनाथतीर्थमपि धूलीचकार। अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते, परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत्। तत्र हि महार्ह-वैदुर्य-पद्मराग-माणिक्य-मुक्ताफलादिजटितानि कपाटानि स्तम्भान्, गृहावग्रहणीः, भित्तीः वलभीः विटङ्कानि च निर्मथ्य, रत्ननिचयमादाय शतद्वयमणसुवर्ण-शृङ्खलावलम्बिनीं चञ्चच्चाकचिक्य-चकितीकृतावलोचक-लोचन-निचयां महाघण्टां प्रसह्य सङ्गृह्य महादेवमूर्तावपि गदामुदतूतुलत्।**

### अन्वयार्थः -

एवम् अनेन प्रकारेण स महामदः ज्ञातास्वादः सम्प्राप्तविलुण्ठनरसः पौनःपुन्येन भूयो भूयः द्वादशवारम् आगत्य समेत्य भारतं भारतवर्षम् अलुलुण्ठत् लुण्ठितवान्। तस्मिन्नेव लुण्ठनविषयके एव स्वसंरम्भे निजोद्योगे एकदा एकस्मिन् समये गुर्जरदेशचूडायितं गुर्जर(गुजराट्)-प्रदेशस्य भूषणभूतं सोमनाथतीर्थम् अपि सोमनाथेश्वरमूर्तिम् अपि धूलीचकार नाशितवान्। अद्य तु सम्प्रति तु तत्तीर्थस्य सोमनाथतीर्थस्य नाम अपि अभिधानम् अपि केनापि केनचिद् अपि जनेन न नहि स्मर्यते स्मृतिपथम् आनीयते। परं किन्तु तत्समये तदानीन्तने काले लोकोत्तरं लोकश्रेष्ठं तस्य सोमनाथमन्दिरस्य वैभवं सम्पत् आसीत् अवर्तत। तत्र सोमनाथदेवमन्दिरे हि महार्हवैदूर्यपद्मरागमाणिक्यमुक्ताफलादिजटितानि महार्हाणि बहुमूल्यानि वैदुर्यपद्मरागमाणिक्यमुक्ताफलादीनि वैदूर्यलोहिकतमणिमौक्तिकादीनि तैः जटितानि कपाटानि द्वाराणि, स्तम्भान् स्थूणाः, गृहावग्रहणीः आवासानां देहलीः, भित्तीः कुड्यानि, वलभीः गोपानसीः, विटङ्कानि च कपोतपालिकाः च निर्मथ्य मथित्वा रत्ननिचयं माणिक्यसमूहम् आदाय संगृह्य शतद्वयमणसुवर्णशृङ्खलावलम्बिनीं द्विशतमणहेमेन निर्मितां शृङ्खलावलम्बिनीं चञ्चञ्चाकचिक्यचकितीकृतावलोचक-लोचननिचयां चञ्चच्चाकचक्येन सुवर्णस्य उज्ज्वलवर्णेन चकितीकृतः विस्मयीकृतः अवलोचकलोचनानां समूहः द्रष्टुः नेत्रसमूहः यया ताम् उज्ज्वलसुवर्णवर्णशोभितां महाघण्टां बृहद्घण्टां प्रसह्य बलात् सङ्गृह्य स्वीकृत्य महादेवमूर्तौ अपि महादेवस्य पार्वतीप्राणनाथस्य मूर्तौ विग्रहे अपि गदां तादृशशस्त्रम् उदतूतुलत् उत्तोलितवान्।

### व्याख्यानम् -

एकवारं भारते लुण्ठनादिकं कृत्वा महामदस्य लोभः वर्धितः। अतः स द्वादशवारं भारतर्षं प्रति आक्रान्तवान्। तदा एकवारं स गुर्जरप्रदेशस्य अभिधानम् आधुनिकगुजराट्प्रदेशस्य विख्यातस्य सोमनाथमन्दिरस्य लुण्ठनं कृतवान्। अधुना तस्य तीर्थस्य तथा अभिधानं नास्ति, परन्तु पुरा तत्तीर्थम् अत्यन्तं प्रसिद्धम् आसीत्। तस्मिन् मन्दिरे यावद् वैभव्यम् आसीत् तावत् तस्मिन् समये जगति कुत्रापि नासीत्। तस्य मन्दिरस्य द्वाराणि स्तम्भानि च बहुमूल्यवैदूर्यपद्मरागमणि-माणिक्यादिरत्नैः निर्मितानि आसन्। न केवलं एतदेव तत्र यानि गृहाणि मन्दिरस्य भित्तयः च आसन् तानि अपि मणिमुक्तादिवेष्टितानि। पशुपक्षिणाम् आवासस्थानानि अपि सुवर्णेन निर्मितानि। मन्दिरस्य देहल्याम् अन्तः शतशः पद्मरागादिबहुमूल्यानि रत्नानि स्थापितानि। महामदः तानि सर्वाणि विनाश्य स्वीकृतवान्। किञ्च तस्मिन्

मन्दिरे एका महाघण्टा आसीत् या द्विशतमणिपरिमितसुवर्णेन निर्मिता। तस्या औज्वल्यं दृष्ट्वा सर्वे चकिताः। तां महाघण्टामपि स्वीकृत्य स गदया महादेवमूर्तिं नाशितवान्।

**व्याकरणविमर्शः**

- स्वप्नजालपरतन्त्रेण – स्वप्न एव जालं स्वप्नजालमिति कर्मधारयसमासः। तस्य परतन्त्रेण स्वप्नजालपरतन्त्रेण इति षष्ठीतत्पुरुषसमासः।
- ज्ञातास्वादः - ज्ञात आस्वादः येन स ज्ञातास्वादः इति बहुव्रीहिसमासः।
- गुर्जरदेशचूडायितम् - गुर्जरदेशस्य चूडायितं गूर्जरदेशचूडायितम् इति षष्ठीतत्पुरुषः।
- वैदूर्यपद्मरागमाणिक्यमुक्ताफलजटितानि - वैदूर्यं च पद्मरागः च माणिक्यं च मुक्ताफलं च वैदूर्यपद्मरागमाणिक्यमुक्ताफलानि इति इतरेतरद्वन्द्वसमासः। तैः जटितानि इति तृतीयातत्पुरुषः।
- रत्ननिचयम् - रत्नानां निचयः रत्ननिचयः, तमिति षष्ठीतत्पुरुषः।

**कोषः**

- "कालो दिष्टोऽप्यनेहापि समयः" इत्यमरः।
- "स्तम्भौ स्थूणाजडीभावौ" इत्यमरः।
- "गोपानसी तु वलभी" इत्यमरः।
- "वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः" इत्यमरः।

## पाठगतप्रश्नाः

१२. महामदः कतिवारं भारतस्य विलुण्ठनं कृतवान्।

१३. महामदः किं धूलीचकार।

१४. महामदः सोमनाथमन्दिरस्य कीदृशी घण्टां स्वीकृतवान्।

१५. गुर्जरदेशचूडायितम् इत्यत्र कः समासः।

## ११.६) साम्प्रतं मूलपाठमवच्छाम - २०

अथ "वीर, गृहीतमखिलं वित्तम्, पराजिता आर्यसेनाः, बन्दीकृता वयम्, सञ्चितममलं यशः, इतोऽपि न शाम्यति ते क्रोधश्चेदस्मान् ताडय, मारय, छिन्धि, भिन्धि, पातय, किन्तु त्यजेमाम् अकिञ्चित्करीं जडां महादेवप्रतिमाम्। यद्येवं न स्वीकरोषि तद् गृहाणास्मत्तोऽन्यदपि सुवर्णकोटिद्वयम्, त्रायस्व, मैनां भगवन्मूर्तिं स्प्राक्षीः" - इति साम्रेडं कथयत्सु रुदत्सु पतत्सु विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषु - "नाहं मूर्तिं विक्रीणामि, किन्तु भिनद्मि" इति सङ्गर्ज्य जनताया हाहाकारकलकलमाकर्णयन् घोरगदया मूर्तिमतुत्रुटत्। गदापातसमकालमेव चानेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि

परितोऽवाकीर्यन्त। स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिन्धुनदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत्।

### अन्वयार्थः -

अथ महादेवविग्रहे गदाघाताद् अनन्तरं, वीर शूर महामद, गृहीतं स्वायत्तीकृतम् अखिलं समग्रं वित्तं रत्नम्, पराजिताः पराभवग्रस्ताः आर्यसेनाः आर्यचमूः, बन्दीकृताः निगडिता वयम् आर्याः, सञ्चितं संगृहीतम् अमलं स्वच्छं यशः कीर्तिः, इतः अपि एतादृशात् सौभाग्यात्परमपि ते तव क्रोधः अमर्षः न नहि शाम्यति शान्तो भवति चेत् यदि अस्मान् पूजकवृन्दान् ताडय प्रहर, मारय प्राणरहितान् कुरु, छिन्धि विदारय, भिन्धि भिन्नान् कुरु, पातय पर्वतशिखरात् अधःपातं विधेहि, मज्जय पारावारतले अवगाहय, खण्डय शरीराणि खण्डितानि विधेहि, कर्तय द्विधा देहं कुरु, ज्वलय वह्नौ गात्रदाहं कारय, किन्तु परन्तु इमां सम्मुखस्थाम् अकिञ्चित्करीं न किञ्चिदपि क्रियाशीलां जडां चैतन्यविरहितां महादेवप्रतिमां शिवमूर्तिं त्यज मुञ्च। यदि एवम् इत्थं न नहि स्वीकरोषि अङ्गीकरोषि तत् तर्हि अस्मत्तः अस्मभ्यं पूजकेभ्यः अन्यदपि इतः अधिकमपि सुवर्णकोटिद्वयं कोटिद्वयहेममुद्रां गृहाण स्वीकुरु, एनाम् इमां भगवन्मूर्तिं शिवलिङ्गं मा नहि स्प्राक्षीः स्पृश इति इत्थं साम्रेडं बहुशः बहुवारं कथयत्सु वदत्सु रुदत्सु प्रलापरतेषु प्रणमत्सु प्रणामकुर्वत्सु च पूजकवर्गेषु शिवसेवकसमुदायेष अहं महामदः न नहि मूर्तीः विक्रीणामि विग्रहानां विक्रयं करोमि, किन्तु परन्तु भिनद्मि भेदं करोमि इति अनेन प्रकारेण सङ्गर्ज्य गर्जनं विधाय जनतायाः लोकस्य हाहाकारकलकलं हा-हा-इत्यकारकं ध्वनिम् आकर्णयन् शृण्वन् घोरगदया प्रचण्डगदया मूर्तिं प्रतिमाम् अतुत्रुटत् भङ्क्तवान्। गदापातसमकालम् एव गदाप्रहारसमयम् एव अनेकार्बुदपद्ममुद्रामूल्यानि बहुसङ्ख्यमूल्यानि रत्नानि विविधमौक्तिकादीनि मूर्तिमध्यात् शिवलिङ्गस्य अभ्यन्तराद् उच्छलितानि उत्पतितानि, परितः समन्तात् अवाकीर्यन्त प्रकीर्णानि विस्तृतानि। स च महामदः दग्धमुखः महादुष्टः तानि विकीर्णितानि रत्नानि मौक्तिकानि मूर्तिखण्डानि शिवलिङ्गखण्डानि च क्रमेलकपृष्ठेषु उष्ट्रपृष्ठेषु आरोप्य संस्थाप्य सिन्धुनदम् एतन्नामिकां सरितम् उत्तीर्य उल्लङ्घ्य स्वकीयां स्वस्य विजयध्वजिनीं जयपताकिनीं गजिनीम् एतन्नामिकां राजधानीं शासनकेन्द्रं प्राविशत् गतवान्।

### व्याख्यानम् -

महादेवविग्रहे गदाघाताद् अनन्तरमेव तत्रत्याः पूजका महामदं प्रार्थितवन्तः यत् - तेन महामदेन सर्वं स्वीकृतम्। आर्यसेनाः पराजिताः। अतः महत्सौभाग्यं तस्य। अतः महामदः तान् ताडयतु, मारयतु, विदारयतु, पर्वतादि-उच्चस्थानात् अधः निक्षिपयतु, परन्तु महादेवमूर्तिं नैव स्पृशतु इति। ते पूजकाः तस्मै सुवर्णकोटिद्वयमपि दातुम् इष्टवन्तः। परन्तु सः महामदः उक्तवान् - अहं मूर्तेः विक्रयणं न करिष्यामि, परन्तु तां नाशयिष्यामि इति। एवमुक्त्वा स जनानां क्रन्दनध्वनिम् अवज्ञाय भीषणगदया महादेवस्य मूर्तौ गदाघातं कृतवान्। गदया महामदः यदा महादेवमूर्तौ आघातम् अकरोत् तदा तत्तः बहुमूल्यानि रत्नानि समन्तात् विस्तृतानि। स पाप्मा तानि रत्नानि मदादेवस्य मूर्तिखण्डम् अपि उष्ट्रस्य पृष्ठे संस्थाप्य स्वस्य राजधानीं गजिनीं गतवान्।

**व्याकरणविमर्शः**

- आर्यसेनाः – आर्याणां सेनाः आर्यसेनाः इति षष्ठीतत्पुरुषः।
- सुवर्णकोटिद्वयम् - सुवर्णस्य कोटिद्वयं सुवर्णकोटिद्वयम् इति षष्ठीतत्पुरुषः।
- हाहाकारकलकलम् - हाहाकारं च कलकलं च हाहाकारकलकलम् इति द्वन्द्वसमासः।
- दग्धमुखः - दग्धं मुखं यस्य स दग्धमुखः इति बहुव्रीहिसमासः।

**कोषः**

- "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरः।
- "विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्" इत्यमरः।
- "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः।
- "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः" इत्यमरः।
- "यशः कीर्तिः समज्ञा च" इत्यमरः।

## पाठगतप्रश्नाः

१६. शिवमूर्तिस्पर्शनिषेधाय अनुरुद्धः महामदः किमुक्तवान्।

१७. मूर्तौ गदापातात्परं किमभवत्।

१८. दग्धमुखः इत्यत्र कः समासः।

## ११.७) साम्प्रतं मूलपाठमवच्छाम - २१

**अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे (१०८७) वैक्रमाब्दे सशोकं सकष्टञ्च प्राणांस्त्यक्तवति महामदे, गोरदेशवासी कश्चित् शहाबुद्दीननामा प्रथमं गजिनीदेशमाक्रम्य, महामदकुलं धर्मराजलोकाध्वन्यध्वनीनं विधाय, सर्वाः प्रजाश्च पशुमारं मारयित्वा, तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या भारतवर्षं प्रविश्य, शीतलशोणितानप्यसयन् पञ्चाशदुत्तरद्वादशतमितेऽब्दे (१२५०) दिल्लीमश्वयाम्बभूव।**

**अन्वयार्थः -**

अथ गजिनीगमनात् परं कालक्रमेण समयचक्रेण सप्ताशीत्युत्तरसहस्रतमे (१०८७) वैक्रमाब्दे सशोकं शोकसहितं सकष्टं क्लेशसहितं च प्राणान् असून् त्यक्तवति परित्यक्तवति महामदे महामदनामके यवने, गोरदेशवासी गोरदेशवास्तव्यः कश्चित् कश्चन शहाबुद्दीननामा शहाबुद्दीनाभिधेयः प्रथमम् आदौ गजिनीदेशं गजिनीराजधानीम् आक्रम्य समाक्रम्य महामदकुलं महामूदवंशं धर्मराजलोकाध्वन्यध्वनीनं यमलोकमार्गपथिकं विधाय कृत्वा सर्वाः प्रजाः सर्वान् नागरिकान् च पशुमारं पशुवत्प्रहारेण मारयित्वा निहत्य तद्रुधिरार्द्रमृदा प्रजारक्तार्द्रभूम्या गोरदेशे गोरनामके देशे बहून् अनेकान् गृहान् गेहान् निर्माय विधाय

चतुरङ्गिण्या हस्त्यश्वरथपदातिकया अनीकिन्या सेनया भारतवर्षं भारताख्यदेशं प्रविश्य निविश्य शीतलशोणितान् अपि अनुष्णरक्तान् अपि असयन् असिना मारयन् पञ्चाशदुत्तरद्वादशतमितेऽब्दे (१२५०) इत्येतत्संख्यके संवत्सरे दिल्लीं दिल्लीनामिकां अश्वयाम्बभूव अधिकृतवान्।

**व्याख्यानम् -**

१०८७ -तमे वर्षे महामुदस्य मृत्यो परं गोरदेशवास्तव्यः शहाबुद्दीनाभिधेयः गजिनीराजधानीं गत्वा महामुदवंशीयान् हतवान्। ततः प्रजाजनान् पशुवत् प्रहृत्य अनेकसैन्यसहितः भारतवर्षं प्रविवेश। तत्र च अनुग्रस्वभावान् अपि असिना मारयन् १२५० इत्येतत्संख्यके संवत्सरे दिल्लीम् अधिकृतवान्।

**व्याकरणविमर्शः**

- शहाबुद्दीननामा – शहाबुद्दीनः नाम यस्य स शहाबुद्दीननामा इति बहुव्रीहिः।
- पशुमारम् - पशूपपदे मृधातोः "उपमाने कर्मणि च" इत्यनेन सूत्रेण णमुलि पशुमारम् इति रूपम्।
- तद्रुधिरार्द्रमृदा - तेषां रुधिराणि तद्रुधिराणि इति षष्ठीतत्पुरुषः। तैरार्द्रमिति तृतीयातत्पुरुषः। तादृशी मृद्, तया इति कर्मधारयः।
- शीतलशोणितान् - शीतलानि शोणितानि येषां ते शीतलशोणिताः, तान् इति बहुव्रीहिसमासः।
- अश्वयाम्बभूव – तेनातिक्रामतीत्यर्थे अश्वशब्दात् णिचि ततश्च लिटि भूधातोरनुप्रयोगे आमि प्रथमपुरुषैकवचने अश्वयाम्बभूव इति रूपम्।

**कोषः**

- "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः।
- "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि" इत्यमरः।
- "संवत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः।

## पाठगतप्रश्नाः

१९. महामदः कस्मिन् वैक्रमाब्दे प्राणान् त्यक्तवान्।

२०. महामदमृत्योः परं कः गजनीम् आक्रान्तवान्।

२१. कदा च शहाबुद्दीनः दिल्लीश्वरः संवृत्तः।

२२. शीतलशोणितान् इत्यत्र कः समासः।

## ११.८) साम्प्रतं मूलपाठमवच्छाम - २३

**ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रञ्च पारस्परिकविरोधज्वरग्रस्तं विस्मृतराजनीतिं भारतवर्षदुर्भाग्यायमाणमाकल-य्यानायासेनोभावपि विशस्य, वाराणसीपर्यन्तमखण्डमण्डलमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गीचकार। तेन**

**वाराणस्यामपि बहवोऽस्थिगिरयः प्रचिताः रिङ्गत्तरङ्गभङ्गा गङ्गाऽपि शोणितशोणा शोणीकृता, परस्सहस्राणि च देवमन्दिराणि भूमिसात्कृतानि। स एव प्राधान्येन यावनराज्याङ्कुरारोपकोऽभूत्। तस्यैव च कश्चित् क्रीतदासः कुतुबुद्दीननामा प्रथमभारतसम्राट् सञ्जातः**

**अन्वयार्थः -**

ततः तस्मात्परं दिल्लीश्वरं दिल्लीप्रदेशाधिपं पृथ्वीराजम् एतन्नामकं चौहानवंशीयं राजानम्, कान्यकुब्जेश्वरं कान्यकुब्जदेशस्याधिपं जयचन्द्रम् एतन्नामकं पारस्परिकविरोधज्वरग्रस्तम् अन्योन्यविरोधज्वरकवलितं विस्मृतराजनीतिं क्षात्रकार्यानभिज्ञं भारवर्षदुर्भाग्यायमाणं भारतवर्षस्य दुर्दशां समागच्छन्तीम् आकलय्य ज्ञात्वा अनायासेन विना श्रमम् उभौ अपि द्वौ अपि पृथ्वीराजजयचन्द्रौ विशस्य विनाश्य वाराणसीपर्यन्तं काशीं यावत् अखण्डमण्डलं समस्तजनपदम् अकण्टकं विघ्नरहितम् अकीटकिट्टं कीटकिट्टशून्यं महारत्नम् इव महामणिम् इव महाराज्यं विस्तृतं साम्राज्यम् अङ्गीचकार स्वीकृतवान्। तेन आक्रमणकारिणा शहाबुद्दीनेन वाराणस्याम् अपि काशीनगर्याम् अपि बहवः अत्यधिकाः अस्थिगिरयः कीकसपर्वताः प्रचिता निर्मिताः। रिङ्गत्तरङ्गभङ्गा चञ्चलोर्मिबहुला गङ्गा अपि भागीरथी अपि शोणितशोणा रक्तरञ्जिता शोणीकृता शोणनदतां प्रापिता, परस्सहस्राणि च सहस्राद् अप्यधिकानि च देवमन्दिराणि देवतायतनानि भूमिसात्कृतानि खण्डितानि। स एव शहाबुद्दीन एव प्राधान्येन प्रमुखतया भारते एतन्नामके भारतवर्षे यवनराज्याङ्कुरारोपकः यवनशासनस्य बीजारोपकारी अभूत् बभूव। तस्य एव शहाबुद्दीनस्य एव कश्चिद् एकः क्रीतदासः अनुचरः कुतुबुद्दीननामा कुतुबुद्दीनाभिधेयः प्रथमभारतसम्राट् भारतवर्षस्य आदिमः अधिपतिः सञ्जातः अभवत्।

**व्याख्यानम् -**

शत्रवो हि छिद्रमास्थाय प्रविशन्ति। एवमेव पृथ्वीराज-जयचन्द्रयोः भेदच्छिद्रम् अवलम्ब्य शहाबुद्दीनेन यवनभूपेन भारतमाक्रान्तम्। तेन हि सर्वान् भारतीयान् पराजित्य स्वराज्यं निष्कण्टकं कृतम्। शहाबुद्दीनेन काशीनगर्याम् अपि अत्यधिकाः अस्थिगिरयः निर्मिताः। तरङ्गबहुला भागीरथी अपि रक्तरञ्जिता शोणनदतां प्रापिता। सहस्राद् अप्यधिकानि देवतायतनानि विखण्डितानि। शहाबुद्दीन एव प्राधान्येन प्रमुखतया भारतवर्षे यवनशासनस्य अङ्कुरारोपकारी अभूत्। शहाबुद्दीनस्य एव कुतुबुद्दीननामकः अनुचरः भारतवर्षस्य आदिमः अधिपः अभवत्।

**व्याकरणविमर्शः**

- विस्मृतराजनीतिम् - विस्मृता राजनीतिः येन स विस्मृतराजनीतिः, तमिति बहुव्रीहिसमासः।
- विशस्य - विपूर्वात् शसेः क्त्वोल्यपि विशस्य इति रूपम्।
- रिङ्गत्तरङ्गभङ्गा - तरङ्गाणां भङ्गाः तरङ्गभङ्गा इति षष्ठीतत्पुरुषः। रिङ्गन्तः तरङ्गभङ्गा यस्याः सा रिङ्गत्तरङ्गभङ्गा इति बहुव्रीहिः।

**कोषः**

- "किट्टं मलेऽस्त्रियाम्" इत्यमरः।



- "कीकसं कुल्यमस्थि च" इत्यमरः।
- "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः।

## पाठगतप्रश्नाः

२३. यावनकाले दिल्लीश्वरः कः।

२४. यावनकाले कान्यकुब्जेश्वरः कः।

२५. शहाबुद्दीनेन गङ्गा कीदृशी विहिता।

२६. यवनशासनस्य भारते अङ्कुरारोपकः कः।

२७. को भारतस्य प्रथमः यवनसम्राट्।

२८. रिङ्गत्तरङ्गभङ्गा इत्यत्र कः समासः।

## ११.९) साम्प्रतं मूलपाठमवच्छाम - २४

तमारभ्याद्यावधि राक्षसा एव राज्यमकार्षुः। दानवा एव च दीनानदीदलन्। अभूत् केवलम् अकबरशाह-नामा यद्यपि गूढशत्रुर्भारतवर्षस्य तथापि शान्तिप्रियो विद्वत्प्रियश्च। अस्यैव प्रपौत्रो मूर्तिमदिव कलियुगम्, गृहीतविग्रह इव चाधर्मः, आलमगीरोपाधिधारी अवरङ्गजीवः सम्प्रति दिलीवल्लभतां कलङ्कयति। अस्यैव पताका केकयेषु, मत्स्येषु, मगधेषु, अङ्गेषु बङ्गेषु कलिङ्गेषु च दोधूयन्ते, केवलं दक्षिणदेशेऽधुनाऽप्यस्य परिपूर्णो नाधिकारः संवृत्तः।

**अन्वयार्थः -**

तं कुतुबुद्दीननामकम् आरभ्य अद्यावधि साम्प्रतं पर्यन्तं राक्षसा एव धर्मविरोधिनः यवना एव राज्यं शासनम् अकार्षुः कृतवन्तः। दानवाः धर्मविरोधिनः एव च दीनान् दुःखग्रस्तान् अदीदलन् नाशितवन्तः। केवलम् एकाकी अकबरशाह-नामा एतन्नामको नृपः यद्यपि भारतवर्षस्य भारतदेशस्य गूढशत्रुः प्रच्छन्नशत्रुः तथापि शान्तिप्रियः शमरतः विद्वत्प्रियः पण्डितप्रियः च अभूत् आसीत्। अस्य एव अकबरशाहनामकस्य एव प्रपौत्रः तनयात्मजः मूर्तिमद् इव सविग्रह इव कलियुगं कलिकालः, गृहीतविग्रहः धृतवपुष्कः अधर्मः इव पापः इव, आलमगीरोपाधिधारी आलमगीर इत्युपनाम्ना प्रसिद्धः अवरङ्गजीवः अवरङ्गजीवाभिधेयः सम्प्रति इदानीं दिलीवल्लभतां दिल्लीश्वरतां कलङ्कयति दूषयति। अस्य एव अवरेङ्गजीवस्य एव पताका ध्वजः केकयेषु पञ्जाबदेशे, मत्स्येषु मत्स्यदेशे, मगधेषु मगधदेशे, अङ्गेषु अङ्गदेशे बङ्गेषु बङ्गदेशेषु कलिङ्गेषु कलिङ्गदेशे च दोधूयन्ते पौनःपुण्येन समुच्छ्रियन्ते, केवलं दक्षिणदेशे दक्षिणप्रदेशे अधुना इदानीम् अस्य म्लेच्छनृपस्य अबरङ्गजीबस्य परिपूर्णः समग्ररूपेण अधिकारः प्रशासनाधिकारः न संवृत्तः न सम्पन्नः।

**व्याख्यानम् -**

कुतुबुद्दीनाद् आरभ्य यवनराज्यम् तदानीमपि इति ज्ञापितवान् ब्रह्मचारिगुरुः। दुष्टेषु यवनशासकेषु एकः अकबरशाहनामको नृपः शान्तिप्रिय आसीत्। तस्य प्रपौत्रः अत्यन्ततया दुष्टः राज्यशासनं तदा कुर्वन् आसीत्।तस्य ध्वज एव केकेय-मत्स्य-मगध-अङ्ग-बङ्ग-कलिङ्गदेशेषु उत्तोलित आसीत्। केवलं दक्षिणप्रदेशे अबरङ्गजीबस्य परिपूर्णः अधिकारः नासीत्।

**व्याकरणविमर्शः**

- गूढशत्रुः - गूढश्चासौ शत्रुश्च गुढशत्रुः इति कर्मधारयः।
- विद्वत्प्रियः - विद्वांसः प्रिया यस्य स विद्वत्प्रियः इति बहुव्रीहिः।
- गृहीतविग्रहः - गृहीतो विग्रहो येन स गृहीतविग्रहः इति बहुव्रीहिः।
- अदीदलन् - दल विदारणे इति धातोः लुङि झिप्रत्यये अदीदलन् इति रूपम्।
- दोधूयन्ते - धूञ् कम्पने इति धातोः यङि प्रथमपुरुषबहुवचने दोधूयन्ते इति रूपम्।।

**कोषः**

- “असुरा दैत्यदैतेयदनुजेन्द्रारिपर्वताः” इत्यमरः।

## पाठगतप्रश्नाः

२९. यवननृपेषु को विद्वत्प्रियः।

३०. कः दिल्लीवल्लभतां कलङ्कयति।

३१. कुत्र कुत्र अवरङ्गजीवस्य पताका आसीत्।

## ११.१०) साम्प्रतं मूलपाठमवच्छाम - २६

**दक्षिणदेशो हि पर्वतबहुलोऽस्ति अरण्यानीसङ्कुलश्चास्तीति चिरोद्योगेनापि नायमशकन्महाराष्ट्रकेसरिणो हस्तयितुम्। साम्प्रतमस्यैवाऽऽत्मीयो दक्षिणदेशशासकत्वेन 'शास्तिखान'-नामा प्रेष्यत इति श्रूयते। महाराष्ट्रदेशरत्नम्, यवन-शोणित-पिपासाऽऽकुलकृपाणः, वीरता-सीमन्तिनी-सीमन्त-सुन्दर-सान्द्र-सिन्दूर-दान-देदीप्यमान-दोर्दण्डः, मुकुटमणिर्महाराष्ट्राणां, भूषणं भटानां, निधिर्नीतीनाम् कुलभवनं कौशलानां पारावारः परमोत्साहानां कश्चन प्रातःस्मरणीयः स्वधर्माऽऽग्रहग्रहग्रहिलः, शिव इव धृतावतारः शिववीरश्चास्मिन्पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति। विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धवैरम्। 'कार्यं वा साधयेयं देहं वा पातयेयम्' इत्यस्य सारगर्भा महती प्रतिज्ञा। सतीनां, सतां त्रैवर्णिकस्य, आर्यकुलस्य, धर्मस्य भारतवर्षस्य च आशा-सन्तान-वितानस्यायमेवऽऽश्रयः। इयमेव**

**वर्तमाना दशा भारतवर्षस्य। किमधिकम् विनिवेदयामो योगबलावगतसकलगोप्यतमवृत्तान्तेषु योगिराजेषु इति कथयित्वा विरराम।**

### अन्वयार्थः -

दक्षिणदेशो भारतस्य दक्षिणप्रदेशो हि निश्चयेन पर्वतबहुलः गिरिप्रचुरः अस्ति अरण्यानीसङ्कुलः महारण्यव्याप्तः च पुनः अस्ति वर्तते इति अनेन कारणेन चिरोद्योगेन बहुधा प्रयासेन अपि अयम् अबरङ्गजीवः न नहि अशकत् समर्थः अभवत् महाराष्ट्रकेसरिणः महाराष्ट्रसिंहान् हस्तयितुं वशीकर्तुम्। साम्प्रतम् इदानीम् अस्य एव अबरङ्गजीवस्य आत्मीयः प्रियः दक्षिणदेशशासकत्वेन 'शास्तिखान'-नामा प्रेष्यत सम्प्रेष्यते इति श्रूयते इति आकर्ण्यते। महाराष्ट्रदेशरत्नं महाराष्ट्रादेशस्य चूडामणिः, यवन-शोणित-पिपासाऽऽकुलकृपाणः म्लेच्छरक्तपानेच्छाकुलखड्गकः, वीरता-सीमन्तिनी-सीमन्त-सुन्दर-सान्द्र-सिन्दूर-दान-देदीप्यमान-दोर्दण्डः शूरताङ्गनाकेशवेशरम्यघननागकेशरचर्चनदेदीप्यमानभुजखण्डः, महाराष्ट्राणां महाराष्ट्रदेशवास्तव्यानां जनानां शेखररत्नसदृशः, भटानां शूराणां भूषणम् अलङ्कारः, नीतीनां राजनयानां निधिः कोषः, कौशलानां दक्षतानां कुलभवनम्, पारावारः समुद्रः परमोत्साहानाम् उत्कृष्टोत्साहानाम्, कश्चन प्रातःस्मरणीयः अत्यन्तं माननीयः स्वधर्माग्रहग्रहग्रहिलः सनातनधर्मस्य दृढतया परिपालकः, शिव इव शङ्कर इव धृतावतारः स्वीकृतावतारः, शिववीरः तन्नामकः अस्मिन् नेदीयसि एव अस्मिन् सन्निकर्षे एव सिंहदुर्गे सिंहगढनामके दुर्गे ससेनः सेनासहितः निवसति। विजयपुराधीश्वरेण विजयपुरशासकेन साम्प्रतम् इदानीम् अस्य शिववीरस्य प्रवृद्धं समुपबृंहितं वैरं शत्रुत्वम्। 'कार्यं स्वतन्त्रताप्राप्तिरूपं कर्म वा साधयेयं सिद्धं विधास्यामः, देहं कायं वा पातयेयम् पातयिष्यामः' इति अस्य शिववीरस्य सारगर्भा सारसमन्विता महती प्रतिज्ञा भीषणः सङ्कल्पः। सतीनां कुलव्रतानाम्, सतां सज्जनानाम्, त्रैवर्णिकस्य ब्राह्मणक्षत्रियवैश्यात्मकस्य, आर्यकुलस्य आर्यसमाजस्य, धर्मस्य सनातनहिन्दुधर्मस्य भारतवर्षस्य भारतप्रदेशस्य च आशा-सन्तान-वितानस्य आशापरम्पराविस्तरणस्य अयं शिववीरः आश्रयः आधारः। इयम् एव एषा एव भारतवर्षस्य भारतदेशस्य वर्तमाना दशा इदानीन्तनदशा। किमधिकं कियद्बहुलं विनिवेदयामः सूचयामः योगिराजेषु योगिवरेषु योगबलावगतसकलगोप्यतमवृत्तान्तेषु ध्यानबलावगताखिलरहस्यमयवृत्तेषु इति एवं प्रकारेण कथयित्वा उक्त्वा विरराम विरतवान्।

### व्याख्यानम् -

दक्षिणदेशो गिरिप्रचुरः महारण्यव्याप्तः चासीत् अत एव अबरङ्गजीवः तस्याधिकारे असमर्थः। तत्र अबरङ्गजीवस्य प्रियः दक्षिणदेशशासकत्वेन 'शास्तिखान'-नामा आसीत्। तत्र महाराष्ट्रदेशरत्नभूतः म्लेच्छरक्तपानेच्छासम्पन्नः, महाराष्ट्रदेशवास्तव्यानां शेखररत्नभूतः, भटानाम् अलङ्कारः, राजनयानां निधिः इत्येवम्भूतः प्रातःस्मरणीयः सनातनधर्मस्य दृढतया परिपालकः शिव इव शिववीरः आसीत्। स सिंहदुर्गे निवसन्नासीत्। तेन विजयपुराधीशस्य शत्रुत्वं वर्धितम्। 'कार्यं वा साधयेयं देहं वा पातयेयम्' इति शिववीरस्य सारगर्भः भीषणः सङ्कल्पः। स एव आर्याणाम् आश्रयः। एवं प्रकारेण योगिराजं कथयित्वा ब्रह्मचारिगुरुः विरतवान्।

**व्याकरणविमर्शः**

- पर्वतबहुलः - पर्वतैर्बहुलः पर्वतबहुलः इति तृतीयातत्पुरुषः।
- अरण्यानीसङ्कुलः - महद् अरण्यम् अरण्यानीति इन्द्रवरुणेति सूत्रेण आनुकि ङीपि अरण्यानीशब्दः। अरण्यान्या सङ्कुलः अरण्यानीसङ्कुलः इति तृतीयातत्पुरुषह।
- महाराष्ट्रदेशरत्नम्- महाराष्ट्रदेशस्य रत्नम् इति कर्मधारयसमासः।
- यवनशोणितपिपासाकुलकृपाणः - यवनानां शोणितं यवनशोणितम् इति षष्ठीतत्पुरुषः। तस्य पिपासा इति षष्ठीतत्पुरुषः। तया आकुलः इति तृतीयातत्पुरुषः। तादृक् कृपाणो यस्य स इति बहुव्रीहिः।

## पाठगतप्रश्नाः

३२. दक्षिणदेशः कीदृश आसीत्।

३३. दक्षिणदेशशासकत्वेन यवनराजेन को नियुक्तः।

३४. शिववीरः मुकुटमणिः कस्य आसीत्।

३५. शिववीरः कुत्र निवसति स्म।

३६. शिववीरः कीदृशः।

## पाठसारः

योगिराजो भारतवर्षस्य इदानीन्तनस्थितिं ज्ञातुं ब्रह्मचारिगुरुं पृष्टवान्। तदा ब्रह्मचारिगुरोः अवस्था अत्र वर्णिता। स हि भारतवर्षस्य यवनकृतायाः अवस्थाया वर्णनावसरे अत्यन्तं दुःखमनुभूतवान्।

ब्रह्मचारिगुरुः अत्र सनातनधर्मावलम्बिनाम् आर्याणां विषये खेदं प्रस्तुतवान्। स कथितवान यद् वज्रनिर्मिता हि तस्य रसना। अन्यथा तु भारतीयेषु दुष्टानां यवनानाम् अत्याचारस्य वर्णनेन सा भिन्ना भवेत्। एवमेव आर्याणां हृदयमपि वज्रसारम्। अतः एव यवनानाम् अत्याचारं स्मृत्वा अपि तद् अनेकप्रकारेण न भिन्नम्। न हि तद् हृदयम् अग्निना दग्धम्। एवमेव आश्रमवासिनः ते निन्द्याः, यतो हि अस्मिन् यवनात्याचारसमये अपि ते आर्यवंशीयाः वयम् इति साभिमानं जीवनधारणं, श्वासधारणं सञ्चरणं च कुर्वन्ति।

ततः मुनिः स ब्रह्मचारिगुरुं प्रति उक्तवान् वस्तुतो हि कालगतिः अननुमेया। सम्प्रति तु कालवशादेव तत्सर्वं प्रनष्टम्। तटप्रपात इव कालकृतिर्भवति भङ्गुरा। अत एव कालवशेन एव भवति सनातनधर्मस्य पीडनम् इति विविच्य धैर्यधारणं कर्तव्यम्

अत्र महामदस्य भारताक्रमणं सोमनाथमन्दिरस्य लुण्ठनं च वर्णितम्। यदा धैर्यं प्रसन्नता प्रतापः तेजः, विक्रमः धर्मः इत्यादिगुणानाम् आश्रयः विक्रमादित्यः स्वर्गलोकं गतवान् तदा कश्चित् गजिनीनामकस्य स्थानस्य राजा महामदः सैन्यानि स्वीकृत्य भारतवर्षम् आगतवान्। स द्वादशवारं भारतर्षं प्रति आक्रान्तवान्। तदा एकवारं स गुर्जरप्रदेशस्य विख्यातस्य सोमनाथमन्दिरस्य लुण्ठनं कृतवान्। स गदया महादेवमूर्तिं नाशितवान्।

महादेवविग्रहे गदाघाताद् अनन्तरमेव तत्रत्याः पूजका महामदं प्रार्थितवन्तः यत् यथा महादेवमूर्तिः भग्ना न भवेत्। महामदः तथा वार्तां नैव श्रुतवान्। गदया स यदा महादेवमूर्तौ आघातम् अकरोत् तदा तत्तः बहुमूल्यानि रत्नानि समन्तात् विस्तृतानि। स पाप्मा तानि रत्नानि मदादेवस्य मूर्तिखण्डम् अपि उष्ट्रस्य पृष्ठे संस्थाप्य स्वस्य राजधानीं गजिनीं गतवान्।

१०८७ -तमे वर्षे महामुदस्य मृत्यो परं गोरदेशवास्तव्यः शहाबुद्दीनाभिधेयः गजिनीराजधानीं गत्वा महामुदवंशीयान् हतवान्। ततः प्रजाजनान् पशुवत् प्रहृत्य अनेकसैन्यसहितः भारतवर्षं प्रविवेश। तत्र च अनुग्रस्वभावान् अपि असिना मारयन् १२५० इत्येतत्संख्यके संवत्सरे दिल्लीम् अधिकृतवान्। स शहाबुद्दीन एव प्राधान्येन प्रमुखतया भारतवर्षे यवनशासनस्य अङ्कुरारोपकारी अभूत्। शहाबुद्दीनस्य एव कुतुबुद्दीननामकः अनुचरः भारतवर्षस्य आदिमः अधिपः अभवत्।

कुतुबुद्दीनाद् आरभ्य यवनराज्यं प्रवृत्तम्। दुष्टेषु यवनशासकेषु एकः अकबरशाहनामको नृपः शान्तिप्रिय आसीत्। तस्य प्रपौत्रः अत्यन्ततया दुष्टः राज्यशासनं तदा कुर्वन् आसीत्। तस्य ध्वज एव केकेय-मत्स्य-मगध-अङ्ग-बङ्ग-कलिङ्गदेशेषु उत्तोलित आसीत्। केवलं दक्षिणप्रदेशे अबरङ्गजीबस्य परिपूर्णः अधिकारः नासीत्।

दक्षिणदेशो गिरिप्रचुरः महारण्यव्याप्तः चासीत् अत एव अबरङ्गजीवः तस्याधिकारे असमर्थः। तत्र अबरङ्गजीवस्य प्रियः दक्षिणदेशशासकत्वेन 'शास्तिखान'-नामा आसीत्। तत्र महाराष्ट्रदेशरत्नभूतः म्लेच्छरक्तपानेच्छासम्पन्नः, महाराष्ट्रदेशवास्तव्यानां शेखररत्नभूतः, भटानाम् अलङ्कारः, राजनयानां निधिः इत्येवम्भूतः प्रातःस्मरणीयः सनातनधर्मस्य दृढतया परिपालकः शिव इव शिववीरः आसीत्। स सिंहदुर्गे निवसन्नासीत्। तेन विजयपुराधीशस्य शत्रुत्वं वर्धितम्। 'कार्यं वा साधयेयं देहं वा पातयेयम्' इति शिववीरस्य सारगर्भः भीषणः सङ्कल्पः। स एव आर्याणाम् आश्रयः। एवं प्रकारेण योगिराजं कथयित्वा ब्रह्मचारिगुरुः विरतवान् इति पाठसारः।

## पाठान्तप्रश्नाः

१. सोमनाथमन्दिरलुण्ठनवृत्तान्तं वर्णयत।

२. महामदस्य भारताक्रमणं वर्णयत।

३. दक्षिणदेशं वर्णयत।

४. अथ "वीर, गृहीतमखिलं वित्तम्, पराजिता आर्यसेनाः, बन्दीकृता वयम्, सञ्चितममलं यशः,

इतोऽपि न शाम्यति ते क्रोधश्चेदस्मान् ताडय, मारय, छिन्धि, भिन्धि, पातय, किन्तु त्यजेमाम् अकिञ्चित्करीं जडां महादेवप्रतिमाम्। यद्येवं न स्वीकरोषि तद् गृहाणास्मत्तोऽन्यदपि सुवर्णकोटिद्वयम्, त्रायस्व, मैनां भगवन्मूर्तिं स्प्राक्षीः" - इति साम्रेडं कथयत्सु रुदत्सु पतत्सु विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषु - "नाहं मूर्तिं विक्रीणामि, किन्तु भिनद्मि" इति सङ्गर्ज्य जनताया हाहाकारकलकलमाकर्णयन् घोरगदया मूर्तिमतुत्रुटत्। गदापातसमकालमेव चानेकार्बुदपद्मसुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त। स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिन्धुनदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत्। - इति व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

१. आर्याणां दम्भोलिघटिता रसना।
२. आर्याणां वज्रसारमयं हृदयम्।
३. दम्भोलिना घटिता दम्भोलिघटिता इति तृतीयातत्पुरुषः।
४. सकलानर्थमयः, सकलवञ्चनामयः, सकलपापमयः सकलोपद्रवमयश्च यवनदुराचारवृत्तान्तः।
५. विलक्षणो भगवान् सकल-कला-कलाप-कलनः सकलकालनः करालः कालः।
६. सिंह-व्याघ्र-भल्लूक-गण्डक-फेरु-शश-सहस्रव्याप्तानि अरण्यानि जनपदीकरोति कालः।
७. मन्दिर-प्रासाद-हर्म्य-शृङ्गाटक-चत्वरोद्यानतडागगोष्ठमयानि नगराणि च काननीकरोति।
८. विक्रमादित्यः धैर्येण प्रसादेन प्रतापेन तेजसा वीर्येण विक्रमेण शान्त्या श्रिया सौख्येन धर्मेण विद्यया च सह परलोकं गतः।
९. गजिनीनामकं स्थानं गजिनीस्थानमिति शाकपार्थिवादिवत्समासः। तत्र निवासी इति सप्तमीतत्पुरुषः।
१०. राज्ञां परस्परवैरं यदा प्रवृद्धं तदा गजिनीस्थाननिवासी महामदः भारतवर्षम् आक्रान्तवान्।
११. भारतवर्षाक्रमणात्परं महामदः भारतीयान् मारयित्वा मन्दिराणि प्रतिमाः च नाशयित्वा, बहून् जनान् स्वस्य दासरूपेण अङ्गीकृत्य बहूनि रत्नानि च बलात् स्वीकृत्य गजिनीस्थानं प्रति अगच्छत्।
१२. महामदः द्वादशवारं भारतस्य विलुण्ठनं कृतवान्।
१३. महामदः गुर्जरदेशचूडायितं सोमतीर्थं धूलीचकार।
१४. महामदः सोमनाथमन्दिरस्य द्विशतसुवर्णपरिमितां घण्टां स्वीकृतवान्।
१५. गुर्जरदेशस्य चूडायितं गूर्जरदेशचूडायितम् इति षष्ठीतत्पुरुषः।
१६. शिवमूर्तिस्पर्शनिषेधाय अनुरुद्धः महामदः "नाहं मूर्तिं विक्रीणामि, किन्तु भिनद्मि" इति उक्तवान्।

१७. मूर्तौ गदापातात्परमेव अनेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्याद् उच्छलितानि परितः अवकीर्णानि।

१८. दग्धं मुखं यस्य स दग्धमुखः इति बहुव्रीहिसमासः।

१९. महामदः सप्ताशीत्युत्तरसहस्रतमे (१०८७) वैक्रमाब्दे प्राणान् त्यक्तवान्।

२०. महामदमृत्योः परं गोरदेशनिवासी शहाबुद्दीनः गजनीम् आक्रान्तवान्।

२१. पञ्चाशदुत्तरद्वादशतमितेऽब्दे (१२५०) शहाबुद्दीनः दिल्लीश्वरः संवृत्तः।

२२. शीतलानि शोणितानि येषां ते शीतलशोणिताः, तान् इति बहुव्रीहिसमासः।

२३. यावनकाले दिल्लीश्वरः पृथ्वीराजः।

२४. यावनकाले कान्यकुब्जेश्वरः जयचन्द्रः।

२५. शहाबुद्दीनेन गङ्गा शोणितशोणा विहिता।

२६. यवनशासनस्य भारते अङ्कुरारोपकः शहाबुद्दीनः।

२७. कुतुबुद्दीनः भारतस्य प्रथमः यवनसम्राट्।

२८. रिङ्गत्तरङ्गभङ्गा - तरङ्गाणां भङ्गाः तरङ्गभङ्गा इति षष्ठीतत्पुरुषः। रिङ्गन्तः तरङ्गभङ्गा यस्याः सा रिङ्गत्तरङ्गभङ्गा इति बहुव्रीहिः।

२९. अकबरशाह-नामा गूढशत्रुर्भारतवर्षस्य तथापि शान्तिप्रियो विद्वत्प्रियश्च।

३०. अकवरशाह-नामकस्य प्रपौत्रो मूर्तिमदिव कलियुगम्, गृहीतविग्रह इव चाधर्मः, आलमगीरोपाधिधारी अवरङ्गजीवः सम्प्रति दिलीवल्लभतां कलङ्कयति।

३१. अवरङ्गजीवस्य पताका केकयेषु, मत्स्येषु, मगधेषु, अङ्गेषु बङ्गेषु कलिङ्गेषु च आसीत्।

३२. दक्षिणदेशः पर्वतबहुलः अरण्यानीसङ्कुलश्चासीत्।

३३. दक्षिणदेशशासकत्वेन यवनराजेन शास्तिखान-नामको नियुक्तः।

३४. शिववीरः महाराष्ट्राणां मुकुटमणिरासीत्।

३५. शिववीरः सिंहदुर्गे ससेनो निवसति स्म।

३६. शिववीरः सतीनां सतां त्रैवर्णिकस्य आर्यकुलस्य, धर्मस्य भारतवर्षस्य च आशा-सन्तान-वितानस्य आश्रयः।

।।इति एकादशः पाठः।।